॥ श्रीः ॥

तर्कशास्त्रसाम्राज्यधुरन्धरमहामहोपाध्यायविद्वद्वर-

श्रीगदाधरभट्टाचार्यप्रणीतः

प्रकृतिशक्तिनिरूपणपरः

# शक्तिवादः

( शब्दखण्डग्रन्थः )

—»॥०॥«—

पञ्चनदीय( पजाबी )पण्डितसुदर्शनाचार्यशास्त्रिप्रणीतया

## आदर्शाख्यव्याख्यया

सवलितः

स चैष

खेमराजश्रीकृष्णदासश्रेष्ठिना

बंबईनगरे

( खेतवाडी सातवीं गली खबाटा लैन )

स्वकीयश्रीवेङ्कटेश्वरयन्त्रालये मुद्रयित्वा

प्रकाशितः

वैक्रमसंवत् १९७०

॥ श्रीः ॥

# भूमिका

अये गीर्वाणवाग्वल्लिलालितालवालकल्पा अनल्पादरकीर्त्यादिकमनीयगुणगणार्णवा विद्याविन्दवो विभूषितवसुन्धरा. !

विदितमेवैतत् तत्रभवतां यत् सर्वं हि वक्तव्य श्रोतव्य च शब्दाधीनमेव उक्त चाभियुक्तैः.—

" न सोऽस्ति प्रत्ययो ( ज्ञानम् ) लोके य शब्दानुगमादृते ।
अनुविद्धमिव ज्ञान सर्वं शब्देन भासते ॥ " इति ।

स च शब्द. किं च कथं च बोधयतीति शब्दखण्डेन निरूप्यते, शब्दोऽपि प्रकृतिप्रत्ययभेदेन द्वौ भागौ तत्र प्रत्ययार्थस्य श्रीगदाधरभट्टाचार्येण व्युत्पत्तिवादे निरूपण कृतम् ( तस्यापि मयाऽऽदर्शाख्या व्याख्या विरचितास्ति ) प्रकृत्यर्थस्य शक्तेश्चात्र शक्तिवादे, अस्य च ग्रन्थस्य सामान्यकाण्डविशेषकाण्डभेदेन भागद्वये यथाक्रम सामान्यविशेषशब्दाना शक्तिविचार, कृत , अन्ते च मीमांसकमतमपि पूर्वपूर्वमतखण्डनपुरस्सरमुपन्यस्त किं तु ज्ञानशक्तिवादस्य सर्वोत्तनिक्षिप्तस्य खण्डन नोपलभ्यते तस्य कारण न विज्ञायते किं नष्टः स भाग किं वा ग्रन्थकारेणैव केनचित्कारणेन न निर्मित इति ।

अस्य च शक्तिवादस्य ये खलु मयाऽर्था विद्यागुरुभ्यो महामहोपाध्याय श्री आई ई श्री ७ श्रीगङ्गाधरशास्त्रिचरणेभ्योऽणुमात्रमवगतास्तान् स्वकीयज्ञानरक्षार्थं सङ्कलय्याऽऽदर्शसमाख्येय व्याख्या केवल छात्राणामुपयोगार्थं प्रकाशितास्ति । एते चार्थाः प्राय काशीस्थवैयाकरणकेसरिसाम्प्रदायिका एव । मूलपाठोऽप्या समाप्ति यथामति प्राक्तनलिखितानेकपुस्तकसाहाय्येन संशोधित इति मन्ये प्रीतिकर कोविदाना भविष्यतीति निवेदयन्

"न चात्रातीव कर्तव्य दोषदृष्टिपर मन ।
दोषो ह्यविद्यमानोऽपि तच्चित्ताना प्रकाशते ॥"
इत्यादीन्यत्र वाक्यानि चिन्तनीयानि कोविदै ।
शुद्ध यदत्र तद् ग्राह्य दुष्ट चास्तु ममैव मे ॥

इति विज्ञापयति—

श्रीमतीयः पञ्चनदीयः
सुदर्शनाचार्यः
काशी

अथ

# शुद्धिपत्रम्–



| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १८ | गंगा | गङ्गा |
| १७ | २८ | वाच्छेद | वावच्छेद |
| २५ | ८ | तद्थे | तदर्थे |
| ४८ | १ | संधन्धेन | संबन्धेन |
| ४८ | ९ | धर्भिता | धर्मिता |
| ४८ | १२ | सबन्ध | संबन्ध |
| ४८ | २३ | घटोवे | घटत्वे |
| ४८ | २४ | तिरूप | निरूपित |
| ४८ | २५ | सयवाये | समवाये |
| ४८ | २८ | रिजि | परिजि |
| १२८ | २५ | त्वव | यत्व |
| १३६ | ३ | ससगावे | संसर्गत्वे |
| १४२ | ११ | स्वं सर्वपदम् | (स्वं सर्वपदम) |
| १६७ | २ | भाग | भाग |
| १७६ | ३ | नप | नुप |

एतद्दिशा स्वयं शोध्यमशुद्धं यदि दृश्यते ।
अयत्नं शिष्यतेऽशुद्धिः सूक्ष्मदृष्ट्यापि दर्शने ॥

अथ

# विषयानुक्रमणिका





इति २०८

॥ श्री. ॥

" मत्सैंरक्षर्वैविदुरैर्विंदिते क नाम
ग्रन्थेस्ति दोपविरह सुचिरन्तनपि ! "

॥ श्री ॥

॥ श्री॰ ॥

अथ

सटीकः

# शक्तिवादः

॥ श्रीमते हयग्रीवाय नम. ॥

संकेतो लक्षणा चार्थे पदवृत्तिः ।

---

अथ

## ॥ शक्तिवादादर्शः ॥

॥ भगवते श्रीहयग्रीवाय नम ॥

आद्य विद्यानिदान त्रिधिनिबुधवरैर्वन्द्यमानाङ्घ्रिपद्म
धाम्नां धामेन्दवानां दनुजमुजरुजा जन्मना छद्म जिह्मम् ।
प्रज्ञालोकार्कमार्तिप्रतिकृतिममतिध्वान्तदन्त्येणशक्र
चक्र भक्ताघचक्रे हरिमिहतुरगग्रीवमुम प्रपद्ये ॥

नत्वा श्रीमद्धयग्रीव व्याख्याविघ्नविनाशनम् ।
स्मृत्वा श्रीमत्पदाम्भोज श्रीगङ्गाधरशास्त्रिणाम् ॥
करोति बालबोधार्थं मूलार्थप्रतिपादिकाम् ।
सुटीका शक्तिवादस्य ह्याऽऽदर्शाख्यां सुदर्शन॰ ॥

अथ सर्वेषा जनानां श्रुतैरपि सर्वै॰ पदैः शाब्दबोधो न जायते किं तु कैश्चिदेवेति शाब्द-ध प्रति वृत्तिप्रयोज्यपदार्थोपस्थितेरन्वयव्यतिरेकाभ्यां कारणत्वमवधार्यते तत्र का नाम वृत्ति-ति जिज्ञासायां श्रीगदाधरभट्टाचार्यो वृत्तिपदार्थनिरूपणमारभते–सकेत इति । "अर्थे" इति तम्यर्थो निरूपितत्वं पदस्य वृत्ति पदवृत्ति पष्ठ्यर्थो निष्ठत्व तथा च–अर्थनिरूपिता पदनिष्ठा या त्ति सा सकेतो लक्षणा चेत्यर्थ । तत्र घटादिनिरूपिता घटादिपदनिष्ठा वृत्ति सकेतरूपा, रादिनिरूपिता गगादिपदनिष्ठा या वृत्ति सा लक्षणारूपेति विवेक॰ । 'शक्तिर्लक्षणा चार्थे दवृत्ति' इत्युक्ते शक्तेरीश्वरसकेतरूपत्वेन पित्रादिकृतानामाधुनिकसकेतानां सग्रहो न स्यादिति दुभयसग्रहार्थम् "सकेत" इत्युक्तम् ।

वृत्तिपदस्य चात्र वृत्तिपदव्यवहार्य एवार्थ, अन्यथाऽर्थनिरूपितत्वमेव वृत्तित्वमिति वृत्ति-दार्थज्ञानार्थमर्थपदार्थज्ञानापेक्षा अर्थस्य च वृत्त्या पदप्रतिपाद्यत्वमित्यर्थपदार्थज्ञानार्थं वृत्तिपदार्थ-

'इदं पदमिममर्थं बोधयतु' इति 'अस्माच्छब्दादयमर्थो बोद्धव्यः' इति वेच्छा संकेतरूपा वृत्तिः। तत्र-आधुनिकसंकेतः परिभाषा तया चार्थबोधकं पदं पारिभाषिकं यथा शास्त्रकारादिसंकेतितनदीवृद्ध्यादिपदम्। ईश्वरसंकेत शक्तिस्तया चार्थबोधकं पदं वाचकं यथा गोत्वादिविशिष्टबोधकं गवादिपदं तद्बोध्योऽर्थो गवादिर्वाच्यः स एव मुख्यार्थ इत्युच्यते।

---

रुपादीनां घटादिपदार्थत्ववारणमवधेयम्। प्रतीतिभेदेन शाब्दबोधग्रहणे च 'घटादिपदजन्यवच्छेदकविषयतावत्त्वं घटादिपदार्थत्वम्' इत्येवं वक्तव्यं घटादिपदजन्यशाब्दबोधनिष्ठा या न्यता तदवच्छेदकत्वं च घटादिविषयताया एव संभवति-अन्यूनानतिप्रसक्तत्वात् न तु नीलादिविषयतायास्तस्याः 'पीतो घटः' इत्यत्रासत्त्वेन न्यूनवृत्तित्वात् 'नीलः पटः' इत्यादौ च सत्त्वेनातिप्रसक्तत्वाद् अन्यूनानतिप्रसक्तधर्मस्यैवावच्छेदकत्वस्वीकाराद् अतिप्रसक्तधर्मस्यावच्छेदकत्वस्वीकारेपि न्यूनवृत्तिधर्मस्य सर्वथैवावच्छेदकत्वासम्भवात् तादृशविषयतावत्त्वं च घटादावेव न नीलादाविति न नीलादेर्घटपदार्थत्वापत्तिरिति संक्षेपः।

न्यायमते संकेतस्येच्छारूपत्वेन प्रथमं पदविशेष्यकसंकेतमाह-इदमिति, पदशब्दस्य प्रथमान्तत्वेन पदविशेष्यकत्वम्-प्रथमान्तार्थमुख्यविशेष्यकबोधस्वीकारात्, तथा च गोत्वाद्यवच्छिन्नविषयतानिरूपकबोधनिरूपितजनकताश्रयो गवादिपदमिति फलितं गोत्वाद्यवच्छिन्नविषयतानिरूपकत्वं बोधे तादृशबोधनिष्ठजन्यतानिरूपितजनकता च पदे इति स्पष्टमेव। अर्थविशेष्यकसंकेतमाह-अस्मादिति, यथा गवादिपदाद् गवादिपदार्थो बोद्धव्यस्तथा च गवादिपदजन्यबोधविषयताश्रयो गवादिकमिति फलितं गवादिपदजन्यबोधनिष्ठविषयितानिरूपितविषयताश्रयत्वं च गवादौ स्पष्टमेव। एवं बोधादिविशेष्यकोपि संकेतः संभवति यथा-'गोत्वाद्यवच्छिन्नविषयको बोधो गवादिपदजन्यो भवतु' इति। उक्तसंकेतं द्विधा विभजते-तत्रेति, आधुनिकसंकेतः=जीवकृतः संकेतः परिभाषेत्युच्यते। तया=परिभाषया। उदाहरति-यथेति, "यूस्त्र्याख्यौ नदी" इत्यनेन भगवता पाणिनिना नित्यस्त्रीलिङ्गानामीकारान्तानामूकारान्तानां च शब्दानां नदीसंज्ञा कृतेति तादृशशब्देषु नदीपदं पारिभाषिकम्, एवम् "वृद्धिरादैच्" इत्यनेन वृद्धिपदमादैचोः पारिभाषिकम्, लोकप्रसिद्धार्थे तु शक्तिरेव-ईश्वरसंकेतसत्त्वात्। पित्रादिसंकेतितचैत्रादिपदं तु पुरुषादिव्यक्तौ शक्तमेव न पारिभाषिकम् "द्वादशेऽह्नि पिता नाम कुर्यात्" इत्याकारकश्रुत्यनुमितेश्वरेच्छाविषयत्वात्। शक्तिस्वरूपमाह-ईश्वरेति, ईश्वरस्य संकेतरूपा इच्छा शक्तिस्तस्याश्चाकारद्वयमुक्तमेव। तया=शक्त्या बोधकं पदं वाचकमित्युच्यते। उदाहरति-यथेति, गोत्वादिविशिष्टगवाद्यर्थबोधकं गवादिपदं गवादिवाचकं तद्बोध्यः=शक्त्या बोध्य एव गवादिपदार्थो वाच्य इत्युच्यते सः=शक्त्या बोध्य एव गवादिर्मुख्यार्थः-मुखमिव प्रथमप्रतीतिविषयत्वाच्छक्यस्य मुख्यार्थत्वमित्यन्वयः।

वाच्यवाचकादिपदे ईश्वरेच्छाया बोधजनकत्वेन या विषयता सैव धात्वर्थस्तस्या आश्रयत्वरूपं कर्तृत्वं पदे कर्तृप्रत्ययेन बोध्यते 'पदं गां वक्ति, गां ब्रूते, गोर्वाचकम्' इत्यादौ कर्मप्रत्ययान्तेनाऽर्थवाचकपदेन तत्तदर्थविषयकत्वरूपतत्तत्कर्मकत्वं धात्वर्थैकदेशे बोधे बोध्यते।

'पदेन गौरुच्यते' 'पदस्य गौर्वाच्यः' इत्यादौ पदनिष्ठधात्वर्थीभूततादृशविषयतायाः परम्परया निरूपकत्वम्, तच्च धात्वर्थीभूततादृशविषयतानिरूपकबोधजन-

'गवादिर्वाच्य' 'पदं वाचकम्' इत्यादिवाक्यघटकवाच्यवाचकादिपदप्रकृतिभूतवच्धातोरर्थमाह–वाच्येति, उच्यते इति वाच्यः पदार्थः, वक्तीति वाचकः पदम्, "ईश्वरेच्छाया" इतिषष्ठ्यर्थो निरूपितत्वम्, "बोधजनकत्वेन" इतितृतीयाया वैशिष्ट्यमर्थस्तया च बोधजनकत्वसमानाधिकरणा या विषयतेति फलितं पदविशेष्यकेच्छापक्षे बोधजनकत्वविषयतयोः पदे सत्त्वादेव, ईश्वरेच्छाया बोधजनकत्वेन या विषयता नाम या बोधजनकत्वनिष्ठप्रकारता निरूपितभगवदिच्छीयविषयता सैव वाच्यवाचकादिपदेषु धात्वर्थः, विषयता चैषा विशेष्यतारूपा विज्ञेया। आख्यातादिकर्तृप्रत्ययस्य व्युत्पत्तिवादोक्तदिशाऽऽश्रयत्वरूपकर्तृत्वे शक्तिं स्वीकृत्याह–तस्या इति, तस्याः=धात्वर्थीभूतविषयताया आश्रयत्वरूपं कर्तृत्वं पदे कर्तृप्रत्ययेन=वक्ति ब्रूते इत्यादावाख्यातेन वाचकमित्यत्र च कृता बोध्यते, पदे भगवदिच्छीयविषयतानिरूपिता कर्तृत्वरूपा कृतिर्न सम्भवतीति तादृशविषयतानिरूपितमाश्रयत्वमेवात्र कर्तृत्वं ग्राह्यं तथा च "पदं गां वक्ति, गां ब्रूते, गोर्वाचकम्" इत्यादौ 'गोत्वावच्छिन्नविषयकबोधजनकत्वनिष्ठप्रकारतानिरूपितभगवदिच्छीयविषयता( विशेष्यता )ऽऽश्रयो गोपदम्' इति बोधाकारः। "पदं गां वक्ति" इत्यादिपदे बोधजनकत्वस्य बोधे च गवादिनिष्ठविषयतानिरूपकत्वं स्पष्टमेव। कर्मप्रत्ययान्तेन=द्वितीयादिविभक्त्यन्तेन वाक्यघटककर्मप्रत्ययान्तगवादिपदनोऽर्थमाह–पदमिति। कर्मप्रत्ययान्तेन अर्थवाचकपदेन गवादिवाचकेन गामित्यादिपदेन तत्तदर्थविषयकत्वरूपम्=गवाद्यर्थविषयकत्वरूपं तत्तत्कर्मकत्वम्=गवादिकर्मकत्वं तदेव धात्वर्थैकदेशभूते बोधे बोध्यते इत्यन्वयः, 'बोधजनकत्वनिष्ठप्रकारतानिरूपितभगवदिच्छीयविशेष्यता धात्वर्थः' इत्युक्तं तादृशधात्वर्थैकदेशत्वं तद्घटकबोधे स्पष्टमेव तादृशबोधे उक्तशाब्दबोधानुसारेण यद् गवादिपदार्थविषयकत्वरूपं गवादिपदार्थकर्मकत्वं भासते तत् कर्मप्रत्ययान्तगवादिपदादेव भासते तथा चात्र विषयत्वं कर्मप्रत्ययार्थ इति फलितम्, 'गोर्वाचकम्' इत्यत्र च षष्ठी कर्मप्रत्ययः।

कर्मप्रत्ययान्तधातुघटितप्रयोगमुदाहरति–पदेनेति, 'पदेन गौरुच्यते' इत्यादौ पदनिष्ठा या भगवदिच्छीयविषयता तस्या धात्वर्थीभूता तादृशविषयता नाम बोधजनकत्वनिष्ठप्रकारतानिरूपितभगवदिच्छीयविषयता तस्याः परम्परया निरूपकत्वम्( परम्परया तन्निरूपकत्वम् ) गवादौ कर्मप्रत्ययेन=धातूत्तरवर्तिकर्मप्रत्ययेन बोध्यते इत्यन्वयः, तच्च निरूपकत्वं तादृशक्रियाकर्मत्वरूपम्=वच्यादिक्रियाकर्मत्वरूपं विज्ञेयम्, तादृशक्रियाकर्मत्वस्यापि स्वाभीष्टस्वरूपमाह– तच्चेति,

कत्वप्रकारतान्तःपातिबोधनिष्ठविषयतानिरूपकविषयितासंबन्धावच्छिन्नप्रकारताश्रयत्वरूपं तादृशक्रियाकर्मत्वं गवादौ कर्मप्रत्ययेन बोध्यते ।

द्वितीयेच्छायाः संकेतरूपत्वे वैपरीत्यमूह्यमिति न्यायसिद्धान्तः ।

---

तभगवदिच्छीयविषयता' इत्यत्र 'बोधो जनकत्व प्रकारता विषयता च' एते चत्वारः पदार्थाः सन्ति तत्राऽन्वयविषयतायाः ( धात्वर्थीभूततादृशविषयतायाः ) निरूपिका बोधजनकत्वनिष्ठा प्रकारता ग्राह्या—बोधजनकत्वनिष्ठप्रकारतानिरूपिताया एव भगवदिच्छीयविषयताया धात्वर्थत्वस्वीकारात् तादृशप्रकारतान्तःपाती यो बोधस्तादृशबोधनिष्ठा या विषयतानिरूपिका विषयिता ( विषयता चात्र गवादिपदार्थनिष्ठा ग्राह्या तन्निरूपकविषयिताया बोधे सत्त्वात् ) तादृशविषयितासंबन्धेन गवादिपदार्थस्य बोधेऽन्वयस्वीकाराद् गवादिपदार्थनिष्ठा प्रकारता विषयितासम्बन्धावच्छिन्ना जाता तादृशप्रकारताश्रयत्वं यत् तदेव तादृशक्रियाकर्मत्वमत्र गवादावस्ति तच्च कर्मत्वं पदनिष्ठधात्वर्थभूततादृशविषयतायाः परम्परया=बोधजनकत्वनिष्ठप्रकारताद्वारा निरूपकत्वरूपमस्ति—बोधस्यात्र गोविषयकत्वेन गोर्बोधविशेषणत्वाद् बोधजनकत्वनिष्ठप्रकारताद्वारा गोर्धात्वर्थीभूतोक्तविषयतानिरूपकत्वात् तस्मात् तादृशगोनिष्ठकर्मत्वं परम्परया पदनिष्ठधात्वर्थीभूततादृशविषयतानिरूपकत्वरूपं जातम्, तादृशविषयतायाः साक्षान्निरूपकत्वं तु बोधजनकत्वनिष्ठप्रकारतायामस्तीतिसारः । अत्र 'पदनिष्ठधात्वर्थीभूततादृशविषयतानिरूपकबोधजनकत्वनिष्ठप्रकारतान्तःपातिबोधनिष्ठविषयतानिरूपकविषयितासम्बन्धावच्छिन्नप्रकारताश्रयो गौः' इति शाब्दबोधः ।

अत्रापि पदविशेष्यकभगवदिच्छास्वीकारादुक्तम्—पदनिष्ठेति, तथा च भगवदिच्छानिरूपितविशेष्यतात्र पदेऽस्ति बोधनिरूपितविशेष्यता च गव्यस्ति—प्रथमान्तार्थमुख्यविशेष्यकबोधस्वीकारादित्यवधेयम् । पदविशेष्यकेश्वरेच्छारूपशक्तिपक्षे 'पदेन गौरुच्यते' इत्याकारकार्थविशेष्यकशाब्दबोधः, अर्थविशेष्यकशक्तिपक्षे च 'पदं गां वक्ति' इत्याकारकपदविशेष्यकशाब्दबोधः कथं स्यादिति तु न शङ्क्यम्—शक्तिभूतेश्वरेच्छायाः शाब्दबोधनियामकत्वाभावात्, कामभीश्वरेच्छा यादृशी तादृशी भवतु सर्वविधेश्वरेच्छापक्षेपि सर्वविधः शाब्दबोधः सम्भवतीति प्रत्येकमीश्वरेच्छारूपशक्तिपक्षे पदविशेष्यकोऽर्थविशेष्यकश्च शाब्दबोधो नानुपपन्नः ।

अर्थविशेष्यकभगवदिच्छारूपशक्तिमुद्दिश्याह—द्वितीयेच्छाया इति, द्वितीयेच्छायाः="अस्मात् पदादयमर्थो बोद्धव्यः" इतीच्छायाः सङ्केतरूपत्वे=शक्तित्वपक्षे । वैपरीत्यमिति "इदं पदमिममर्थं बोधयतु" इत्याकारकपदविशेष्यकशक्तिपक्षे 'पदं गां वक्ति' इत्यत्र 'बोधजनकत्वनिष्ठप्रकारतानिरूपितभगवदिच्छीयविशेष्यता धात्वर्थः' इत्युक्तम्, "अस्मात् पदात्" इत्याकारकार्थविशेष्यकशक्तिपक्षे तु 'पदं गां वक्ति' इत्यत्र नियतत्वनिष्ठप्रकारतासमानाधिकरणविशेष्यतानिरूपितबोधनिष्ठप्रकारतासमानाधिकरणविशेष्यतानिरूपितजन्यत्वनिष्ठप्रकारतासमानाधिकरणविशेष्यतानिरूपितप्रकारता धात्वर्थो जात इति वैपरीत्यं तथा "इदं पदम्" इत्याकारकपद-

अत्र मीमांसकानुयायिनः—अपभ्रंशादपि शक्तिभ्रमेणार्थप्रत्ययात् सन्मात्रविषयके भगवत्संकेते तस्यापि बोधकत्वेन विषयत्वमिति नैयायिकैरभ्युपगमात् तस्यापि वाचकत्वं साधुत्वं च स्यात् । एवं लाक्षणिकगङ्गादिपदस्योक्तयुक्त्या तीरादिवाचकत्वापत्तिः ।

यत्तु तादृशेच्छया भगवदुच्चरितत्वं वाचकत्वम् अपभ्रंशादयश्च नार्थप्रत्यायनेच्छया भगवदुच्चरिता इति नातिप्रसङ्गः, तन्न—अस्मदाद्युच्चारितपदेष्वव्याप्तेः । भग-

विशेष्यकशक्तिपक्षे 'पदेन गौरुच्यते' इत्यत्र 'धात्वर्थीभूततादृशेच्छाविषयतानिरूपकबोधजनकत्व-निष्ठप्रकारतान्तःपातिबोधनिष्ठविषयतानिरूपकविषयितासम्बन्धावच्छिन्नप्रकारता कर्मप्रत्ययार्थः' इत्युक्तम् "अस्मात् पदात्" इत्याकारकार्थविशेष्यकशक्तिपक्षे तु 'पदेन गौरुच्यते' इत्यत्र पदनिष्ठा या प्रकारता तादृशप्रकारतानिरूपितजन्यत्वनिष्ठविशेष्यतासमानाधिकरणप्रकारतानि-रूपितबोधनिष्ठविशेष्यतासमानाधिकरणप्रकारतानिरूपितविषयत्वनिष्ठविशेष्यतासमानाधिकरणप्र-कारतानिरूपितविशेष्यता कर्मप्रत्ययार्था जात इति वैपरीत्यम् । पदविशेष्यकार्थविशेष्यकत्वा-भ्यामपि वैपरीत्य विज्ञेयम् । "अस्मात् पदात्" इत्याकारकशक्तिपक्षे 'पदं गां वक्ति' इत्यत्र 'धात्वर्थीभूतोक्तप्रकारतासमानाधिकरणविशेष्यताश्रयं पदम्' इति शाब्दबोधः—अत्र पदे भगव-दिच्छानिरूपितप्रकारताया शाब्दबोधीयविशेष्यतायाश्च सत्त्वात् । 'पदेन गौरुच्यते' इत्यत्र च 'प्रत्ययार्थीभूतोक्तविशेष्यताश्रयो गौः' इतिशाब्दबोध । बोधविषयत्वनिष्ठप्रकारतानिरूपि-तगोत्वावच्छिन्नविशेष्यताका चैषा भगवदिच्छा विज्ञेया । विस्तरस्तु विशिष्टगुरोरवगन्तव्य ।

न्यायमतविषयकमीमांसककृतकुचोद्यमनुवदति—अत्रेत्यादिना, अपभ्रंशात्=गगरीत्यादिलौकि-कशब्दात् । तस्य=अपभ्रंशस्य । अयमर्थः—गगरीत्याद्यपभ्रंशशब्दाद् घटादिपदार्थबोधः शक्ति-भ्रमेण भवति भगवदिच्छा च सन्मात्रविषयास्ति अपभ्रंशशब्दस्तन्निष्ठं बोधकत्वं तद्बोध्यो घटा-दिश्च सदैवेति तस्यापि=अपभ्रंशस्यापि बोधकत्वेन रूपेण भगवत्संकेतविषयत्वं प्राप्तं बोधकत्वेन भगवत्संकेतविषयत्वमेव च वाचकत्वं साधुत्वं चेति नैयायिकैरभ्युपगम्यते तथा च तस्य= अपभ्रंशस्यापि बोधकत्वेन रूपेण भगवत्संकेतविषयत्वाद् वाचकत्वं साधुत्वं च प्राप्नोति न च नैयायिकैरपभ्रंशस्य वाचकत्वं साधुत्वं च स्वीक्रियते इत्याक्षेप । दोषान्तरमाह—एवमिति । उक्तयुक्त्येति—बोधकत्वेन भगवत्संकेतविषयत्वमेव वाचकत्वं भगवत्संकेतश्च सन्मात्रविषयो गङ्गा-दिपदेन तीरादिबोधनमपि च सदैवेति गङ्गादिपदस्यापि तीरादिबोधकत्वेन भगवत्संकेतविषयत्वं प्राप्तमिति गङ्गादिपदस्य तीरादिवाचकत्वापत्तिः, न चैतदिष्टमित्यर्थः ।

ननु न बोधकत्वेन भगवत्संकेतविषयत्वं वाचकत्वं येनोक्तदोषापत्तिः स्यात् किं तु तादृशेच्छया= बोधकत्वेच्छया "इदं पदमिममर्थं बोधयतु" इत्याद्याकारकेच्छयेति यावत् भगवदुच्चरितत्वमेव वाचकत्वम् अपभ्रंशशब्दाश्च नार्थप्रत्यायनेच्छया भगवदुच्चरिता इति अतिप्रसङ्गः=अपभ्रंशानां वाचकत्वा-पत्तिर्नास्तीत्याशङ्कते—यत्त्विति । परिहरति—तन्नेति, एवं हि न्यायमते पदानामनित्यत्वेनाऽस्मदा

वदुच्चरितजातीयत्वनिवेशेऽपि वेदस्थलाक्षणिकेषु शब्देष्वतिव्याप्तेः, सादिदेवदत्तादिपदेऽव्याप्तेश्च । "द्वादशेऽह्नि पिता नाम कुर्यात्" इतिवेदस्थनामपदस्य देवदत्तादिपदपरत्वेऽपि देवदत्तेत्यादिस्वरूपाणां भगवदनुच्चरितत्वात् ।

एवम्–ईश्वरसङ्केतस्य शक्तित्वे ईश्वरानङ्गीकर्तृमते शाब्दबोधानुपपत्तिः ।

---

च्चरितघटादिपदानामपि भगवदुच्चरितत्वाभावाद्वाचकत्वं न स्यादित्यव्याप्तिरित्यर्थः । ननु तादृशेच्छया भगवदुच्चरितसजातीयत्वं वाचकत्वमिति वक्ष्यामस्तथा चाऽस्मदाद्युच्चरितघटादिपदानां भगवदुच्चरितघटादिपदसजातीयत्वेन न वाचकत्वानुपपत्तिरित्याशङ्क्याह–भगवदुच्चरितसजातीयत्वेति, अत्रापि दोषमाह–वेदस्थेति, भगवदुच्चरितसजातीयत्वनिवेशेनाऽस्मदाद्युच्चरितघटादिपदानां वाचकत्वे प्राप्तेऽपि वेदस्थलाक्षणिकेषु शब्देषु="आदित्यो वै यूपः" इत्यादिवेदवाक्यघटकाऽऽदित्यादिशब्देष्वस्मदाद्युच्चरितेषु तादृशेच्छया भगवदुच्चरितसजातीयत्वसत्त्वेन वाचकत्वस्यातिव्याप्तिः स्याद् न चैतेषां वाचकत्वमिष्टं लाक्षणिकत्वस्वीकारादित्यर्थः, किं चैव भगवदुच्चरितशब्दानां वाचकत्वं न स्यात्–भगवदुच्चरितसजातीयत्वाभावात् । दोषान्तरमाह–सादीति, सादिभूतं देवदत्तादिपदं भगवता देवदत्तादिव्यक्तिबोधनाय नोच्चरितमिति तस्य वाचकत्वं न स्याद् इष्टं च न्यायमते तस्यापि वाचकत्वमित्यव्याप्तिः । सादित्वं च देवदत्तादिशब्दानामेवेष्टं न घटादिशब्दानामिति सादित्वं स्वजन्यबोधविषयतावच्छेदकधर्मावच्छिन्नविषयकबोधानुत्तरत्वं विशेषं स्वं देवदत्तादिपदं तज्जन्यो यो देवदत्तादिविषयको बोधस्तादृशबोधविषयताया अवच्छेदको धर्मो देवदत्तत्वं तदवच्छिन्न( देवदत्त )विषयको यो बोधो देवदत्तपदजन्यशाब्दबोधस्तदनुत्तरत्वम्=पूर्वभावित्वं देवदत्तपदेऽस्त्येव देवदत्तपदजन्यशाब्दबोधापेक्षया देवदत्तपदस्य पूर्वभावित्वाद् देवदत्तव्यक्तौ देवदत्तपदसङ्केतानन्तरमेव देवदत्तपदजन्यशाब्दबोधसम्भवात्, यद्यपि तर्कमते घटादिशब्दोऽपि सादिरेव तथापि न तस्य घटत्वावच्छिन्नविषयकबोधानुत्तरत्वम्–ईश्वरीयघटविषयकबोधानन्तरमेव घटादिशब्दानां जातत्वादित्यवधेयम् । ननु "द्वादशेऽहनि पिता नाम कुर्यात्" इति श्रूयते तथा चैतद्वेदवाक्यघटकं नामपदं देवदत्तादिपदपरमेवेति देवदत्तादिपदानां सामान्यतो नामपदेन भगवदुच्चरितत्वं प्राप्तमिति न तेषु वाचकत्वाव्याप्तिरित्याशङ्क्याह–द्वादशेति, उत्तरमाह–देवदत्तेत्यादिस्वरूपाणामिति, स्वरूपाणाम्=आनुपूर्वीणाम्, भगवता हि नामपदमेवोच्चारितं न तु देवदत्तादिपदमिति देवदत्तादिपदानां भगवदनुच्चरितत्वाद्वाचकत्वानुपपत्तिस्तदवस्थैवेत्यर्थः ।

किं च विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वादीश्वरसङ्केतस्य शक्तित्वे तादृशशक्तिज्ञानार्थमीश्वरज्ञानापेक्षास्ति–ईश्वरसङ्केतरूपशक्तावीश्वरस्य विशेषणत्वाद् ईश्वरानङ्गीकर्तुश्च मीमांसकस्येश्वरज्ञानासम्भवेन ईश्वरसङ्केतरूपशक्तेरपि ज्ञानं न सम्भवति तथा च शाब्दबोधानुपपत्तिः–शाब्दबोधं प्रति शक्तिज्ञानस्य कारणत्वादित्यभिप्रायेण दोषान्तरमाह–एवमिति ।

अथ शाब्दबोधोपयोगितायामीश्वरीयत्वमनुपादेयमेव. एवं चाधुनिकसंकेतज्ञानादपि शाब्दबोधस्तादृशसंकेतस्य वृत्तित्वं च निर्वहति ।

न चाधुनिकसंकेतस्य वृत्तित्वे तात्पर्यस्यापि तथात्वप्रसङ्गः—तस्यापि बोधकत्वेन पदविषयकतया संकेतरूपत्वात्. न चेष्टापत्तिः—तथा सति लक्षणास्थलेपि तात्पर्यस्य वृत्तितया लक्षणाया वृत्तित्वोच्छेदप्रसङ्गादिति वाच्यम्, यतः पदार्थोपस्थितिव्यापारकः संकेतो वृत्तिः तात्पर्यज्ञानं च साक्षादेव शाब्दबोधोपयोगि न तु पदार्थोपस्थितिद्वारा—वृत्त्युपस्थापितपदार्थे एव प्रकरणादिना वक्तृतात्पर्यावधारणात्. तथा च लक्षणाया वृत्तित्वानुपगमे गङ्गादिपदात् तीरादिपदार्थानुपस्थितौ तत्र तत्तत्पदव्यक्तेस्तात्पर्याऽग्रहाच्छाब्दबोधानुपपत्तिरिति तस्या वृत्तित्वमावश्यकम् ।

---

न्यायमतेनाशङ्कते—अथेति, शाब्दबोधोपयोगितायाम्=शाब्दबोधकारणतायामिति यावत् ईश्वरीयत्वमनुपादेयम्=ईश्वरनिवेशो न कर्तव्यस्तथा च 'ईश्वरसंकेत शक्तिः' इति नोच्यते किं तु 'संकेत शक्तिः' इत्युच्यते संकेतश्चेच्छा एव चेश्वरानङ्गीकर्तृमते शाब्दबोधानुपपत्तिर्नास्ति—शक्तिस्वरूपे ईश्वरनिवेशाभावादित्यर्थः । ईश्वरीयत्वनिवेशपरित्यागे तार्किक उपयोगान्तरमाह—एवं चेति, समान्यत 'संकेतः शक्तिः' इत्युक्ते आधुनिकसंकेतस्य=पाणिन्यादिकृतनदीवृद्ध्यादिरूपसंकेतस्यापि वृत्तित्वं निर्वहति तादृशाधुनिकसंकेतज्ञानाच्छाब्दबोधश्चापि निर्वहति, वृत्तित्वं च शाब्दबोधजनकपदार्थोपस्थितिरूपव्यापारवत्सम्बन्धत्वं तच्चाधुनिकसंकेतेप्यस्त्येवेत्यर्थः ।

नन्वाधुनिकसंकेतस्य वृत्तित्वे तात्पर्यस्यापि तथात्वप्रसङ्ग=वृत्तित्वं स्यात् यत 'इदं पदमिममर्थं बोधयतु' इत्येव रूपेण यद् बोधकत्वेन पदविषयकत्वं तदेव संकेतत्वं तच्च तात्पर्येऽप्यस्तीति तस्यापि=तात्पर्यस्यापि वृत्तित्वं स्यादेव, न चाऽत्रेष्टापत्तिः सम्भवति तथा सति=तात्पर्यस्य वृत्तित्वे हि लक्षणास्थलेपि तात्पर्यस्यैव वृत्तित्वम्=शाब्दबोधजनकपदार्थोपस्थितिरूपव्यापारवत्सम्बन्धत्वं स्यादिति लक्षणाया वृत्तित्वोच्छेदप्रसङ्ग=लक्षणाया वृत्तित्वं न स्यात्—तात्पर्यज्ञानादेव गङ्गादिपदात् तीरादिपदार्थोपस्थितिसम्भवादित्याशङ्क्याह— न चेति । परिहारमाह—यत इति, पदार्थोपस्थितिरूपव्यापारक एव संकेतो वृत्तिरित्युच्यते पदार्थोपस्थितिद्वारा शाब्दबोधोपयोगित्वं वृत्तित्वमिति लब्धं तात्पर्यज्ञानं च साक्षादेव शाब्दबोधोपयोगि न तु पदार्थोपस्थितिद्वारा, यतो वृत्त्या पदार्थोपस्थितौ जातायामेव तादृशवृत्त्युपस्थापितपदार्थे प्रकरणादिना वक्तृतात्पर्यावधारणं भवति न तु पदार्थोपस्थितेः पूर्वमपि तथा च तात्पर्यस्य वृत्तित्वप्रसक्तिर्नास्तीत्यर्थः । लक्षणाया वृत्तित्वमुपपादयति— तथा चेति, यदि लक्षणाया वृत्तित्वं न स्यात्तदा गङ्गादिपदात् तीरादिपदार्थोपस्थितिरपि न स्यात्तथा च तत्र=तीरादिपदार्थे तत्तत्पदव्यक्तेः=गङ्गादिपदस्य तात्पर्यग्रहोपि न स्यात् तथा च शाब्दबोधोपि न स्याद् न चैवमस्ति गङ्गादिपदात् तीरादि-

न च तात्पर्यग्रहार्थं लक्षणाधीनोपस्थितेरपेक्षितत्वेपि तदधीनोपस्थितित्वेन शाब्दबोधहेतुत्वे मानाभावात् तस्या वृत्तित्वाऽसिद्धिः—लक्षणास्थले तात्पर्यात्मकसंकेताधीनोपस्थितित एव शाब्दबोधनिर्वाहाद् आधुनिकसंकेतस्थले तात्पर्याधीनोपस्थितेः शाब्दबोधप्रयोजकतायाः क्लृप्तत्वादिति वाच्यम्, लक्षणाधीनपदार्थोपस्थितिसत्त्वे मुख्यार्थबाधादिना तत्तदर्थे तत्तत्पदव्यक्तेस्तात्पर्यग्रहे (जाते) उपस्थित्य तरमन्तरेणैव तत्तदर्थानुभवस्य सर्वानुभवसिद्धत्वात् । आधुनिकसंकेतस्थले च पूर्वं संकेतकर्तृपुरुषवाक्यतोऽर्थविशेषे डित्यादिपदस्य संकेतग्रहात् तत्तत्पदेनाऽर्थविशेषोपस्थितौ ( जातायाम् ) प्रकरणादिना तत्तत्पदव्यक्तेस्तत्र तात्पर्यग्रहे सति शाब्दबोधस्य वृत्त्यन्तराधीनोपस्थितिमन्तरेणैवोत्पत्त्या आधुनिकसंकेतस्य वृत्तित्वमितिचेत् ?

---

पयकशाब्दबोधस्य सर्वप्रसिद्धत्वात् तस्मात् तस्या =लक्षणाया वृत्तित्वमावश्यक लक्षणाया वृत्तित्वे च लक्षणया गङ्गादिपदात् तीरादिपदार्थे उपस्थिते तत्र गङ्गादिपदस्य वक्तृतात्पर्ये गृहीते तीरादिविषयकशाब्दबोधः सम्भवतीत्यर्थः ।

ननु यथाऽऽधुनिकसंकेतस्थले तात्पर्याधीनोपस्थिते प्रयोजकत्वमस्ति तथा लक्षणास्थलेपि तात्पर्यात्मकसंकेतज्ञानाधीनोपस्थितित शाब्दबोधनिर्वाह सम्भवतीति तात्पर्यग्रहार्थं लक्षणाधीनोपस्थितेरपेक्षितत्वेपि तदधीनोपस्थितित्वेन=लक्षणाधीनोपस्थितित्वेन रूपेण शाब्दबोधं प्रति हेतुत्वे मानाभावात् तस्याः=लक्षणाया वृत्तित्वानुपपत्तिस्तदवस्थैवेत्यभिप्रायेणाशङ्कते– न चेति । यज्ज्ञानाधीनोपस्थिते शाब्दबोधं प्रति हेतुत्वं तस्यैव वृत्तित्वमभिमतं लक्षणास्थले च लक्षणाज्ञानाधीनोपस्थितेस्तात्पर्यग्रहं प्रत्येव हेतुत्वं न शाब्दबोधं प्रति, शाब्दबोधं प्रति तु तात्पर्यज्ञानाधीनोपस्थितेरेव हेतुत्वमिति तात्पर्यस्य वृत्तित्वं वक्तव्यं न लक्षणाया इत्यर्थः । आधुनिकसंकेतस्थलेपि तात्पर्यज्ञानाधीनोपस्थिते शाब्दबोधं प्रति हेतुत्वं नास्ति यद्दृष्टान्तेन लक्षणास्थले तात्पर्यज्ञानाधीनोपस्थिते शाब्दबोधं प्रति हेतुत्वं स्यात् तेन च लक्षणाया वृत्तित्वोच्छेदः स्यादित्यभिप्रायेण परिहरति–लक्षणाधीनपदार्थोपस्थितिसत्त्वे इति, गङ्गादिपदाद् मुख्यार्थबाधादिना लक्षणाधीनतीरादिपदार्थोपस्थितिसत्त्वे तत्तदर्थे=तीरादिपदार्थे तत्तत्पदव्यक्ते =गङ्गादिपदस्य तात्पर्यग्रहे जाते पुनस्तीरादिविषयकोपस्थितेरपेक्षा न भवतीत्युपस्थित्यन्तरमन्तरेणैव तत्तदर्थानुभव =तीरादिविषयकशाब्दबोध सर्वानुभवसिद्धोऽस्तीति, लक्षणाज्ञानाधीनपदार्थोपस्थिते शाब्दबोधं प्रति हेतुत्वात् लक्षणाया वृत्तित्वं सिद्धं तात्पर्यज्ञानाधीना तूपस्थितिरेव न जायते यस्या शाब्दबोधं प्रति हेतुत्वं स्यात् तेन च तात्पर्यस्य वृत्तित्वं स्यादित्यर्थ । आधुनिकसंकेतस्थलेपि पूर्वं संकेतकर्तृपुरुषस्य 'डित्थपदात् पिण्डो बोद्धव्य' इत्याकारकवाक्यतोऽर्थविशेषे=डित्यादिपदार्थे डित्यादिपदस्य संकेतग्रहो भवति तेन च संकेतज्ञानेन डित्यादिपदाद् डित्यादिपदार्थः

एवमपि संकेतस्य शब्दसम्बन्धत्वे मानाभावेन निष्प्रतियोगिकतया तदसंभवेन च पदार्थोपस्थापकत्वासंभवेन वृत्तित्वानिर्वाहात् ।

---

स्योपस्थितिर्भवति प्रकरणादिना तत्तत्पदव्यक्ते=डित्थादिपदस्य तत्र=डित्थादौ तात्पर्यग्रहे सति=जाते वृत्त्यन्तराधीनोपस्थितिं विनैव शाब्दबोधो जायते इति तत्राधुनिकसंकेतज्ञानाधीनोपस्थितेरेव शाब्दबोधं प्रति हेतुत्वादाधुनिकसंकेतस्य वृत्तित्वं सिद्धं तात्पर्यज्ञानाधीना तूपस्थितिरेव न भवति यस्याः शाब्दबोधं प्रति कारणत्वं तेन च तात्पर्यस्य वृत्तित्वं स्यादित्याह—आधुनिकसंकेतस्यवेत्यादि । आधुनिकसंकेतविषयनदीदित्थादिपदानामनेकार्थत्वात् तत्तात्पर्यग्रहं प्रति प्रकरणादेर्हेतुत्वादुक्तम्—"प्रकरणादिना" इति ।

लक्षणास्थले हि प्रथमं गङ्गादिपदाच्छक्त्या मुख्यार्थप्रवाहाद्युपस्थितिर्भवति तादृशमुख्यार्थे घोषाद्याधारत्वादिबाधज्ञाने जाते "एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्" इतिरीत्या प्रवाहादिज्ञानेन तीराद्युपस्थितिर्भवति तदनन्तरं तीरादिविषयकशाब्दबोधो भवतीति क्रम, अत्र च यद्यपि प्रवाहादिमुख्यार्थज्ञानेन तीरोपस्थितिर्भवतीति लक्षणाया मुख्यार्थवृत्तित्वं वक्तव्यं न पदवृत्तित्वं गङ्गादिपदेन तीरोपस्थितेरसम्भवाद् मुख्यार्थोपस्थापनानन्तरं लक्ष्यार्थोपस्थापकत्वासम्भवात् शब्दबुद्धिकर्मणां विरम्य व्यापाराभावाद् मुख्यार्थोपस्थितेश्चावश्यकत्वात् तथापि "शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यते" इतिनियमाद् मुख्यार्थवृत्तिलक्षणाया अपि पदे आरोपो भवति अन्यथा लक्ष्यार्थबोधस्य मुख्यार्थप्रवाहसम्बन्धज्ञानाधीनोपस्थितत्वा जायमानत्वेन लक्षणावृत्त्या पदज्ञानजन्योपस्थित्या चाऽजायमानत्वेन शाब्दबोधत्व न स्यात् । पदजन्यपदार्थोपस्थितिजन्यबोधस्यैव शाब्दबोधत्वस्वीकारादित्यवधेयम् ।

अथेत्यादिनाशङ्कितं परिहरति—एवमपीति, शाब्दबोधोपयोगितायामीश्वरीयत्वानुपादानेनेश्वरानङ्गीकर्तृमते शाब्दबोधसम्भवेऽपीत्यर्थः । यदि संकेतस्य शब्दसम्बन्धत्वं स्यात् तदा संकेतस्य ज्ञातस्य पदार्थोपस्थापकत्वं स्यात् तदा च वृत्तित्वमपि स्यात् न च संकेतस्य शब्दसम्बन्धत्वे मानमस्ति—यत्र 'अयमस्य पिता अयमस्य पुत्रः' इत्येव यत्र प्रतीतिर्भवति तत्रैव जन्यजनकभावे सम्बन्धत्वं भवति, अत्र च 'अर्थवत् पदम्' इतिप्रतीतिसत्त्वेऽपि 'पदवानर्थः' इतिप्रतीत्यभावात् संकेतस्य पदपदार्थसम्बन्धत्वं सम्भवति, सम्बन्धत्वाभावाच्च पदार्थोपस्थापकत्वाभावः प्राप्तः पदार्थानुपस्थापकस्य च वृत्तित्वं नेष्टमित्यर्थः । ननु यथा 'भूतलवान् घटः' इतिप्रतीत्यभावेऽपि 'घटवद् भूतलम्' इतिप्रतीतिमात्रेण घटभूतलयोः संयोगस्य सम्बन्धत्वं भवति तथा 'पदवानर्थः' इतिप्रतीत्यभावेऽपि 'अर्थवत् पदम्' इतिप्रतीतिमात्रेण संकेतस्य पदपदार्थसम्बन्धत्वं किं न स्यादित्याशङ्कयाह—निष्प्रतियोगिकतयेति, निरूपकांशे नित्यसाकाङ्क्षत्वाभावादित्यर्थः । संयोगस्तु प्रतियोग्यंशे ( निरूपकांशे ) नित्यसाकाङ्क्ष एव यतः संयोग इत्युक्ते भवति जिज्ञासा कस्येति, संकेतस्वरूपैव इच्छा च प्रतियोग्यंशे नित्यसाकाङ्क्षा न सम्भवतीति निष्प्रतियोगिकतया संकेतस्य

एतेन शाब्दबोधौपयिकसम्बन्धत्वेन ईश्वरसंकेतज्ञानं हेतुस्तच्च मीमांसकानामपि संभवति तादृशज्ञानविरोधिविपरीतज्ञानाभावादित्यपि निरस्तम् ।

यत्तु स्वजन्यज्ञानविषयत्वप्रकारकेच्छाविशेष्यत्वमर्थे पदसम्बन्धः पदे चार्थस्य विपरीतः, अस्य सम्बन्धत्वमन्यथानुपपत्त्या कल्प्यते, एतादृशपरम्पराया अपभ्रंशादिस्थले सम्बन्धत्वं न स्वीक्रियते इति तत्र तत्सम्बन्धावगाहि ज्ञानं भ्रम

---

सम्बन्धवसम्भवोपि नास्ति सम्बन्धत्वाभावे च पदार्थोपस्थापकत्वाभावस्तेन च वृत्तित्वाभाव इत्यर्थः। यद्यपि पदज्ञानस्यैव पदार्थोपस्थापकत्वमस्ति तथापि संकेतज्ञानस्यापि सहकारित्वात् संकेतस्य पदार्थोपस्थापकत्वमुक्तमित्यवधेयम् । प्रत्युत 'पदमर्थवाचकमर्थश्च पदवाच्यः' इत्येवं प्रतीतिसत्त्वाद् वाच्यवाचकभाव एव पदपदार्थयोः सम्बंध इति मीमांसकाभिप्रायः ।

ननु यदीश्वरसंकेतत्वेन रूपेणेश्वरसंकेतस्य ज्ञानं शाब्दबोधहेतुरित्युच्येत तदेश्वरानङ्गीकर्तृमते ईश्वरज्ञानासंभवाच्छाब्दबोधानुपपत्तिः स्यादपि न चैवमस्ति किं त्वीश्वरसंकेतस्यापि शाब्दबोधौपयिकसम्बंधत्वेन ज्ञानं शाब्दबोधहेतुरित्युच्यते तच्च=ईश्वरसंकेतस्यापि शाब्दबोधौपयिक( शाब्दबोधोपायभूत ) सम्बन्धत्वेन ज्ञानं तु मीमांसकानामपि संभवत्येव, अत्र हेतुमाह– तादृशेति, तादृशज्ञानस्य=ईश्वरसंकेतस्य शाब्दबोधौपयिकसंबन्धत्वेन ज्ञानस्य विरोधिभूतं यद् विपरीतं ज्ञानम्='ईश्वरसंकेतः शाब्दबोधौपयिकसम्बन्धो न' इत्याकारकं ज्ञानं तदभावात्, ईश्वरसंकेतः शाब्दबोधौपयिकसम्बन्धो न इत्याकारकं ज्ञानं प्रत्यर्पीश्वरज्ञानापेक्षास्ति न चेश्वरज्ञानं मीमांसकानां संभवतीत्यभिप्रायेणाह–एतेनेति । एतेन=उक्तेनेत्यपि निरस्तमित्यन्वयः, यदीश्वरसंकेतस्य सम्बन्धत्वं स्यात्तदेश्वरसंकेतस्य शाब्दबोधौपयिकसम्बन्धत्वेन ज्ञानं स्यादपि तेन च शाब्दबोधोपि स्याद् न चेश्वरसंकेतस्य सम्बन्धत्वं सम्भवति निष्प्रतियोगिकत्वादित्यर्थः ।

पुनराशङ्कते–यत्त्विति । स्वजन्यज्ञानविषयत्वप्रकारकेच्छाविशेष्यत्वं नाम पदजन्यो यो बोधस्तादृशबोधनिरूपितं यदर्थे विषयत्वं तादृशविषयत्वनिष्ठप्रकारतानिरूपितमगवदिच्छीयविशेष्यत्वं तच्चार्थेऽस्त्येव तदेवार्थे पदस्य सम्बन्धः=एतादृशसम्बन्धेन पदविशिष्टोऽर्थ इतियावत् पदे चार्थस्य सम्बन्धो विपरीतो नाम स्व( अर्थ )विषयकबोधजनकत्वनिष्ठप्रकारतानिरूपितमगवदिच्छीयविशेष्यत्वं तच्च पदेऽस्त्येव, उक्ते प्रमाणमाह–अस्येति, अस्य=स्वजन्येत्याद्युक्तसम्बन्धद्वयस्य, पदज्ञानेन पदार्थोपस्थितिर्भवत्येव सा च पदपदार्थयोः सम्बन्धं विना नोपपद्यते इत्यन्यथानुपपत्त्या स्वजन्येत्याद्युक्तस्य सम्बन्धत्वं कल्प्यते, सिद्धे च सम्बन्धे "एकसम्बन्धिज्ञानमपरसंबन्धिस्मारकम्" इतिन्यायेन पदज्ञानादर्थोपस्थितिः संभवति, ननु स्वजन्येत्याद्युक्तपरम्परासंबन्धोऽपभ्रंशादिस्थलेपि स्यात् तेन चापभ्रंशस्यापि वाचकत्वं साधुत्वं च स्यादित्याशङ्क्याह–एतादृशेति । तत्र=अपभ्रंशादिस्थले । तत्सम्बन्धावगाहि=स्वजन्येत्याद्युक्तसंबन्धावगाहि ज्ञानं भ्रमात्मकमेवेति नापभ्रंशस्य वाचक-

**एवमपि संकेतस्य शब्दसम्बन्धत्वे मानाभावेन निष्प्रतियोगिकतया तदसंभवेन च पदार्थोपस्थापकत्वासंभवेन वृत्तित्वानिर्वाहात् ।**

---

स्योपस्थितिर्भवति प्रकरणादिना तत्तत्पदव्यक्ते=डित्थादिपदस्य तत्र=डित्थादौ तात्पर्यग्रह सति=जाते वृत्त्यन्तराधीनोपस्थितिं विनैव शाब्दबोधो जायते इति तत्राधुनिकसंकेतज्ञानाधीनोपस्थितेरेव शाब्दबोधं प्रति हेतुत्वादाधुनिकसंकेतस्य वृत्तित्वं सिद्धं तात्पर्यज्ञानाधीना तूपस्थितिरेव न भवति यस्या शाब्दबोधं प्रति कारणत्वं तेन च तात्पर्यस्य वृत्तित्वं स्यादित्याह—आधुनिकसंकेतस्थलेऽइति । आधुनिकसंकेतविषयनदीडित्थादिपदानामनेकार्थत्वात् तत्तात्पर्यग्रहं प्रति प्रकरणादेर्हेतुत्वादुक्तम्—"प्रकरणादिना" इति ।

लक्षणास्थले हि प्रथमं गङ्गादिपदाच्छक्त्या मुख्यार्थप्रवाहाद्युपस्थितिर्भवति तादृशमुख्यार्थे घोषाद्याधारत्वादिबाधज्ञाने जाते "एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्" इतिरीत्या प्रवाहादिज्ञानेन तीराद्युपस्थितिर्भवति तदनन्तरं तीरादिविषयकशाब्दबोधो भवतीतिक्रम, अत्र च यद्यपि प्रवाहादिमुख्यार्थज्ञानेन तीरोपस्थितिर्भवतीति लक्षणाया मुख्यार्थवृत्तित्वं वक्तव्यं न पदवृत्तित्वं गङ्गादिपदेन तीरोपस्थितेरसम्भवाद् मुख्यार्थोपस्थापनानन्तरं लक्ष्यार्थोपस्थापकत्वासम्भवात् शब्दबुद्धिकर्मणां विरम्य व्यापाराभावाद् मुख्यार्थोपस्थितेश्चावश्यकत्वात् तथापि "शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यते" इतिनियमाद् मुख्यार्थवृत्तिलक्षणाया अपि पदे आरोपो भवति अन्यथा लक्ष्यार्थबोधस्य मुख्यार्थप्रवाहसम्बन्धज्ञानाधीनोपस्थित्या जायमानत्वेन लक्षणावृत्त्या पदज्ञानजन्योपस्थित्या चाऽजायमानत्वेन शाब्दबोधत्वं न स्याद् । पदजन्यपदार्थोपस्थितिजन्यबोधस्यैव शाब्दबोधत्वस्वीकारादित्यवधेयम् ।

अथेत्यादिनाशङ्कितं परिहरति—एवमपीति, शाब्दबोधोपयोगितायामीश्वरीयत्वानुपादानेनेश्वरानङ्गीकर्तृमते शाब्दबोधसम्भवेऽपीत्यर्थः । यदि संकेतस्य शब्दसम्बन्धत्वं स्यात् तदा संकेतस्य ज्ञातस्य पदार्थोपस्थापकत्वं स्यात् तदा च वृत्तित्वमपि स्याद् न च संकेतस्य शब्दसम्बन्धत्वे मानमस्ति—यत 'अयमस्य पिता अयमस्य पुत्रः' इत्येव यत्र प्रतीतिर्भवति तत्रैव न्यजनकभावादेः सम्बन्धत्वं भवति, अत्र च 'अर्थवत् पदम्' इतिप्रतीतिसत्त्वेऽपि 'पदवानर्थः' इतिप्रतीत्यभावात् संकेतस्य पदपदार्थसम्बन्धत्वं सम्भवति, सम्बन्धत्वाभावाच्च पदार्थोपस्थापकत्वाभाव प्राप्त पदार्थानुपस्थापकस्य च वृत्तित्वं नेष्टमित्यर्थः । ननु यथा 'भूतलवान् घटः' इतिप्रतीत्यभावेऽपि 'घटवद् भूतलम्' इतिप्रतीतिमात्रेण घटभूतलयोः संयोगस्य सम्बन्धत्वं भवति तथा 'पदवानर्थः' इतिप्रतीत्यभावेऽपि 'अर्थवत् पदम्' इतिप्रतीतिमात्रेण संकेतस्य पदपदार्थसम्बन्धत्वं किं न स्यादित्याशङ्क्याह—निष्प्रतियोगिकतयेति, निरूपकांशे नित्यसाकाङ्क्षत्वाभावादित्यर्थः । संयोगस्तु प्रतियोग्यंशे ( निरूपकांशे ) नित्यसाकाङ्क्ष एव यतः संयोग इत्युक्ते भवति जिज्ञासा कस्येति, संकेतस्त्विच्छैव इच्छा च प्रतियोग्यंशे नित्यसाकाङ्क्षा न सम्भवतीति निष्प्रतियोगिकतया संकेतस्य

एतेन शाब्दबोधौपयिकसम्बन्धत्वेन ईश्वरसंकेतज्ञानं हेतुस्तत्र मीमांसकानामपि संभवति तादृशज्ञानविरोधिविपरीतज्ञानाभावादित्यपि निरस्तम् ।

यत्तु स्वजन्यज्ञानविषयत्वप्रकारकेच्छाविशेष्यत्वमर्थे पदसम्बन्धः पदे चार्थस्य विपरीतः, अस्य सम्बन्धत्वमन्यथानुपपत्त्या कल्प्यते, एतादृशपरम्परया अपभ्रंशादिस्थले सम्बन्धत्वं न स्वीक्रियते इति तत्र तत्सम्बन्धावगाहि ज्ञानं भ्रम

---

सम्बन्धत्वसम्भवोऽपि नास्ति सम्बन्धत्वाभावे च पदार्थोपस्थापकत्वाभावस्तेन च वृत्तित्वाभाव इत्यर्थः। यद्यपि पदज्ञानस्यैव पदार्थोपस्थापकत्वमस्ति तथापि संकेतज्ञानस्यापि सहकारित्वात् संकेतस्य पदार्थोपस्थापकत्वमुक्तमित्यवधेयम् । प्रत्युत 'पदमर्थवाचकमर्थश्च पदवाच्य.' इत्येव प्रतीतिसत्त्वाद् वाच्यवाचकभाव एव पदपदार्थयो. सम्बन्ध इति मीमांसकाभिप्राय. ।

ननु यदीश्वरसंकेतत्वेन रूपेणेश्वरसंकेतस्य ज्ञानं शाब्दबोधहेतुरित्युच्येत तदेश्वरानङ्गीकर्तृमते ईश्वरज्ञानासम्भवाच्छाब्दबोधानुपपत्तिः स्यादपि न चैवमस्ति किं त्वीश्वरसंकेतस्यापि शाब्दबोधौपयिकसम्बन्धत्वेन ज्ञानं शाब्दबोधहेतुरित्युच्यते तच्च=ईश्वरसंकेतस्यापि शाब्दबोधौपयिक( शाब्दबोधोपायभूत ) सम्बन्धत्वेन ज्ञानं तु मीमांसकानामपि सम्भवत्येव, अत्र हेतुमाह– तादृशेति, तादृशज्ञानस्य=ईश्वरसंकेतस्य शाब्दबोधौपयिकसम्बन्धत्वेन ज्ञानस्य विरोधिभूतं यद् विपरीतं ज्ञानम्='ईश्वरसंकेतः शाब्दबोधौपयिकसम्बन्धो न' इत्याकारकं ज्ञानं तदभावात्, ईश्वरसंकेत· शाब्दबोधौपयिकसम्बन्धो न इत्याकारकं ज्ञानं प्रत्यपीश्वरज्ञानापेक्षास्ति न चेश्वरज्ञानं मीमांसकानां सम्भवतीत्यभिप्रायेणाह–एतेनेति । एतेन=उक्तेनेत्यपि निरस्तमित्यन्वय·, यदीश्वरसंकेतस्य सम्बन्धत्वं स्यात्तदेश्वरसंकेतस्य शाब्दबोधौपयिकसम्बन्धत्वेन ज्ञानं स्यादपि तेन च शाब्दबोधोऽपि स्याद् न चेश्वरसंकेतस्य सम्बन्धत्वं सम्भवति निष्प्रातियोगिकत्वादित्यर्थः ।

पुनराशङ्कते–यत्त्विति । स्वजन्यज्ञानविषयत्वप्रकारकेच्छाविशेष्यत्वं नाम पदजन्यो यो बोधस्तादृशबोधनिरूपितं यदर्थे विषयत्वं तादृशविषयत्वनिष्ठप्रकारतानिरूपितभगवदिच्छीयविशेष्यत्वं तच्चार्थेऽस्त्येव तदेवार्थे पदस्य सम्बन्ध·=एतादृशसम्बन्धेन पदविशिष्टोऽर्थ इतियावत् पदे चार्थस्य सम्बन्धो विपरीतो नाम स्व( अर्थ )विषयकबोधजनकत्वनिष्ठप्रकारतानिरूपितभगवदिच्छीयविशेष्यत्वं तच्च पदेऽस्त्येव, उक्ते प्रमाणमाह–अस्येति, अस्य=स्वजन्येत्याद्युक्तसम्बन्धद्वयस्य, पदज्ञानेन पदार्थोपस्थितिर्भवत्येव सा च पदपदार्थयोः सम्बन्धं विना नोपपद्यते इत्यन्यथानुपपत्त्या स्वजन्येत्याद्युक्तस्य सम्बन्धत्वं कल्प्यते, सिद्धे च सम्बन्धे "एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्" इतिन्यायेन पदज्ञानादर्थोपस्थितिः संभवति, ननु स्वजन्येत्याद्युक्तपरम्परासम्बन्धोऽपभ्रंशादिस्थलेऽपि स्यात् तेन चापभ्रंशस्यापि वाचकत्वं साधुत्वं च स्यादित्याशङ्क्याह–एतादृशेति । तत्र=अपभ्रंशादिस्थले । तत्सम्बन्धावगाहि=स्वजन्येत्याद्युक्तसम्बन्धावगाहि ज्ञानं भ्रमात्मकमेवेति नापभ्रंशस्य वाचक-

एवेति संप्रदायस्तदपि तुच्छम्— अक्लृप्तस्य तादृशेच्छाविषयत्वस्य संबन्धतोपगमे तादृशज्ञानविषयत्व—स्वसमानकालीनज्ञानविषयत्वादिपरम्पराया अपि विनिगमनाविरहेण संबन्धताप्रसङ्गात्, तस्मात् पदपदार्थयोः संबन्धान्तरमेव वाच्यवाचकभाव इति वदन्ति ।

यत्तु ज्ञाने पदानां शक्तिर्नत्वर्थे तथा च तज्ज्ञानशक्तत्वं तद्वाचकत्वं तच्च तद्विषयकशाब्दधीजनकतावच्छेदकधर्मवत्त्वम्, स च धर्मो वह्न्यादिनिष्ठदाहाद्यनुकूलशक्तिवत् पदार्थान्तरमेव । लाक्षणिकं च नानुभावकमेवेति न तत्र शक्तिः ।

---

व्याप्तिरित्यर्थः । परिहरति—तदपि तुच्छमिति । विनिगमनाविरहाद् दोषमाह—अक्लृप्तस्येति, स्वजन्येत्याद्युक्तसंबन्धः क्लृप्तस्तु नास्ति किं तु त्वया कल्प्यते तथा चाऽक्लृप्तस्य तादृशेच्छाविषयत्वस्य=स्वजन्यज्ञानविषयत्वप्रकारकेच्छाविशेष्यत्वस्य संबन्धत्वस्वीकारे विनिगमनाविरहात् तादृशज्ञानविषयत्वस्य नाम पदजन्यबोधनिरूपितार्थनिष्ठविषयत्वनिष्ठप्रकारतानिरूपितभगवज्ज्ञानीयविशेष्यत्वस्यापि संबन्धत्वं स्यात् पदपदार्थयोर्भगवज्ज्ञानीयविशेष्यताया अपि सत्त्वात् तथा स्वसमानकालीनज्ञानविषयत्वस्यापि संबन्धत्वं स्यादेव—अर्थसमानकालिकं यद् भगवज्ज्ञानं तद्विषयत्वस्य पदे पदसमानकालिकभगवज्ज्ञानविषयत्वस्य चार्थे सत्त्वादित्यर्थः । तस्मादाधिक्योक्तसंबन्धानामुपपत्त्यभावात् पदपदार्थयोर्वाच्यवाचकभाव एव संबन्धः स्वीकार्य इति मीमांसकस्याभिप्रायमुद्घाटयति—तस्मादिति । "वदन्ति" इत्यस्य पूर्वोक्तेन "अत्र मीमांसकानुयायिनः" इत्यनेनान्वयः ।

उक्तरीत्या मीमांसकाभिप्रायमनूद्य पुनरपि मीमांसकमतमनुवदति—यत्त्विति, जन्यनिरूपिता हि जनके शक्तिर्भवति यथा वह्नौ वह्निजन्यदाहपाकादिनिरूपिता, पदज्ञानेन चार्थज्ञानमेव जन्यते नत्वर्थस्तस्य पूर्वमेव सिद्धत्वादिति ज्ञाने=पदार्थज्ञाने ( निरूपितत्वं सप्तम्यर्थः ) पदानाम्=पदज्ञानस्य शक्तिरित्यर्थः । वाचकत्वलक्षणमाह—तज्ज्ञानमिति, तज्ज्ञानशक्तत्वं नाम घटादिपदार्थविषयकज्ञानोत्पादकशक्तिमत्त्वम् । ननु यदि तद्विषयकज्ञानोत्पादकशक्तिमत्त्वं वाचकत्वं तदा धूमस्यापि वह्निवाचकत्वं स्याद् धूमज्ञानेन वह्निज्ञानस्य जायमानत्वादित्याशङ्क्याह—तच्चेति, तद्विषयकेति—यथा घटविषयकशाब्दबोधजनकता घटपदेऽस्ति तत्र तादृशशाब्दबोधानुकूला शक्तिरप्यस्तीति सा शक्तिस्तादृशशाब्दबोधजनकताया अवच्छेदिका जातेति तादृशशाब्दबोधजनकतावच्छेदकशक्तिरूपो यो धर्मस्तद्वत्त्वं पदेऽस्त्येव तदेव तद्वाचकत्वम्, धूमे च न वह्निविषयकशाब्दबोधजनकत्वमिति न धूमस्य वह्निवाचकत्वापत्तिः । तथा च तद्विषयकशाब्दबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकशक्तिमत्त्वं तद्वाचकत्वमिति सिद्धम् । उक्तजनकतावच्छेदकधर्मस्वरूपमाह—स चेति । मीमांसके शक्ते पदार्थान्तरत्वस्वीकाराद्युक्तम्—पदार्थान्तरमिति । नन्वेवं लाक्षणिकस्य गङ्गादिपदस्यापि तीरादिवाचकत्वं स्यात्—तीरादिविषयकशाब्दबोधजनकशक्तिमत्त्वादित्याशङ्क्याह—लाक्षणिकमिति, लाक्षणिकपदस्य लक्ष्यार्थविषयकशाब्दबोधजनकत्वमेव नास्तीति न गङ्गादिपदस्य तीरादिवाचकत्वापत्तिरित्यर्थः । अनुभावकम्=शाब्दबोधजनकमितियावत् ।

घटादिपदस्य मितिमातृविषयकधीजनकत्वेपि न तद्वाचकत्वम्–तद्विषयकत्वावच्छिन्नज्ञानशक्तपदस्यैव तद्वाचकत्वात्, मितिमातृविषयकत्वेन च ज्ञानस्य न किंचित्पदशक्यता–ज्ञानसामान्यसामग्र्या एव मितिमातृभासकतया पदान्तरस्य च तदर्थभासकतया तद्विषयकत्वस्य तत्पदजन्यतावच्छेदकत्वे मानाभावात् ।

ननु यदि तद्विषयकशाब्दधीजनकतावच्छेदकधर्मवत्त्वमेव तद्वाचकत्वं तदा तव प्राभाकरस्य मते प्रत्येकज्ञाने विषयस्येव मितेः=तज्ज्ञानस्य मातुः=प्रमातुः ( आत्मनः ) च प्रकाशो भवत्येवेति घटादिपदस्य मितिमातृविषयकधीजनकत्वेन=मितिमातृविषयकशाब्दधीजनकतावच्छेदकधर्म( शक्ति )वत्त्वेन तद्वाचकत्वम्=मितिवाचकत्वं मातृवाचकत्वं च स्यादेवेत्याशङ्क्याह-घटादिपदस्येति । एवं घटादिपदजन्यबोधे नीलादीनां भासमानत्वेन नीलादिवाचकत्वापत्तिरपि ज्ञेया । घटादिपदस्य मितिमातृवाचकत्वाभावे हेतुमाह–तद्विषयकत्वेति, तद्विषयकत्वावच्छिन्नं यज्ज्ञानं तादृशज्ञानशक्तपदस्य तद्वाचकत्वमुच्यते तद्विषयकत्वावच्छिन्नेत्यत्र तद्विषयकत्वनिष्ठं ज्ञाननिरूपितमवच्छेदकत्वं चाऽन्यूनानतिप्रसक्तं ग्राह्यं मितिमातृविषयकत्वं च सकलज्ञानसाधारणत्वादतिप्रसक्तमेवेति न तस्य घटादिपदजन्यज्ञानावच्छेदकत्वमिति न घटादिपदस्य मितिमातृवाचकत्वापत्तिः, नीलादिविषयकत्वं च नीलपटादिविषयकबोधेप्यस्तीत्यतिप्रसक्तं पीतघटपदजन्यबोधे नास्तीति न्यूनवृत्त्यपीति न नीलादिविषयकत्वस्यापि घटादिपदजन्यबोधावच्छेदकत्वं येन घटादिपदस्य नीलादिवाचकत्वं स्यात्, घटादिविषयकत्वं च घटादिपदजन्यबोधस्याऽन्यूनानतिप्रसक्तत्वादवच्छेदकं भवतीति घटादिपदस्य घटादिवाचकत्वं च प्राप्तम्, तथा च 'तद्विषयकत्वावच्छिन्नशाब्दबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकशक्तिमत्त्वं तद्वाचकत्वम्' इति वक्तव्यम् । मितिमातृविषयकत्वस्य घटादिपदजन्यतावच्छेदकत्वाभावमुपपादयति–मितिमातृविषयकत्वेनेति, ज्ञानस्य मितिमातृविषयकत्वेन रूपेण किंचित्पदशक्यता नाम मितिमात्रादिपदभिन्नं यद् घटादिपदं तच्छक्यता नास्ति यतो ज्ञानसामान्यसामग्र्या मितिमातृभानं भवति तथा पदान्तरस्य=मितिमात्रादिपदस्य च तदर्थभासकतया=मितिमातृभासकतया मितिमातृविषयकत्वस्यातिप्रसक्तत्वात् तत्पदजन्यतावच्छेदकत्वे=घटादिपदजन्यतावच्छेदकत्वे( घटादिपदजन्यज्ञानावच्छेदकत्वे ) मानं नास्तीति न घटादिपदस्य मितिमातृवाचकत्वम्– यद्विषयकत्वस्य यत्पदजन्यतावच्छेदकत्वं तत्पदस्यैव तद्वाचकत्वस्वीकारादित्यर्थः । ननु यद्यऽतिप्रसक्ताया विषयताया घटादिपदजन्यतावच्छेदकत्वं न स्वीक्रियते तदा घटपदस्य घटवाचकत्वमपि न स्याद् यतो यत्र घटपदजन्यता नास्ति कलशपदजन्यतास्ति तत्रापि शाब्दबोधे घटत्वावच्छिन्नविषयतायाः सत्त्वेनातिप्रसक्तत्वादितिचेन्न यत्रैकं कार्यं प्रत्यनेकानि कारणानि भवन्ति तत्र कार्यतावच्छेदककोटौ कारणाव्यवहितोत्तरत्वनिवेश आवश्यक एव तथा च घटपदज्ञानाव्यवहितोत्तरजायमानघटत्वावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति घटपदज्ञानं कारणं कलशपदज्ञानाव्यवहितोत्तरजायमानघटत्वावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति कलशपदज्ञानं कारणमित्येवं विविच्य कार्यकारणभावो वक्तव्यस्तथा च घटपदज्ञानाव्यवहितोत्तरत्वविशिष्टा घटत्वावच्छिन्नविषयता

'कार्यान्वितस्वार्थे पदानां शक्तिः' इति वादिनां साक्षात्परम्परासाधारणकार्यत्वविषयतानिरूपितत्वेन घटादिविषयताया घटादिपदजन्यतावच्छेदकत्वेपि न घटादिपदस्य कार्यतावाचकत्वम् अपि तु लिङादिपदस्यैव-तद्विषयकत्वावच्छिन्नेत्यत्र साक्षात्परम्परासाधारणनिरूपितत्वाऽविशेषणतयाऽवच्छेदकत्वस्यैव निवेशात् ।

---

घटपदजन्यताया अतिप्रसक्ता नास्ति कलशपदजन्यतास्थले कलशपदज्ञानाव्यवहितोत्तरत्वविशिष्टाया एव घटत्वावच्छिन्नविषयताया सत्त्वादिति न घटपदस्य घटवाचकत्वानुपपत्तिरित्यवधेयम् ।

ननु त्वया हि 'तद्विषयकत्वावच्छिन्नशाब्दबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकशक्तिमत्त्वं तद्वाचकत्वम्' इत्युक्तं तत्र घटपदजन्यशाब्दबोधे यथा घटविषयकत्वमस्ति तथा तत्र प्रभाकरस्य मते कार्यान्वितस्वार्थे पदानां शक्तिस्वीकारात् कार्यत्वविषयकत्वमप्यस्त्येव कार्यत्वस्यापि तादृशशाब्दबोधे भासमानत्वादिति घटपदस्य घटवाचकत्वमिव कार्यत्ववाचकत्वमपि स्यादित्याशङ्क्याह-कार्यान्वितेति । कार्यत्वविषयतानिरूपिता आनयनादिरूपकार्यनिष्ठा विषयता, कार्यनिरूपिता च घटादिनिष्ठा विषयता ( विशेष्यताख्यविषयता ) भवतीति 'घटमानय' इत्यादौ साक्षात् कार्यत्वविषयतानिरूपिता हि कार्यनिष्ठा विषयता, परम्परया कार्यत्वविषयतानिरूपिता च घटनिष्ठा विषयता-कार्यनिष्ठविषयताद्वारैव घटविषयताया कार्यत्वविषयतानिरूपितत्वात्, निरूपितत्वेनेति तृतीयार्थो वैशिष्ट्यमितिपदार्थः, तथा च साक्षात्परम्परासाधारणं यत् कार्यत्वविषयतानिरूपितत्वं तद्विशिष्टा या घटनिष्ठा विषयता ( घटविषयकत्वमितियावत् ) सा घटपदजन्यशाब्दबोधनिष्ठजन्यताया सामानाधिकरण्येनावच्छेदिका भवतीति यद्यपि घटादिपदस्य कार्यत्ववाचकतापत्तिरस्ति शाब्दबोधनिष्ठघटादिपदजन्यतावच्छेदकीभूतायाः घटादिविषयताया परम्परया कार्यत्वविषयतानिरूपितत्वात् कार्यत्वस्यापि शाब्दबोधे भासमानत्वाद् अन्यथा घटादिवाचकत्वमपि न स्यात् तथापि न घटादिपदस्य कार्यतावाचकत्वं किं लिङादिपदस्यैव कार्यतावाचकत्वमस्तीत्यन्वयः । घटादिपदस्य कार्यत्ववाचकत्वाभावे हेतुमाह-तद्विषयकत्वावच्छिन्नेति, तद्विषयकत्वावच्छिन्नेत्यत्र नाम "तद्विषयकत्वावच्छिन्नज्ञानशक्तपदस्य" इत्यत्र ( उक्तवाचकत्वलक्षणे इति यावत् ) शाब्दबोधनिष्ठजन्यताया या तद्विषयकत्वनिष्ठा अवच्छेदकता सा यदि साक्षात्परम्परासाधारणीभूतनिरूपितत्वे विशेषणीभूतापि गृहीता स्यात्तदा कार्यत्वविषयतानिरूपितघटत्वावच्छिन्नविषयताशालिशाब्दबोधेन कार्यत्वविषयकत्वनिष्ठावच्छेदकत्वस्यापि वाचकत्वव्यवहारप्रयोजकतापत्त्या घटादिपदस्य कार्यत्ववाचकत्वमापद्येतापि यदा च साक्षात्परम्परासाधारणीभूतनिरूपितत्वे अविशेषणीभूतमेवावच्छेदकत्वं गृह्यते तदा कार्यत्वविषयकत्वनिष्ठावच्छेदकस्य तूक्तनिरूपितत्वांशे विशेषणमेवास्तीति तन्न ग्राह्यं घटविषयकत्वनिष्ठावच्छेदकत्वं च नोक्तनिरूपितत्वे विशेषणम्-विशेष्यभूतत्वाद् घट-

विषयताया विशेष्यतारूपत्वात्, कार्यत्वविषयतानिरूपितघटत्वावच्छिन्नविषयताकशाब्दबोधस्वीकारात् पूर्वपूर्वपदार्थस्य विशेषणतयाद्युत्तरोत्तरपदार्थानां विशेष्यत्वादिति न घटादिपदस्य कार्यतावाचकत्वापत्तिरित्यन्वय', तथा च 'निरूपितत्वांशे अविशेषणतापन्ना या तद्धर्मावच्छिन्ना (घटत्वावच्छिन्ना) विषयता तादृशविषयतानिष्ठा याऽवच्छेदकता तादृशावच्छेदकतानिरूपिका या शाब्दबोधनिष्ठा जन्यता तादृशजन्यतानिरूपितजनकतावच्छेदकशक्तिमत्त्वं तद्वाचकत्वम्' इतिसिद्धम्, कार्यत्वविषयतानिरूपितत्वे हि विशेषणतापन्ना कार्यत्वविषयतैवास्ति न तु घटविषयतेति घटपदस्य घटवाचकत्वं प्राप्तं न तु कार्यतावाचकत्वमितिसार' । अविशेषणतया=अविशेषणत्वेन रूपेण । अवच्छेदकत्वस्यैवेत्येवकारो भिन्नक्रमस्तेन 'अविशेषणतयैवाऽवच्छेदकत्वस्य निवेशात्' इत्यन्वय' । "अवच्छेदकत्वस्य" इत्यत्र 'अवच्छेदकस्य' इतिपाठे तु अवच्छेदकपदेन तद्विषयकत्वं ग्राह्यम्, अवच्छेदकीभूत घटविषयकत्वं च कार्यत्वविषयतानिरूपितत्वांशे विशेषणं नास्ति कार्यत्वविषयकत्वं च तत्र विशेषणमेवेत्युक्तमेव । तद्विषयकत्वं तद्विषयता चेत्यनर्थान्तरम् । किं वा घटादिनिष्ठापि विषयता निरूपकत्वसम्बन्धेन शाब्दबोधवृत्तित्वाच्छाब्दबोधनिष्ठजन्यताया अवच्छेदिका भवत्येव ।

ननु कार्यत्वविषयतापि 'पटमानय' इत्यादावपि सत्त्वादतिप्रसक्तैव अतिप्रसक्तधर्मस्य चावच्छेदकत्वं न स्वीक्रियते इति घटादिपदस्य पूर्वोक्तमितिमातृवाचकत्वपरिहारेणैव तद्रीत्या कार्यतावाचकत्वपरिहारोपि संभवतीति किमर्थोयम् ( कार्यान्वितस्वार्थे इत्यादिः ) ग्रन्थ इति चेत् ? उक्तरीत्यात्रापि कार्यतावच्छेदककोटौ कारणाव्यवहितोत्तरत्वनिवेश आवश्यक एव तथा च घटपदज्ञानाव्यवहितोत्तरजायमानकार्यत्वविषयतानिरूपितघटत्वावच्छिन्नविषयताकबोधं प्रति घटपदज्ञानं कारणमित्येव विशेषरूपेणैव कार्यकारणभावो वक्तव्य. घटपदज्ञानाव्यवहितोत्तरत्वविशिष्टा च कार्यत्वविषयता घटपदजन्यताया अतिप्रसक्ता नास्ति 'पटमानय' इत्यादिवाक्यजन्यशाब्दबोधस्थले पटादिपदज्ञानाव्यवहितोत्तरत्वविशिष्टाया एव कार्यत्वविषयताया' सत्त्वादिति घटपदस्य कार्यतावाचकत्वं प्राप्तं तत्परिहारायायं ग्रन्थः । नन्वेवं घटपदज्ञानाव्यवहितोत्तरत्वविशिष्टा मितिमातृविषयताऽपि घटपदजन्यताया अतिप्रसक्ता न स्यादिति घटपदस्य मितिमातृवाचकत्वं पुनरापद्येतेति चेत् ? मितिमात्रोर्विषयतैव नास्ति येन मितिमातृविषयताया घटादिपदजन्यतावच्छेदकत्वेन घटादिपदस्य मितिमातृवाचकत्वं स्याद् मितिमात्रोर्विषयित्वात् तयोर्भास्यता स्वीक्रियते न विषयता तथा च न घटपदस्य मितिमातृवाचकत्वापत्तिः । 'ज्ञानमस्ति न वा' 'अहमस्मि न वा' इत्याकारकसंशयव्यवच्छेदायैव मितिमात्रोर्विषयता स्वीक्रियते तादृशसंशयव्यवच्छेदस्तु मितिमात्रोर्भास्यतयापि संभवत्येव विषयतासम्बन्धेन संशयं प्रति विषयतासंबन्धेन निश्चयस्य प्रतिबन्धकत्ववद् भास्यतासंबन्धेनापि निश्चयस्य प्रतिबन्धकत्वस्वीकारादिति संक्षेपः, विस्तरस्तु गुरुमुखादेयावगन्तव्यः ।

न च कार्यानुकूलशक्तेः स्वरूपसत्तया एव कार्यानुकूलतया पदार्थोपस्थितौ शाब्दबोधे च ज्ञातोपयोगिनोऽर्थे पदस्य वृत्तिरूपशक्त्यन्तरस्य स्वीकार आवश्यक इति वाच्यम्, दाहादिकार्ये वन्ह्यादिनिष्ठशक्तेः स्वरूपसत्तया एवोपयोगित्वेपि शाब्दबोधानुकूलशक्तेः शाब्दबोधे पदार्थोपस्थितौ च ज्ञातोपयोगित्वोपगमे बाधकाभावात् ।

अतीतानागतपदज्ञानादपि शाब्दबोधोत्पत्त्या पदानामहेतुत्वेन तत्र हेतुतावच्छेदकशक्त्यसंभव इति तु न शङ्क्यम्, तन्मते पदानां नित्यत्वात् ।

अस्तु वा तज्ज्ञाननिष्ठशक्त्या तस्य वाचकत्वमिति मीमांसकमतविशेषः

---

न चेति— वह्नौ दाहानुकूला शक्तिरस्तीति ज्ञानाभावेपि वह्निसंयोगेन दाहो भवति, पदनिष्ठशक्तेश्च ज्ञानाभावे स कार्यभूता पदार्थोपस्थितिर्न भवतीति ज्ञाता स एव तादृशा शक्तिरुपयोगिनी भवतीति पदे ज्ञातोपयोगिन्येव शक्तिः स्वीकार्येति पूर्वपक्षार्थः, "ज्ञातोपयोगिनः" इति "वृत्तिरूपशक्त्यन्तरस्य" इत्यस्य विशेषणम्, "अर्थे" इति सप्तम्यर्थो निरूपितत्वम्, "पदस्य" इति षष्ठ्यर्थो निष्ठत्वम्, उक्तं स्वीकरोति— दाहादिकार्ये इति । अत्र पूर्वोत्तरपक्षयोः सामानार्थ्यादयमभिप्रायः—यथा हि वन्ह्यादिनिष्ठा शक्तिः स्वरूपसत्येवोपयोगिनी पदनिष्ठा च शक्तिः ज्ञातासत्युपयोगिनीति वैषम्यमस्ति तथा वन्ह्यादिनिष्ठा शक्तिस्तु जन्यो यो दाहादिस्तन्निरूपिता भवतु पदनिष्ठा च शक्तिर्जन्यं यज्ज्ञानं तन्निरूपिता न भवतु किं तु जन्यं यज्ज्ञानं तद्विषयो योऽर्थस्तन्निरूपितास्तीत्यपि वैषम्यं किं न स्यात्, पदनिष्ठशक्तेरर्थनिरूपितत्वस्वीकारे हि "ज्ञाने पदानां शक्तिर्नत्वर्थे" इति सिद्धान्तहानिः स्यादिति पूर्वपक्षाशयः, परिहारस्तु— एकवैषम्ये प्राप्ते सकलधर्मवैषम्यं न युक्तमिति यथा वन्ह्यादिनिष्ठा शक्तिर्जन्यदाहादिनिरूपिता तथा पदनिष्ठापि शक्तिर्जन्यज्ञाननिरूपितैव तथा च "ज्ञाने पदानां शक्तिः" इति सिद्धमित्युत्तरपक्षाशयः ।

नन्वतीतानागतपदानामपि ज्ञानाच्छाब्दबोधो भवति अतीतानागतपदानां सत्त्वाभावात्तेषु हेतुतावच्छेदकभूतशक्तेः सत्त्वं न सम्भवति—सत्त्वेन पदार्थे हेतुतायां हेतुतावच्छेदकशक्तेश्च सम्भवादित्याशङ्क्याह—अतीतेति । उत्तरमाह—तन्मते इति, मीमांसकमते वर्णात्मकान्येव पदानि वर्णाश्च नित्या इति पदानां नित्यत्वादुक्तशङ्काया अवसरो नास्तीत्यर्थः । अतीतपदानां ज्ञानाच्छाब्दबोधः पत्रपठनादौ विज्ञेयः—तत्र लेखकोच्चरितपदानामतीतत्वात्, अनागतपदानां ज्ञानाच्च शाब्दबोधो भविष्यत्कालिकराजाज्ञाप्रचारकपत्रपठनादौ विज्ञेयस्तत्र राज्ञोच्चार्यमाणपदानामनागतत्वात्, पत्रपठनं चैतत्पदोच्चारणहीनं मानसिकरूपं विज्ञेयम् ।

ननु वर्णानां नित्यत्वेपि पदानां नित्यत्वं न सम्भवति वर्णानुपूर्व्या एव पदरूपत्वाद् आनुपूर्व्याश्च स्पष्टमनित्यत्वात् तस्माद् यथा पदार्थज्ञाननिरूपिता शक्तिर्न पदार्थनिरूपिता तथा पदज्ञाननिष्ठा शक्तिर्न पदनिष्ठा तथा च यथा पदार्थज्ञाननिरूपितशक्तिस्वीकारेपि पदार्थस्यैव वाच्यत्वं न पदार्थ-

न चासौ विचारसहः, यतस्तन्मते लाक्षणिकस्यानुभावकत्वं दुर्घटम्-पदार्थोपस्थितिद्वारा शक्यार्थानुभवे शक्तस्येव लक्ष्यार्थबोधे लाक्षणिकस्यापि हेतुताया दुर्वारत्वात् तत्रापि शक्तेरावश्यकतया वाचकतापत्तेः, पदार्थोपस्थित्याऽन्यथासिद्धत्वे शक्तस्यापि तथात्वापातात् ।

न चाऽनुभावकतावच्छेदकशक्त्यभावाल्लाक्षणिकस्य नाऽनुभावकत्वसंभव इति वाक्यार्थघटकीभूताऽर्थान्तरवाचकमेव पदं स्वार्थस्येव तदन्वयप्रतियोगिलक्ष्यार्थस्याप्यनुभावकमुपेयते इतिवाच्यम्, एवं सति ' गङ्गायां घोषः ' इत्यादौ घोषा-

---

ज्ञानस्य तथा पदज्ञाननिष्ठशक्तिस्वीकारेपि पदस्यैव वाचकत्वं न पदज्ञानस्य, पदज्ञानं तु पदानामतीतानागतावस्थायामपि संभवतीति तत्र हेतुतावच्छेदकशक्तेरनुपपत्तिर्नास्तीत्यभिप्रायेणाह—अस्तु वेति, तज्ज्ञाननिष्ठशक्त्या=पदज्ञाननिष्ठशक्त्या । तस्य=पदस्य । मीमांसकमतमुपसंहरति—इतिमीमांसकमतविशेष इति ।

मीमांसकमतस्याऽयुक्तत्वमाह—न चासाविति । अयुक्तत्वमुपपादयति—यत इत्यादिना । तन्मते=मीमांसकमते यद् लाक्षणिकस्य पदस्याऽननुभावकत्वम्=शाब्दबोधाजनकत्वमुक्तं तद् दुर्घटम्=दुरुपपादमित्यन्वयः । उक्तदुर्घटत्वे हेतुमाह—पदार्थेति, स्पष्टोयं ग्रन्थः । स्वाभिप्रायमुद्घाटयति—तत्रापीति, तत्रापि=लाक्षणिकपदेपि, तन्मते उक्तरीत्या शाब्दबोधजनकशक्तिमत्त्वमेव वाचकत्वं लाक्षणिकपदे च तादृशशाब्दबोधानुकूलशक्तेः स्वीकारे लाक्षणिकपदस्य लक्ष्यार्थवाचकत्वं स्यात्, लाक्षणिकपदस्य लक्ष्यार्थविषयकशाब्दबोधजनकत्वं तु सर्वप्रसिद्धमिति तदनुकूलशक्तेस्तत्र स्वीकारोऽप्यावश्यक एवेत्यर्थः । ननु लाक्षणिकपदेन लक्ष्यार्थस्योपस्थितिमात्रं भवति तादृशोपस्थित्या च लक्ष्यार्थविषयकः शाब्दबोधो भवतीति लाक्षणिकपदस्य लक्ष्यार्थविषयकोपस्थित्या लक्ष्यार्थविषयकशाब्दबोधं प्रत्यऽन्यथासिद्धत्वेन कारणत्वमेव नास्ति येन तत्र लक्ष्यार्थविषयकशाब्दबोधजनकशक्तिस्वीकारापत्तिः स्यादित्याशङ्क्य प्रतिबन्दीमाह—पदार्थोपस्थित्येति । एवं हि शक्तपदेन शक्यार्थविषयकोपस्थितिमात्रं तया चोपस्थित्या शाब्दबोध इत्यपि स्वीकार्यं तथा च शक्तस्यापि पदस्य शक्यार्थविषयकोपस्थित्या शक्यार्थविषयकशाब्दबोधं प्रत्यन्यथासिद्धत्वेन कारणत्वं न स्यादिति तत्रापि शक्तिस्वीकारो व्यर्थ एव स्यादित्यर्थः । तर्कमते तु ' गङ्गापदं तीरं बोधयतु ' इत्याकारकविशिष्टेश्वरेच्छायाः स्वीकाराभावात् लाक्षणिकपदस्य लक्ष्यार्थवाचकत्वापत्तिर्नास्ति, अधिकमग्रे वक्ष्यति ।

नन्वऽनुभावकतावच्छेदकशक्तिमतो ह्यनुभावकत्वम्=शाब्दबोधजनकत्वं संभवति यथा शक्तपदस्य लाक्षणिकपदस्य चानुभावकतावच्छेदकशक्तिरहितत्वान्नानुभावकत्वसंभवः, 'गङ्गायां घोषः ' इत्यादिवाक्यार्थघटकीभूतं यदर्थान्तरं घोषपदार्थस्तद्वाचकं यद् घोषपदं तदेव स्वार्थस्येव=घोषपदार्थस्येव तदन्वयप्रतियोगिभूतम्=घोषान्वयप्रतियोगिभूतं यल्लक्ष्यार्थभूतं तीरं तस्यानुभावकमुपेयते इति लक्ष्यार्थविषयकशाब्दबोधस्याप्यनुपपत्तिर्नास्तीत्याशङ्क्याह—न चेति । घोषे तीरस्था-

दिपदस्य गङ्गातीरादिरूपार्थोऽनुभावकतावच्छेदकशक्तिमत्त्वेन तद्वाचकत्वापत्तेः। लाक्षणिकस्यानुभावकत्वे शक्तपदाघटितात् 'धूमात्' इत्यादिहेतुवाक्यादन्वयानुपपत्तिः-तत्र धूमादिपदस्य ज्ञाने विभक्तेश्च ज्ञाप्यत्वे लाक्षणिकत्वात्।

अथ लक्ष्यार्थस्य न शाब्दबोधे प्रवेशः अपि तु स्मृतस्य तस्य समभिव्याहृतपदार्थेऽसंसर्गाग्रहमात्रं तथा च नानुपपत्तिरिति, न च लक्ष्यार्थस्य शाब्दबोधविष-

---

येतासम्बन्धेनान्वयात् तीरस्य घोषान्वयप्रतियोगित्व ज्ञेयम्। उक्ते दोषमाह-एवमिति। एवं हि घोषपदस्य तीरवाचकत्वं प्राप्तं न चैतदिष्टमित्यर्थः। तद्वाचकत्वापत्तेः=तीरवाचकत्वापत्तेः। ननु शक्तिर्हि द्विविधास्ति-पदार्थोपस्थित्यनुकूला शाब्दबोधानुकूला च तत्र यत्रोभयविधैव शक्तिर्भवति तस्यैव वाचकत्वमिष्टं यथा शक्त घटादिपदस्य 'गङ्गायां घोषः' इत्यत्र गङ्गापदे तीरोपस्थित्यनुकूलशक्तेः सत्त्वपि तीरविषयकशाब्दबोधानुकूलशक्तिर्नास्तीति न गङ्गापदस्य तीरवाचकत्वापत्तिः, घोषपदे च तीरविषयकशाब्दबोधानुकूलशक्तेः सत्त्वपि तीरोपस्थित्यनुकूला शक्तिर्नास्तीति न घोषपदस्यापि तीरवाचकत्वापत्तिः, गङ्गापदेन तीरोपस्थितिर्भवति घोषपदेन च तीरविषयकशाब्दबोधो भवतीति न काचिदापत्तिर्वाऽनुपपत्तिर्वा, वाचकत्वं तु तद्धर्मावच्छिन्नविषयकोपस्थितिनिष्ठजन्यतानिरूपितजनकतावच्छेदकशक्तिमत्त्वं इति तद्विषयकत्वावच्छिन्नशाब्दबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकशक्तिमत्त्वम्, न च तीरनिरूपिततादृशोभयशक्तिमत्त्वं गङ्गापदे वा घोषपदे वास्तीति न तयोस्तीरवाचकत्वापत्तिरित्याशङ्क्य दोषान्तरमाह-लाक्षणिकस्येति, 'गङ्गायां घोषः' इत्यादौ शक्तगङ्गाघोषादिपदसत्त्वेन तादृशपदेन लक्ष्यार्थविषयकशाब्दबोधसम्भवेऽपि 'पर्वतो वह्निमान् धूमात्' इत्यत्र 'धूमज्ञानज्ञाप्यवह्निमान् पर्वतः' इत्याकारकबोधोदयेन 'धूमात्' इतिवाक्ये धूमपदस्य धूमज्ञाने पञ्चमीविभक्तेश्च ज्ञाप्यत्वे लक्षणाङ्गीकारात् शक्तस्य पदान्तरस्य चाऽभावात् 'धूमात्' इतिहेतुवाक्यादन्वयानुपपत्तिः=शाब्दबोधानुपपत्तिः स्यादिति लाक्षणिकपदस्याप्यनुभावकत्वं स्वीकार्यमित्यर्थः।

ननु लक्ष्यार्थस्य शाब्दबोधे प्रवेश एव नास्ति नापि शाब्दबोधविषयत्वमेव न स्वीक्रियते इति लक्ष्यार्थविषयकशाब्दबोधानुपपत्तिर्न दोषः, इत्याशङ्कते-अथेति। नन्वेवम् 'गङ्गायां घोषः' इत्यत्र तीरबोधाभावे घोषार्थिनस्तीरे प्रवृत्तिः कथं स्यादित्याशङ्क्याह-अपि त्विति, लक्ष्यार्थस्य तीरादेर्गङ्गादिपदेनोपस्थितिस्तु भवत्येवेति स्मृतस्य तस्य लक्ष्यार्थस्य समभिव्याहृते घोषादिपदार्थेऽसंसर्गाग्रहमात्रेण तत्र प्रवृत्तिः सम्भवत्येवेति अनुपपत्तिः=अन्वयानुपपत्तिर्नास्ति, यथा मीमांसकमते शुक्तिरजतज्ञानस्थले रजतप्रत्यक्षाभावेऽपि 'नेदं रजतम्' इत्याकारकबाधज्ञानाभावादेव रजतार्थिनः शुक्तिग्रहणे प्रवृत्तिर्भवति तथा 'गङ्गायां घोषः' इत्यत्रापि तीरविषयकशाब्दबोधाभावेऽपि 'घोषस्तीरवृत्तिर्न' इत्याकारकबाधज्ञानाभावादेव घोषार्थिनस्तीरे प्रवृत्तिः सम्भवतीतिभावः, बाधज्ञानाभाव एवासंसर्गाग्रहपदेनोच्यते। ननु यदि लक्ष्यार्थस्य शाब्दबोधविषयत्वं न स्यात्तदा वक्तुरागेण=लक्ष्यार्थ-

यत्वानुपगमे तदुपरागेण 'शृणोमि' इत्यनुव्यवसायानुपपत्तिरितिवाच्यम्, इष्टत्वाद् विधेयोपरागेणैव तथाप्रत्ययात्, लक्ष्यार्थस्य शाब्दबोधविषयत्वेपि तस्य विधेयतया भानानभ्युपगमात् "विधौ न परः शब्दार्थः" इतिसिद्धान्तादितिचेत्?

-न–'मञ्चाः क्रोशन्ति' इत्यादौ लक्ष्यार्थमञ्चस्थपुरुषादेः शाब्दबोधविषयताया आवश्यकत्वात्. अन्यथा पूर्वाननुभूतस्य पुरुषादेःप्रतीत्यनिर्वाहात्, अननुभूतस्य स्मरणासम्भवात्। समानप्रकारकत्वमात्रेण शाब्दबोधपदार्थोपस्थित्योः कार्य

---

विषयकत्वेन (लक्ष्यार्थप्रकारत्वेन वा) 'शृणोमि=तीरं शृणोमि' इत्याद्यनुव्यवसायो न स्यात्, अनुव्यवसायस्य स्मृतिरूपत्वात् स्मृतेश्चानुभूतार्थविषयकत्वनियमात्, 'शृणोमि' इति च शाब्दोनुव्यवसायः शाब्दानुभवविषयविषयक एव सम्भवति लक्ष्यार्थस्य च त्वया शाब्दबोधविषयत्वं न स्वीक्रियते इति तद्विषयकानुव्यवसायानुपपत्तिरित्याशङ्क्याह– न चेति, उक्ते इष्टापत्तिमाह–इष्टत्वादिति, लक्ष्यार्थविषयकानुव्यवसाय एव न स्वीक्रियते येन तदनुपपत्तिर्दोषः स्यादित्यर्थः। उक्ते हेतुमाह–विधेयेति, विधेयोपरागेण=विधेयविषयकत्वेन, तथाप्रत्ययात्=अनुव्यवसायविषयताप्रत्ययात्, विधेयस्यैवानुव्यवसायो भवतीत्यर्थः। स्वाभिप्रायमुद्घाटयति–लक्ष्यार्थस्येति, लक्ष्यार्थस्य शाब्दबोधविषयत्वस्वीकारेपि तस्य=लक्ष्यार्थस्य विधेयतया भानं नाम विधेयत्वं न स्वीक्रियते, शक्यसम्बन्धित्वेन गृहीतो हि लक्ष्यार्थो भवति "विधिरत्यन्तमप्राप्तौ" इति प्रमाणात् प्रमाणान्तरेण गृहीतस्य च विधेयत्वं न भवतीति न लक्ष्यार्थस्य विधेयत्वसम्भवः, प्रमाणमाह–विधाविति, विषयत्वं सप्तम्यर्थस्तथा च परः=शक्यार्थभिन्नः शब्दार्थः=लक्ष्यार्थो विधिविषयः (विधेयः) न भवतीति विधेयत्वाभावादेव लक्ष्यार्थस्यानुव्यवसायविषयत्वमपि न भवतीति न तदनुपपत्तिर्दोष इत्यर्थः।

अथेत्यादिनाशङ्कितं परिहरति–नेति, 'मञ्चा क्रोशन्ति' इत्यत्र मञ्चपदस्य मञ्चस्थपुरुषे लक्षणास्ति मञ्चानां क्रोशनकर्तृत्वासम्भवाद् मञ्चस्थत्वस्य मार्जारादौ सम्भवेपि क्रोशनकर्तृत्वस्य तत्राप्यसम्भवादिति मञ्चपदेनात्र लक्षणावृत्त्या लक्ष्यार्थस्य मञ्चस्थपुरुषस्य प्रतीयमानस्य शाब्दबोधविषयत्वमावश्यकमेवेत्यर्थः। विपक्षे बाधकमाह–अन्यथेति, यदि मञ्चस्थपुरुषे लक्ष्यार्थभूते शाब्दबोधविषयता न स्यात्तदा तादृशमञ्चस्थपुरुषस्य पूर्वाननुभूतत्वाद् अननुभूतस्य च स्मृतेरप्यसम्भवात् प्रतीतिनिर्वाहो न स्याद् भवति च प्रतीतिरिति शाब्दबोधविषयताऽवश्यं स्वीकार्येत्यर्थः। 'गङ्गायां घोषः' इत्यादौ तु लक्ष्यार्थस्य तीरादेः पूर्वानुभूतत्वेन स्मृतिरूपा प्रतीतिः सम्भवतीति तत् त्यक्त्वा 'मञ्चा क्रोशन्ति' इत्युदाहृतम्। ननु शाब्दबोधविषयतायां वृत्त्यधीनोपस्थितेः कारणत्वात् मञ्चस्थपुरुषस्य च पूर्वमननुभूतत्वादुपस्थितिरेव न सम्भवतीति कथं तस्य शाब्दबोधे भानं स्यादित्याशङ्क्य गुरुमतेन मञ्चस्थपुरुषस्य पूर्वाननुभूतस्यापि शाब्दबोधविषयतामुपपादयति–समानेति, अयमर्थः–तर्कमते शक्तिग्रहकाले घटत्वेन रूपेण सकलघटानां सामान्यलक्षणाप्रत्यास-

न च तथा सति बोधांशे गङ्गापदजन्यत्वानवगाहितया सर्वविषयकत्वानुपपत्तिरितिवाच्यम्, तीरादिनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकघटकतया तदनव-

बोधविषयत्वेन रूपेण तत्प्रकारकत्वम्=बोधविषयत्वप्रकारकत्वमीश्वरेच्छाया नोपगम्यते येन गङ्गापदस्य तीरवाचकत्वं स्यादित्यर्थः । अत्र 'गङ्गापदजन्यो बोधो भवतु' 'तीरं च बोध विषयो भवतु' इत्येवं विशकलिताया एव भगवदिच्छायाः स्वीकारान्न गङ्गादिपदानां तीरादिवाचकत्वापत्तिर्न वा अभ्रशानां वाचकत्वापत्तिरितिसारः । नन्वेवमीश्वरेच्छाया सर्वविषयकत्वं न स्यात्—तीरे गङ्गापदजन्यबोधविषयत्वस्यावगाहनाभावादित्याशङ्क्याह—तदनभ्युपगमेऽपीति, तदनभ्युपगमे='तीरं गङ्गापदजन्यबोधविषयो भवतु' इत्याकारकविशिष्टेच्छाया अस्वीकारेऽपि तस्याः=ईश्वरेच्छायाः सर्वविषयकत्वव्याघातो नास्ति यत उक्तविशकलितेच्छास्वीकारपक्षेऽपि तीरे बोधविषयत्वं बोधे च गङ्गापदजन्यत्वमवगाहितमेव न च तदधिकं किंचिदस्ति यस्यानवगाहनेन सर्वविषयकत्वव्याघातः स्यात् । उक्तविशिष्टेच्छाया वाच्यवाचकभावस्थल एव स्वीकारादिति सर्वं सुस्थम् ।

ननु यदि 'तीरं बोधविषयो भवतु' इत्येवेश्वरेच्छा स्वीक्रियते तदा गङ्गापदस्य तीरवाचकत्वाभावेऽपीश्वरेच्छायास्तीरांशे गङ्गापदजन्यबोधविषयकत्वाभावेन बोधांशे गङ्गापदजन्यत्वानवगाहितया च सर्वविषयकत्वव्याघातः स्यादेव यदि च बोधांशे गङ्गापदजन्यत्वावगाहनार्थम् 'तीरं गङ्गापदजन्यबोधविषयो भवतु' इतीश्वरेच्छा स्वीकृत्य तीरांशे गङ्गापदजन्यबोधविषयत्वं स्वीक्रियते तदा गङ्गापदस्य तीरवाचकत्वं स्यादित्युभयतः पाशारज्जुरित्याशङ्क्याह— न चेति । तथा सति=उक्तरीत्या तीरांशे शुद्धबोधविषयत्ववत्त्वेन रूपेण गङ्गापदजन्यबोधविषयत्वप्रकारकेश्वरेच्छाया स्वीकारे सति, 'तीरं बोधविषयो भवतु' इत्याकारकेश्वरेच्छास्वीकारे सतीतियावत् । 'तीरविषयको बोधो गङ्गापदजन्यो भवतु' इत्याकारकेश्वरेच्छाया अस्वीकारादितिसारः । परिहारमाह— तीरादिति, उक्तरीत्या द्विविधविशकलितेच्छास्वीकारेण 'बोधो गङ्गापदजन्यो भवतु' इतीच्छाया स्वीकृतत्वाद् बोधांशे गङ्गापदजन्यत्वावगाहनमपि जातमेवेति नेश्वरेच्छायाः सर्वविषयकत्वव्याघातः, 'तीरं बोधविषयो भवतु' इत्येव तीरांशे शुद्धबोधविषयत्वेनेश्वरेच्छायाः स्वीकारान्न गङ्गापदस्य तीरवाचकत्वापत्तिरपीतिसारः । 'तीरं बोधविषयो भवतु' इत्यत्र तीरमेव विशेष्यं तीरनिष्ठविशेष्यतानिरूपितप्रकारता बोधे वर्तते तस्मिंश्च बोधे गङ्गापदजन्यत्वमप्यस्तीति प्रकारतावच्छेदकं गङ्गापदजन्यत्वमितिभावः तथा च तीरनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकघटकतया नाम तीरनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकतया तदनवगाहित्वेऽपि=गङ्गापदजन्यत्वानवगाहित्वेऽपि (ईश्वरेच्छाया इतिशेषः) बोधांशे स्वातन्त्र्येण नाम तीरांशं त्यक्त्वा किं वोक्तप्रकारतानवच्छेदकतया 'बोधो गङ्गापदजन्यो भवतु' इत्येवं तदवगाहित्वोपगमात्=गङ्गापदजन्यत्वावगाहित्वोपगमादेव न सर्वविषयकत्वव्याघातापत्तिः, गङ्गापदजन्यताया तीरनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकत्वं न स्वीक्रियते इत्यर्थः । 'तीरं गङ्गापदजन्यबोधविषयो भवतु' इति वा

गाहित्वेपि बोधांशे स्वातन्त्र्येण तदवगाहित्वोपगमात् । तथा च तत्पदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेनेश्वरेच्छावत्त्वस्य इच्छानिरूपिततादृशविशेष्यतावत्त्वस्यैव वा तत्पदशक्यतारूपतया नातिप्रसङ्गः ।

उक्तरीत्यैव च घटादिपदजन्यबोधविषयस्य घटान्वितकर्मत्वानयनादेर्घटादिसंसर्गस्य च तादृशबोधविषयत्वप्रकारकेश्वरेच्छाविषयत्वेपि घटादिपदावाच्यत्वमुपपादनीयम् ।

---

तीरविषयको बोधो गङ्गापदजन्यो भवतु' इति येश्वरेच्छास्वीकारे एव तादृशेच्छया गङ्गापदजन्यत्वस्य तीरनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकतयाऽवगाहनं सम्भवति नोक्तविशकलितेच्छास्वीकारपक्षे इत्यवधेयम् । उपसंहरन् शक्यत्वस्वरूपमाह—तथा चेति, यथा—घटपदजन्यबोधविषयत्वं घटेऽस्ति तादृशबोधविषयत्वनिष्ठा बोधविषयत्वत्वावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपितविशेष्यता घटेऽस्तीति तादृशविशेष्यतासम्बन्धेन 'घटपदं घटबोधं जनयतु' इतीश्वरेच्छावत्त्वं घटे प्राप्तं तदेव घटपदशक्यत्वमस्तीति घटस्य वाच्यत्वं घटपदस्य च वाचकत्वं सिद्धम्, तीरे च शुद्धबोधविषयत्वमेव स्वीक्रियते न गङ्गापदजन्यबोधविषयत्वमिति तीरे गङ्गापदजन्यबोधविषयत्वत्वावच्छिन्नप्रकारतानिरूपितविशेष्यताया अभावेन तादृशविशेष्यतासम्बन्धेनेश्वरेच्छावत्त्वमपि न सम्भवतीति न तीरस्य गङ्गापदवाच्यत्वं न वा गङ्गापदस्य तीरवाचकत्वं वा प्राप्नोति । पक्षान्तरमाह—इच्छानिरूपितेति, भगवदिच्छानिरूपिता या तादृशविशेष्यता=तत्पदजन्यबोधविषयत्वत्वावच्छिन्नप्रकारतानिरूपितविशेष्यता तादृशविशेष्यतावत्त्वमेव तत्पदशक्यत्वमिति घटादीनामेव घटादिपदवाच्यत्वं प्राप्तं न तीरादीनां गङ्गादिपदवाच्यत्वमित्यर्थः । समन्वयः पूर्ववदेव । नातिप्रसङ्गः=गङ्गादिपदानां लक्ष्यतीरादिवाचकत्वापत्तिर्नास्ति । अत्र हरिनाथभट्टाचार्यः—"ननु तादृशसम्बन्धेन ( उक्तविशेष्यतारूपसम्बन्धेन ) ईश्वरेच्छाया शक्यतात्वे 'घटपदशक्यत्वं घटे न तु पटे' इत्यादिव्यवहारानुपपत्तिः—वृत्त्यनियामकतादृशसम्बन्धावच्छिन्नप्रतियोगिताकाभावाऽप्रसिद्धेः, सम्बन्धान्तरावच्छिन्नतादृशशक्यत्वाभावस्य तु घटेपि सत्त्वेन 'घटे न घटपदशक्यत्वम्' इत्यादिव्यवहारापत्तेरित्यत आह--इच्छानिरूपितेत्यादि" इति ।

उक्तरीत्येति—यद्यपि 'घटमानय' इत्यत्र घटपदजन्यबोधविषयत्वं यथा घटस्यास्ति तथा घटान्वितकर्मत्वस्य घटान्वितानयनस्य कर्मत्वादिभिर्घटादिसंसर्गस्य चाप्यस्त्येव—एतादृशवाक्यजन्यबोधे भासमानत्वादिति कर्मत्वादौ तादृशबोधविषयत्वप्रकारकेश्वरेच्छाविषयत्वं नामेश्वरेच्छानिरूपिता या घटपदजन्यबोधविषयत्वत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतोक्ता तादृशविशेष्यतावत्त्वमस्त्येवेति कर्मत्वादीनां घटादिपदवाच्यत्वं स्यादेव तथापि 'कर्मत्वादिकं घटपदजन्यबोधविषयो भवतु' इत्याकारकविशिष्टेच्छा न स्वीक्रियते किं तु 'कर्मत्वादिकं बोधविषयो भवतु' 'घटपदजन्यश्च बोधो भवतु' इत्येवं विशकलितमिच्छाद्वयं स्वीक्रियते तथा चात्र घटपदजन्यत्वस्योक्तरीत्या कर्मत्वादिनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकतयाऽनवगाहनाद् वस्तुतो घटपदज-

अन्विताभिधानवादिनस्तु पदार्थसंसर्गस्यापि वाच्यतां स्वीकुर्वन्ति तन्मते 'इतरान्वितो घटो घटपदशक्यः' एतादृशमेव शक्तिज्ञानं शाब्दबोधप्रयोजकम्। 'घटो घटपदवाच्यः' इत्याकारकस्याऽन्वयाशानन्तर्भावेन शक्तिग्रहस्य तथात्वे वृत्तिग्रहाविषयतया पदार्थसंसर्गस्य शाब्दबोधविषयतानुपपत्तेः।

---

न्यबोधविषयत्वं वाच्यत्वमिति प्रकारतानिरूपितविशेष्यताया कर्मत्वादावभावाच्च न कर्मत्वादीनां घटादिपदवाच्यत्वापत्तिर्न वा घटादिपदानां कर्मत्वादिवाचकतापत्तिः, बोधांशे स्वातन्त्र्येण घटादिपदजन्यबोधस्यावगाहनाच्च नेश्वरेच्छाया सर्वविषयकत्वाद् व्याप्तोऽपीत्यर्थः।

सम्प्रति प्रभाकरमतमाह—अन्विताभिधानेति, अन्वितस्य=आनयनादिरूपेतरपदार्थेनान्वितस्य=विशिष्टस्याऽभिधानम्=उपस्थापनम्=उपस्थितिः—शक्तिग्रहविषयस्यैवोपस्थितिविषयत्वसम्भवात् शक्तिग्रहो हि बालस्य 'घटमानय' इत्यादिवाक्येन जायमान आनयनादिरूपेतरपदार्थेनान्वितविषयक एव भवतीत्यन्विताभिधानमेव युक्तं न त्वभिहितान्वय इति प्राभाकराणामभिप्रायः। अभिहितानाम्=वृत्त्योपस्थितानामेव घटादीनामितरपदार्थेनाऽन्वयो भवति—आनयेत्यादिपदानामावापोद्वापाभ्यां बालस्य घटादिपदानां शुद्धघटादिपदार्थे शक्तिग्रहसम्भवादित्यभिहितान्वयवादिनां प्राभाकरेतराणामभिप्रायः, शाब्दबोधस्तूभयमतेनान्वितविषयक एव त्वभिधेयम्।

पदार्थसंसर्गस्य नाम नीलादिपदार्थान्तरस्य च समवायादिलक्षणसम्बन्धस्तस्य वाच्यताम्=घटादिपदवाच्यतां स्वीकुर्वन्ति—घटादिपदजन्यबोधविषयस्य घटादिपदवाच्यत्वमावश्यकमेवाऽन्यथा घटादेरपि घटादिपदवाच्यत्वं न स्यात् अपि च 'नीलो घटः' इत्यादौ नीलादिप्रतियोगिकसमवायस्यापि घटादिपदजन्यबोधविषयत्वम् 'नीलसमवायवान् घटः' इत्याद्याकारकबोधस्य जायमानत्वादिति नीलादिसमवायस्यापि घटादिपदवाच्यत्वं प्राप्तमित्यभिप्रायः। उक्तमतमुपपादयति—तन्मत इति, तन्मते=प्राभाकरमते 'इतरान्वितो घटो घटपदशक्यः' इत्येतादृशमेव शक्तिज्ञानं शाब्दबोधप्रयोजकमस्ति एतादृशशक्तिज्ञानविषयत्वं च घटवत् पदार्थान्तरसंसर्गस्याप्यस्तीति शक्तिज्ञानविषयत्वं च वाच्यत्वमावश्यकमन्यथा घटादेरपि घटादिपदवाच्यत्वं न स्यादिति पदार्थान्तरसंसर्गस्यापि घटादिपदवाच्यत्वं प्राप्तमित्यर्थः। विपक्षे बाधकमाह—घट इति, यदि 'इतरान्वित' इत्याकारकस्य न्वयांशस्यान्तर्भावं विना केवलम् 'घटो घटपदशक्यः' इत्याकारक एव शक्तिग्रहः स्यात् तदा पदार्थान्तरसंसर्गस्य वृत्तिग्रहाऽविषयतया शाब्दबोधविषयत्वं न स्यात्—वृत्तिग्रहविषयस्यैव शाब्दबोधविषयत्वस्वीकाराद् अन्यथातिप्रसङ्गात्। तथात्वे=शाब्दबोधप्रयोजकत्वे।

नन्वाऽऽनयनादीतरपदार्थघटितस्य घटादेः 'घटमानय' इत्यादिवाक्यप्रतिपाद्यतया तादृशवाक्यजन्यशाब्दबोधात् प्राक् तत्र=पदार्थान्तरघटितघटादौ घटादिपदस्य शक्तिग्रह एव न सम्भवति—अनुपस्थितत्वाद् उपस्थित एव पदार्थे शक्तिग्रहसम्भवात् तथा च पदार्थान्तरसंसर्गस्य शक्तिग्रहावि-

न चेतरान्वितघटस्य वाक्यप्रतिपाद्यतया शाब्दबोधात् प्राक् (तत्र) शक्तिग्रह एव दुर्घटः–अनुपस्थितत्वादितिवाच्यम्, विशेषतः पदार्थान्तरघटितस्य=तदन्वितघटादिरूपवाक्यार्थस्य प्रागनुपस्थितावपि इतरपदार्थत्वादिना सामान्यधर्मेण तद्घटितस्य=तदन्वितघटादेः प्रागुपस्थितिसंभवेन तत्र शक्तिग्रहस्य सुघटत्वात् ।

वस्तुतस्तु पदार्थान्तरमनन्तर्भाव्य केवलाऽन्वयांशान्तर्भावेनैव शक्तिग्रहस्य शाब्दधीप्रयोजकतोपेयते–पदार्थान्तरस्य पदान्तरलभ्यतया तदंशान्तर्भावेन शक्तिग्रहस्यानुपयुक्तत्वात् ।

न चान्वयस्य पदवाच्यत्वे तदंशे शक्तिग्रहस्य शाब्दबोधोपयोगित्वे च मानाभाव इतिवाच्यम्, तद्विषयकशाब्दबोधं प्रति वृत्तिज्ञानजन्यतदुपस्थितिहेतुतायाः सामान्यत एव क्लृप्ततया वृत्तिज्ञानादन्वयानुपस्थितौ तस्य शाब्दबोधविषयत्वाऽसं-

---

पयतया घटादिपदवाच्यत्वापत्तिर्न स्वीक्रियेत्याशङ्क्याह– न चेति । परिहारहेतुमाह–विशेषत इति । "पदार्थान्तरघटितस्य" इतिपदं स्वयं व्याचष्टे–तदन्वितेति । "तद्घटितस्य" इतिपदं व्याचष्टे–तदन्वितघटादेरिति । विशेषतः=आनयनादिविशेषरूपेणाऽऽनयनादिपदार्थान्तरघटितस्य वाक्यार्थभूतस्य घटादेः शाब्दबोधात् प्रागुपस्थित्यसम्भवेऽपीतरपदार्थत्वादिरूपसामान्यधर्मेण रूपेण तद्घटितस्य=आनयनादिघटितघटादेः शाब्दबोधात् प्रागप्युपस्थितिसम्भवेन तत्र=इतरपदार्थत्वादिसामान्यधर्मरूपेणाऽऽनयनाद्यन्वितघटादौ शक्तिग्रहस्य सम्भवात्, तथा च पदार्थान्तरसंसर्गस्य शक्तिग्रहविषयत्वाद् घटादिपदवाच्यत्वे न काचिदनुपपत्तिरित्यन्वय ।

वस्तुतस्त्वाऽऽनयनादिपदार्थान्तरस्य 'आनय' इत्यादिपदान्तरेण बोधसम्भवात् तत्र घटादिपदशक्तिग्रहविषयत्वस्वीकारस्यानुपयुक्तत्वात् प्राभाकरमतेन निष्कर्षमाह– वस्तुत इति । तथा च 'अन्वितो घटो घटपदशक्य' इत्येव शक्तिग्रहो जायते । तदंशान्तर्भावेन=पदार्थान्तरांशान्तर्भावेन ।

न चाऽन्वयस्य=पदार्थान्तरसंसर्गस्य घटादिपदवाच्यत्वे मानं नास्ति तथा तदंशे=अन्वयांशे घटादिपदशक्तिग्रहं विनाऽन्वयांशविषयकशाब्दबोधो न सम्भवतीत्यत्र च मानं नास्ति–आकाङ्क्षाबलेनापि शाब्दबोधेऽन्वयांशस्य भानसम्भवादित्याशङ्क्याह–न चेति । परिहारहेतुमाह–तद्विषयेति । क्लृप्ततया=नियततया । यस्य वृत्तिज्ञानजन्योपस्थितिर्भवति तस्यैव शाब्दबोधविषयत्वं भवति नाऽन्यस्यातिप्रसङ्गापत्तेरिति कार्यकारणभावनियम एवाऽस्य मानम्, तथा च घटादिपदवाच्यत्वेऽन्वयांशे शक्तिग्रहस्य शाब्दबोधोपयोगित्वे च मानमित्यर्थ । निष्कर्षमाह=अन्वयांशे इति । "पात्रे दातव्यम्" इत्यस्य 'पात्राय दातव्यम्' इत्यर्थवत् "शाब्दबोधे" इत्यस्य शाब्दबोधार्थमित्यर्थ । तथा च जायमानाऽन्वयांशविषयकशाब्दबोधोपपत्त्यर्थमन्वयांशेऽपि घटादिपदशक्तिग्रहस्याऽवश्यमपेक्षास्तीत्यर्थ । ननु पदार्थान्तरसंसर्गविषयकशाब्दबोधं प्रति वृत्तिज्ञानजन्योपस्थितेः कारणत्वं न स्वीकरिष्यामो येनोक्तरीत्या

अन्विताभिधानवादिनस्तु पदार्थसंसर्गस्यापि वाच्यतां स्वीकुर्वन्ति तन्मते 'इतरान्वितो घटो घटपदशक्यः' एतादृशमेव शक्तिज्ञानं शाब्दबोधप्रयोजकम्। 'घटो घटपदवाच्यः' इत्याकारकस्याऽन्वयांशानन्तर्भावेन शक्तिग्रहस्य तथात्वे वृत्तिग्रहाविषयतया पदार्थसंसर्गस्य शाब्दबोधाविषयतानुपपत्तेः।

---

न्यबोधविषयत्वस्यावच्छिन्नप्रकारतानिरूपितविशेष्यतायाः कर्मत्वादावभावाच्च न कर्मत्वादीनां घटादिपदवाच्यत्वापत्तिर्न वा घटादिपदानां कर्मत्वादिवाचकत्वापत्तिः, बोधांशे स्वातन्त्र्येण घटादिपदजन्यबोधस्याविषयत्वान्नेश्वरेच्छायाः सर्वविषयकत्वव्याघातोऽपीत्यर्थः।

सम्प्रति प्राभाकरमतमाह–अन्विताभिधानेति, अन्वितस्य=आनयनादिरूपेतरपदार्थेनान्वितस्य=विशिष्टस्याऽभिधानम्=उपस्थापनम्=उपस्थितिः–शक्तिग्रहविषयस्यैवोपस्थितिविषयत्वसम्भवात्, शक्तिग्रहो हि बालस्य 'घटमानय' इत्यादिवाक्येन जायमान आनयनादिरूपेतरपदार्थेनान्वितविषयक एव भवतीत्यन्विताभिधानमेव युक्तं न त्वभिहितान्वय इति प्राभाकराणामभिप्रायः। अभिहितानाम्=वृत्त्योपस्थितानामेव घटादीनामितरपदार्थेनाऽन्वयो भवति–आवापोद्वापाभ्यां बालस्य घटादिपदानां शुद्धघटादिपदार्थे शक्तिग्रहसम्भवादित्यभिहितान्वयवादिनां प्राभाकरेतराणामभिप्रायः, शाब्दबोधस्तूभयत्रैवान्वितविषयक एवेत्यवधेयम्।

पदार्थसंसर्गस्य नाम नीलादिपदार्थान्तरस्य यः समवायादिलक्षणसम्बन्धस्तस्य वाच्यताम्=घटादिपदवाच्यतां स्वीकुर्वन्ति–घटादिपदजन्यबोधविषयस्य घटादिपदवाच्यत्वमावश्यकमेवाऽन्यथा घटादेरपि घटादिपदवाच्यत्वं न स्यात्, अस्ति च 'नीलो घटः' इत्यादौ नीलादिप्रतियोगिकसमवायस्यापि घटादिपदजन्यबोधविषयत्वम् 'नीलसमवायवान् घटः' इत्याद्याकारकबोधस्य जायमानत्वादिति नीलादिसमवायस्यापि घटादिपदवाच्यत्वं प्राप्तमित्यभिप्रायः। उक्तवाच्यतामुपपादयति–तन्मते इति, तन्मते=प्राभाकरमते 'इतरान्वितो घटो घटपदशक्यः' इत्येतादृशमेव शक्तिज्ञानं शाब्दबोधप्रयोजकमस्ति एतादृशशक्तिज्ञानविषयस्य च घटवत् पदार्थान्तरसंसर्गस्याप्यस्त्येव शक्तिज्ञानविषयत्वं च वाच्यत्वमावश्यकमन्यथा घटादेरपि घटादिपदवाच्यत्वं न स्यादिति पदार्थान्तरसंसर्गस्यापि घटादिपदवाच्यत्वं प्राप्तमित्यर्थः। विपक्षे बाधकमाह–घट इति, यदि 'इतरान्वितः' इत्याकारकमन्वयांशमनन्तर्भाव्य=त्यक्त्वा केवलम् 'घटो घटपदशक्यः' इत्याकारक एव शक्तिग्रहः स्यात् तदा पदार्थान्तरसंसर्गस्य वृत्तिग्रहाऽविषयतया शाब्दबोधविषयत्वं न स्यात्–वृत्तिग्रहविषयस्यैव शाब्दबोधविषयत्वस्वीकारात् अन्यथातिप्रसङ्गात्। तथात्वे=शाब्दबोधप्रयोजकत्वे।

नन्वाऽऽनयनादीतरपदार्थघटितस्य घटादेः 'घटमानय' इत्यादिवाक्यप्रतिपाद्यतया तादृशवाक्यजन्यशाब्दबोधात् प्राक् तत्=पदार्थान्तरघटितघटादौ घटादिपदस्य शक्तिग्रह एव न सम्भवति–अनुपस्थितत्वात् उपस्थित एव पदार्थे शक्तिग्रहसम्भवात् तथा च पदार्थान्तरसंसर्गस्य शक्तिग्रहावि-

३

न चेतरान्वितघटस्य वाक्यप्रतिपाद्यतया शाब्दबोधात् प्राक् (तत्र) शक्तिग्रह एव दुर्घटः—अनुपस्थितत्वादितिवाच्यम्, विशेषतः पदार्थान्तरघटितस्य=तदन्वितघटादिरूपवाक्यार्थस्य प्रागनुपस्थितावपि इतरपदार्थत्वादिना सामान्यधर्मे तद्घटितस्य=तदन्वितघटादेः प्रागुपस्थितिसंभवेन तत्र शक्तिग्रहस्य सुघटत्वात् ।

वस्तुतस्तु पदार्थान्तरमनन्तर्भाव्य केवलाऽन्वयांशान्तर्भावेनैव शक्तिग्रहस्य शाब्दधीप्रयोजकतोपेयते—पदार्थान्तरस्य पदान्तरलभ्यतया तदंशान्तर्भावेन शक्तिग्रहस्यानुपयुक्तत्वात् ।

न चान्वयस्य पदवाच्यत्वे तदंशे शक्तिग्रहस्य शाब्दबोधोपयोगित्वे च मानाभाव इतिवाच्यम्, तद्विषयकशाब्दबोधं प्रति वृत्तिज्ञानजन्यतदुपस्थितिहेतुताया सामान्यत एव क्लृप्ततया वृत्तिज्ञानादन्वयानुपस्थितौ तस्य शाब्दबोधविषयत्वाऽसं-

---

पयतया घटादिपदवाच्यत्वापत्तिर्नास्तीत्याशङ्क्याह— न चेति । परिहारहेतुमाह—विशेषत इति । "पदार्थान्तरघटितस्य" इतिपदं स्वयं व्याचष्टे—तदन्वितेति । "तद्घटितस्य" इतिपदं व्याचष्टे—तदन्वितघटादेरिति । विशेषतः=आनयनादिविशेषरूपेणाऽऽनयनादिपदार्थान्तरघटितस्य वाक्यार्थभूतस्य घटादेः शाब्दबोधात् प्रागुपस्थित्यसम्भवेपीतरपदार्थत्वादिरूपसामान्यधर्मेण रूपेण तद्घटितस्य=आनयनादिघटितघटादेः शाब्दबोधात् प्रागप्युपस्थितिसम्भवेन तत्र=इतरपदार्थत्वादिसामान्यधर्मरूपेणानयनाद्यन्वितघटादौ शक्तिग्रहस्य सम्भवात्, तथा च पदार्थान्तरसंसर्गस्य शक्तिग्रहविषयत्वाद् घटादिपदवाच्यत्वे न काचिदनुपपत्तिरित्यन्वयः ।

वस्तुतस्त्वाऽऽनयनादिपदार्थान्तरस्य ' आनय ' इत्यादिपदान्तरेण बोधसम्भवात् तत्र घटादिपदशक्तिग्रहविषयत्वस्वीकारस्यानुपयुक्तत्वात् प्राभाकरमतेन निष्कर्षमाह— वस्तुत इति । तथा च 'अन्वितो घटो घटपदशक्यः' इत्येव शक्तिग्रहो जायते । तदंशान्तर्भावेन=पदार्थान्तरांशान्तर्भावेन ।

नन्वन्वयस्य=पदार्थान्तरसंसर्गस्य घटादिपदवाच्यत्वे मानं नास्ति तथा तदंशे=अन्वयांशे घटादिपदशक्तिग्रहं विनाऽन्वयांशविषयकशाब्दबोधो न सम्भवतीत्यत्र च मानं नास्ति—आकाङ्क्षाबलेनापि शाब्दबोधेऽन्वयभानस्य सम्भवादित्याशङ्क्याह—न चेति । परिहारहेतुमाह—तद्विषयकेति । क्लृप्ततया=नियततया । यस्य वृत्तिज्ञानजन्योपस्थितिर्भवति तस्यैव शाब्दबोधविषयत्वं भवति नाऽन्यस्यातिप्रसङ्गापत्तेरिति कार्यकारणभावनियमः एवान्वयस्योक्तघटादिपदवाच्यत्वेऽन्वयांशे शक्तिग्रहस्य शाब्दबोधोपयोगित्वे च मानमित्यर्थः । निष्कर्षमाह=अन्वयांशे इति । " पात्रे दातव्यम् " इत्यस्य 'पात्राय दातव्यम्' इत्यर्थवत् ' शाब्दबोधे" इत्यस्य शाब्दबोधार्थमित्यर्थः । तथा च जायमानाऽन्वयांशविषयकशाब्दबोधोपपत्त्यर्थमन्वयांशेपि घटादिपदशक्तिग्रहस्याऽवश्यमपेक्षास्तीत्यर्थः । ननु पदार्थान्तरसंसर्गविषयकशाब्दबोधं प्रति वृत्तिज्ञानजन्योपस्थितेः कारणत्वं न स्वीकरिष्यामो येनोक्तरीत्या

भवात् अन्वयांशे शक्तिमत्पदस्यापि शाब्दबोधजनकोपस्थापकत्वात् । संसर्गताभिन्नविषयतायास्तादृशोपस्थितिजन्यतावच्छेदकत्वे गौरवात् ।

अत्र वदन्ति-सामान्यतस्तद्विषयकशाब्दबोधे वृत्तिज्ञानजन्यतदुपस्थितित्वेन न हेतुता-स्वतन्त्रवृत्तिज्ञानाद् विशृङ्खलभावेनोपस्थितयोः पदार्थतत्त्वावच्छेदकयोर्विशेष्यविशेषणभावक्रमेण शाब्दबोधापत्तेः, किं तु तद्धर्मप्रकारेण तद्विषयकशाब्दबोधे वृत्तिज्ञानजन्यतद्धर्मावच्छिन्नविषयकोपस्थितित्वेनैव हेतुता

---

पदार्थान्तरसंसर्गस्य घटादिपदजन्यबोधापत्तिः स्यात् किं तु संसर्गभिन्नपदार्थान्तरविषयकशाब्दबोधं प्रत्येव वृत्तिज्ञानजन्योपस्थितेः कारणत्वं कल्पयिष्याम इत्याशङ्क्याह— संसर्गेति । अत्र पक्षे संसर्गताभेदनिवेशाद् गौरवमाह— गौरवादिति । तादृश=वृत्तिज्ञानजन्य । संसर्गताभिन्नविषयताया इत्यस्य संसर्गताभिन्नविषयक इत्यर्थः, वृत्तिज्ञानजन्योपस्थितौ हि संसर्गताभिन्नविषयकत्व वृत्तिज्ञानजन्यत्व च धर्मौ प्रविष्टौ तयोरवच्छेद्यावच्छेदकभाव इत्यवधेयम् । यदि च प्रकारतासम्बन्धेन शाब्दबोधं प्रति विषयतासम्बन्धेन वृत्तिज्ञानजन्योपस्थितेः कारणत्वं विशेष्यतासम्बन्धेन च शाब्दबोधं प्रति विषयतासम्बन्धेन वृत्तिज्ञानजन्योपस्थितेः कारणत्वं तत्र प्रथमकार्यकारणभावेन प्रकारीभूतधर्माणां द्वितीयकार्यकारणभावेन च धर्मिणः शाब्दबोधे भानमुपपादनेन सामान्यतस्तद्विषयकशाब्दबोधं प्रति वृत्तिज्ञानजन्योपस्थितेः कारणत्वं न कल्प्यते येनोक्तरीत्या पदार्थान्तरसंसर्गस्य घटादिपदजन्यबोधापत्तिः स्यात् ? तदापि तादृशद्विविधकार्यकारणभावकल्पनेन गौरवं स्यादेव ।

उक्तान्विताभिधानवादं परिहर्तुमुपक्रमते—अत्रेति । वदन्तीत्यत्र साधिका इति शेषः । सामान्यतस्तद्विषयकशाब्दबोधं प्रति तद्विषयकवृत्तिज्ञानजन्यतदुपस्थितेर्न हेतुता स्वीक्रियते येनोक्तरीत्या पदार्थान्तरसंसर्गस्य घटपदजन्यबोधापत्तिरित्यर्थः । उक्ते हेतुमाह—स्वतन्त्रेति । स्वतन्त्रम्=विशेष्यविशेषणभावानवगाहितो वृत्तिज्ञानाद् विशृङ्खलभावेन=विशेष्यविशेषणभावरहितेनैकपदोपस्थितयोः=एकघटादिपदोपस्थितयोः पदार्थतत्त्वावच्छेदकयोः=घटघटत्वादिलक्षणपदार्थपदार्थतावच्छेदकयोर्विशेष्यविशेषणभावक्रमेण शाब्दबोधापत्तेरित्यन्वयः । क्रमेण=पुरस्सरम् । 'घटघटत्वे घटपदवाच्ये' इत्याकारकविशेष्यविशेषणभावरहितवृत्तिज्ञानाद् विशेष्यविशेषणभावरहितयोरेव घटघटत्वयोरुपस्थितिशाब्दबोधौ भवतो न तु घटत्वप्रकारकघटविशेष्यकाविति सिद्धान्तः, यदि च सामान्यतस्तद्विषयकशाब्दबोधं प्रति वृत्तिज्ञानजन्योपस्थितेः कारणत्वं स्यात्तदा तु स्वतन्त्रवृत्तिज्ञानादुक्तविशृङ्खलभावेनापि घटघटत्वयोरुपस्थितिः सापि वृत्तिज्ञानजन्यैवेति तादृशोपस्थित्या विशृङ्खलभावेनाप्युपस्थितयोर्घटघटत्वयोर्विशेष्यविशेषणभावेन घटत्वप्रकारकघटविशेष्यकः शाब्दबोध आपद्येतेति दोष इति न सामान्यतस्तद्विषयकशाब्दबोधं प्रति तद्विषयकवृत्तिज्ञानजन्योपस्थितेः कारणत्वं सम्भवतीति भावः । स्वमतेन कार्यकारणभावमाह—किं त्विति । तद्धर्मप्रकारकतद्विशेष्यकशाब्दबोधं प्रति वृत्तिज्ञानजन्यतद्धर्मप्रकारकतद्विशेष्यकोपस्थितेः कारणत्वं युक्तं यथा घटत्वप्रकारकघटविशेष्यकशाब्दबोधं प्रति वृत्तिज्ञानजन्यघटत्वप्रकारकघटविशेष्यकोपस्थितेः कारणत्व-

वाच्या, एवं च तत्संसर्गकबोधस्य किंचिद्धर्मप्रकारेण तद्विषयकत्वाभावाद् वृत्तिज्ञानात् तदनुपस्थितावपि तत्संसर्गकः शाब्दबोधः संभवत्येव ।

वस्तुतस्तु शक्त्या लक्षणया चोपस्थितस्य तत्तदर्थस्य शाब्दबोधे भानादुभयविधतत्तदर्थोपस्थितेरेव तत्तद्विषयकशाब्दबोधहेतुता वाच्या, तादृशोपस्थित्योश्चाऽनुगताऽनतिप्रसक्तकारणतावच्छेदकस्याऽगुरोर्दुर्वचतया व्यभिचारवारणाय शक्त्यादिज्ञानजन्यतदुपस्थितेर्जन्यतावच्छेदककोटौ तत्तत्कारणाऽव्यवहितोत्तरत्वनि-

---

मित्यर्थः । उपसंहरति-एवं चेति । एवं च=तद्धर्मप्रकारेणेत्याद्युक्तकार्यकारणभावे स्वीकृते च तत्संसर्गकबोधस्य=पदार्थान्तरसंसर्गबोधस्य किंचिद्धर्मप्रकारेण तद्विषयकत्वाभावात्=संसर्गविषयकत्वाभावाद् वृत्तिज्ञानात् तदनुपस्थितावपि=पदार्थान्तरसंसर्गानुपस्थितावपि तत्संसर्गकः=पदार्थान्तरसंसर्गविषयकः शाब्दबोधः संभवत्येवेत्यर्थः । यस्य घटादिपदार्थस्य घटत्वादिकिंचिद्धर्मप्रकारेण शाब्दबोधो भवति तस्यैव शाब्दबोधं प्रति तद्विषयकवृत्तिज्ञानजन्योपस्थितेः कारणत्वं स्वीक्रियते न तु निष्प्रकारकपदार्थविषयकशाब्दबोधं प्रत्यपि पदार्थान्तरसंसर्गस्य च स्वरूपत एव शाब्दबोधे भानं भवति न तु किंचिद्धर्मप्रकारेणेति न पदार्थान्तरसंसर्गस्य शाब्दबोधभानार्थं तद्विषयकवृत्तिज्ञानजन्योपस्थितेरपेक्षेति न पदार्थान्तरसंसर्गस्य वृत्तिज्ञानविषयतापत्तिर्न वा घटादिपदवाच्यतापत्तिरितिसारः ।

सिद्धान्तमाह-वस्तुत इति । तत्तदर्थस्य=शक्यार्थस्य घटादेर्लक्ष्यार्थस्य तीरादेश्च । उभयविधतत्तदर्थोपस्थितेः=शक्तिज्ञानाधीनशक्यार्थोपस्थितेर्लक्षणाज्ञानाधीनलक्ष्यार्थोपस्थितेः । एवकारेण शक्यलक्ष्यार्थातिरिक्तसंसर्गादिपदार्थस्य शाब्दबोधे भानार्थं तद्विषयकवृत्तिज्ञानाधीनोपस्थितेः शाब्दबोधहेतुत्वं नास्तीति प्राप्तम्- संसर्गादीनामाकाङ्क्षाबलेन भानसम्भवात्, तत्तद्विषयकशाब्दबोधहेतुता=शक्यलक्ष्यार्थविषयकशाब्दबोधहेतुता वाच्या । तादृशोपस्थित्योः=शक्यार्थविषयकलक्ष्यार्थविषयकोपस्थित्योश्चाऽनुगताऽनतिप्रसक्तोऽवच्छेदकधर्मः कोऽप्यगुरुर्न सम्भवति यस्य तादृशोभयोपस्थितिनिष्ठकारणतावच्छेदकं स्यात्, शक्यार्थविषयकशाब्दबोधस्थले लक्षणाज्ञानाधीनोपस्थितेरभावात् लक्ष्यार्थविषयकशाब्दबोधस्थले च शक्तिज्ञानाधीनोपस्थितेरभावात् परस्परं व्यभिचारः प्राप्त इत्येतादृशव्यभिचारस्य वारणाय शक्त्यादिज्ञानजन्यशक्याद्यर्थविषयकोपस्थितिनिष्ठकारणतानिरूपितशाब्दबोधनिष्ठकार्यतावच्छेदककोटौ तत्तत्कारणाव्यवहितोत्तरत्वस्य=शक्तिज्ञानाधीनोपस्थित्यव्यवहितोत्तरत्वस्य लक्षणाज्ञानाधीनोपस्थित्यव्यवहितोत्तरत्वस्य च निवेशोऽवश्यं कर्तव्यः यथा- शक्तिज्ञानाधीनोपस्थित्यव्यवहितोत्तरत्वविशिष्टशाब्दबुद्धित्वावच्छिन्नं प्रति शक्तिज्ञानाधीनोपस्थितिः कारणं लक्षणाज्ञानाधीनोपस्थित्यव्यवहितोत्तरत्वविशिष्टशाब्दबुद्धित्वावच्छिन्नं प्रति लक्षणाज्ञानाधीनोपस्थितिः कारणमिति । यद्युक्तोभयविधोपस्थितिनिष्ठकारणताया अवच्छेदकधर्मः कोऽप्यगुरुः सम्भवेत्तदा तादृशधर्मेणोपस्थित्योरनुगमसम्भवादुक्तव्यभिचारापत्तिर्न स्यादित्युक्तरीत्या कारणाव्यवहितोत्तरत्वनिवेशेन विशेषरूपेण कार्यकारणभावकल्पनावश्यकता न स्यादितिभावः । उप

वेश आवश्यकः, इत्थं च वृत्त्यनुपस्थितस्यापि संसर्गस्य शाब्दबोधोपगमे व्यभिचाराप्रसक्त्याऽन्वयस्य पदावाच्यत्वेपि न किंचिद् बाधकमिति किं तत्र वृत्तिकल्पनेन ।

अथ

## क्रोडपत्रम्

न च शक्तिलक्षणयोर्वृत्तित्वेनाऽनुगमसंभवात् तदुभयविषयकज्ञानजन्योपस्थित्योरेकरूपेणैव हेतुतया नोक्तव्यभिचारप्रसक्तिरितिवाच्यम्, उभयसाधारणवृत्तित्वस्यानुगतस्य दुर्वचत्वात् ।

---

सहारति—इत्थं चेति । अन्वयस्य संसर्गस्य । तत्र=संसर्गे । व्यभिचाराप्रसक्त्येति— उक्तरीत्या शक्यलक्ष्यलक्षणोभयविधार्थविषयकशाब्दबोधं प्रत्येव तद्विषयकवृत्तिज्ञानाधीनोपस्थितेः कारणत्वमिति संसर्गस्य च न शक्यत्वं न वा लक्ष्यत्वं स्वीक्रियते इति न शाब्दबोधे संसर्गभानार्थं संसर्गविषयकवृत्तिज्ञानाधीनोपस्थितेरपेक्षा, यदि च सामान्यतस्तद्विषयकशाब्दबोधं प्रति वृत्तिज्ञानाधीनोपस्थितेः कारणत्वं स्वीक्रियेत तदा शाब्दबोधे संसर्गभानार्थं संसर्गविषयकवृत्तिज्ञानाधीनोपस्थितेस्तदर्थं च संसर्गस्य घटादिपदवाच्यत्वस्य चापेक्षा स्यादपि न चैवमस्ति—उक्तरीत्या विशेषरूपेणैव कार्यकारणभावस्वीकारादितिभावः ।

अथ

## क्रोडपत्रटीका

ननु शक्तिरपि वृत्तिर्लक्षणापि वृत्तिरिति शक्तिलक्षणयोर्वृत्तित्वेनाऽनुगमः संभवति वृत्तित्वस्योभयानुगतत्वादिति तदुभयविषयकज्ञानजन्योपस्थित्योः=शक्तिविषयकज्ञानजन्योपस्थितेर्लक्षणाविषयकज्ञानजन्योपस्थितेश्चैकरूपेण=वृत्तिविषयकज्ञानजन्योपस्थितित्वेनैव रूपेण शाब्दबोधहेतुत्वान्नोक्तव्यभिचारप्रसक्तिरस्ति येनोक्तरीत्या तत्तत्कारणाव्यवहितोत्तरत्वनिवेशपूर्वकं विशेषरूपेण कार्यकारणभावकल्पनापेक्षा स्यात् किं तु तद्विषयकशाब्दबोधं प्रति तद्विषयकवृत्तिज्ञानाधीनोपस्थितिः कारणमित्येवं सामान्यत एव कार्यकारणभावकल्पना कर्तव्या तथा च संसर्गस्यापि शाब्दबोधे भानार्थं संसर्गविषयकवृत्तिज्ञानाधीनोपस्थितेस्तदर्थं च संसर्गस्य घटादिपदवाच्यत्वस्य चापेक्षा प्राप्तैवेत्यभिप्रायेणाशङ्क्याह— न चेति । परिहारहेतुमाह—उभयेति । उभयसाधारणस्य=शक्तिलक्षणोभयसाधारणस्य । वृत्तित्वं हि न जात्यादिरूपं संभवति वृत्तेर्द्रव्यगुणकर्मान्यतमरूपत्वाभावात्, लक्षणायाश्च शक्यसंबन्धरूपत्वादित्यर्थः ।

यत्तु शक्तिविषयकज्ञानजन्यतदुपस्थितित्वेनैव शक्तिलक्षणा ( ज्ञाना ) धीनपदार्थोपस्थित्योरनुगमसंभवः—घटशक्तं घटपदमित्येतादृशशक्तिज्ञानजन्योपस्थितेरिव घटसंबन्धिशक्तं पटपदमित्यादिलक्षणाज्ञानजन्योपस्थितेरपि घटादिसंबन्धिपटादिनिरूपितशक्तिविषयकज्ञानजन्यत्वादिति नोक्तव्यभिचारप्रसक्तिः ।

न च घटशक्तं घटपदमित्यादिज्ञानजन्यघटाद्युपस्थितौ यत्रोद्बोधकान्तरात् पटादिभानं तादृशपटादिविषयकोपस्थितेरपि पटादिशाब्दबोधजनकत्वापत्तिरिति तद्विषयकशाब्दबोधे तदर्थविशेषितशक्तिविशिष्टपदविषयकज्ञानजन्यतदुपस्थि-

---

शङ्कते—यत्त्विति, शक्तिविषयकज्ञानाधीनपदार्थोपस्थितेर्लक्षणाविषयकज्ञानाधीनपदार्थोपस्थितेश्च शक्तिविषयकज्ञानजन्यपदार्थोपस्थितित्वेन रूपेणानुगमः संभवति—शक्यार्थविषयकोपस्थितेरपि शक्तिविषयकज्ञानाधीनपदार्थोपस्थितिरूपत्वात् लक्ष्यार्थविषयकोपस्थितेरपि शक्तिविषयकज्ञानाधीनपदार्थोपस्थितिरूपत्वात् शक्तिविषयकज्ञानं विना लक्षणाज्ञानाधीनोपस्थितेरसंभवात् लक्षणाज्ञानस्य 'गङ्गापदनिष्ठशक्तिनिरूपकप्रवाहसंबन्धि तीरम्' किं वा 'तीरसंबन्धिप्रवाहशक्तं गङ्गापदम्' इत्येवं रूपत्वादत्र च शक्तिविषयकज्ञानस्यापि प्रवेशात् । उक्तं व्युत्पादयति—घटशक्तमिति । 'घटसंबन्धिशक्तं पटपदम्'' इत्यस्य स्थाने बालानां सुखबोधार्थम् 'तीरसंबन्धि ( प्रवाह ) शक्तं गङ्गापदम्' इत्येवमुदाहर्तव्यम् । 'घटसंबन्धिशक्तं पटपदम्' इत्याकारकलक्षणाज्ञानजन्योपस्थितेरपि लक्ष्यार्थभूतो यो घटादिस्तत्संबन्धिः शक्यार्थभूतो यः पटादिस्तन्निरूपिता पटादिपदनिष्ठा या शक्तिस्तादृशशक्तिविषयकज्ञानजन्यत्वात् शक्तिलक्षणाज्ञानाधीनपदार्थोपस्थित्योः शक्तिविषयकज्ञानजन्यपदार्थोपस्थितित्वेन रूपेणानुगमः संभवतीति पुनरप्युक्तरीत्या ससर्गस्य घटादिपदवाच्यत्वं प्राप्तमित्यर्थः ।

ननु तदर्थनिरूपितशक्तिविशिष्टपदविषयकज्ञानजन्यतदर्थोपस्थितेरेव शक्यार्थविषयकशाब्दबोधहेतुता वक्तव्या अन्यथा—'घटशक्तं घटपदम्' इत्याकारकशक्तिविषयकज्ञानजन्यघटोपस्थितिकाले यदा साहचर्याद्युद्बोधकान्तरवशात् पटादिभानम्=पटाद्युपस्थितिर्जायेत तदा तादृशपटादिविषयकोपस्थितेरपि तादृशपटादिविषयकशाब्दबोधजनकत्वमापद्येत-तादृशपटादिविषयकोपस्थितिरपि कालिकसंबन्धेन शक्तिविषयकज्ञानजन्यत्वात्, न चोद्बोधकान्तरजन्यपदार्थोपस्थितेः शाब्दबोधजनकत्वमभीष्टम्, तद्विषयकशाब्दबोधं प्रति तदर्थनिरूपितशक्तिविशिष्टपदविषयकज्ञानजन्यपदार्थोपस्थितेश्च हेतुत्वे स्वीकृते 'घटसंबन्धिशक्तं पटपदम्' इत्याकारकलक्षणाज्ञानजन्यलक्ष्यार्थोपस्थितेस्तु न तेन रूपेण=तदर्थनिरूपितशक्तिविशिष्टपदविषयकज्ञानजन्यपदार्थोपस्थितित्वेन रूपेण संग्रहः संभवति—'घटसंबन्धिशक्तं पटपदम्' इत्याकारकलक्षणाज्ञानजन्यलक्ष्यार्थोपस्थितौ लक्ष्यार्थनिरूपितशक्तिविशिष्टपदविषयकज्ञानजन्यत्वस्याभावात् अत्र प्रविष्टशक्तेर्लक्ष्यार्थनिरूपितत्वाभावात् शक्यार्थमात्रनिरूपितत्वात्, न हि गङ्गापदनिष्ठा शक्तिर्लक्ष्यतीरनिरूपिता भवति तथा च

तित्वेन हेतुता वाच्या तथा च न तेन रूपेण घटसंबन्धिशक्तं पटपदमित्यादिज्ञानजन्यपटाद्युपस्थितेः संग्रह इत्युक्तव्यभिचारो दुर्वार एवेतिवाच्यम्, शक्तिविषयत्वावच्छिन्नकारणताप्रतियोगिकतद्विषयकत्वावच्छिन्नकार्यताशालित्वेनोपस्थितेस्तच्छाब्दबोधे हेतुतया दर्शितोद्बोधकान्तरप्रयोज्यपटादिविषयताकोपस्थितेर्निरुक्तकार्यताशालित्वविरहेणोक्तातिप्रसङ्गानवकाशात् । तदर्थविशेषितशक्तिवि-

---

तदर्थविशेषितशक्तिविशिष्टपदविषयकज्ञानजन्यपदार्थोपस्थितित्वेन रूपेणोभयविधोपस्थित्योरनुगमासम्भवात्पदान्तरजन्यशाब्दबोधे उक्तव्यभिचारो दुर्वार एवेत्युक्तविशेषरूपेणैव कार्यकारणभावकल्पना कर्तव्या तथा च नोक्तरीत्या संसर्गस्य घटादिपदवाच्यत्वापत्तिरित्याशङ्कयाह–न चेति । विशेषितेत्यस्य निरूपितेत्यर्थः किं वा शक्तिरर्थनिरूपिता भवतीति निरूपितत्वसम्बन्धेन तदर्थविशिष्टा या शक्तिरित्यर्थः । परिहारहेतुमाह–शक्तिविषयत्वेति, शक्तिर्विषयो यस्य तज्ज्ञानं शक्तिविषयं यथा 'घटशक्तं घटपदम्' इति एतादृशशक्तिविषयकज्ञाने शक्तिविषयत्वमप्यस्ति उपस्थितिनिष्ठकार्यतानिरूपिता कारणताप्यस्तीति सा कारणता शक्तिविषयत्वावच्छिन्ना जातेत्युक्तम्–"शक्तिविषयत्वावच्छिन्नकारणता" इति. प्रतियोगिकेत्यस्य निरूपितेत्यर्थः तादृशकारणतानिरूपिता योपस्थितिनिष्ठा तद्विषयकत्वावच्छिन्ना कार्यता. तत्=घटादिकम् उपस्थितौ हि घटादिविषयकत्वमप्यस्ति कार्यताप्यस्तीति सा कार्यता तत् ( घटादि ) विषयकत्वावच्छिन्ना जाता तादृशकार्यताशालित्वेन नामैतादृशकार्यतावती योपस्थितिस्तस्या एव तच्छाब्दबोधहेतुत्वं स्वीक्रियते भवति चोक्तकार्यता शाब्दबोधजनकत्वेनेष्टोपस्थितौ–तादृशकार्यतायास्तद्विषयकत्वावच्छिन्नत्वात् शक्तिविषयत्वावच्छिन्नकारणतानिरूपितत्वाच्च, तथा च 'तद्विषयकशाब्दबोधं प्रति शक्तिविषयकज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकविषयताशाल्युपस्थितित्वेन कारणता' इत्येव वक्तव्यम् अस्य च शक्तिविषयकज्ञानत्वावच्छिन्ना या शक्तिज्ञाननिष्ठा कारणता तन्निरूपिता योपस्थितिनिष्ठा कार्यता तादृशकार्यतावच्छेदिका योपस्थितिनिष्ठा विषयता तादृशविषयताशाल्युपस्थितेः कारणतेत्यर्थः । प्रदर्शितोद्बोधकान्तरप्रयोज्यपटादिविषयताकोपस्थितौ च या कार्यता सा तदुद्बोधकनिष्ठकारणतानिरूपिता भवति न तु शक्तिविषयत्वावच्छिन्नकारणतानिरूपितेति नोद्बोधकान्तरप्रयोज्योपस्थितेः शाब्दबोधजनकत्वापत्तिरित्याह– दर्शितेति । यदुक्तम्–"तदर्थविशेषितशक्तिविशिष्टपदविषयकज्ञानजन्यतदुपस्थितित्वेन हेतुता वाच्या तथा च न तेन रूपेण 'घटसम्बन्धिशक्तं पटपदम्' इत्यादि ( लक्षणा ) ज्ञानजन्यपटाद्युपस्थितेः संग्रह इत्युक्तव्यभिचारो दुर्वार एव" इति तत्परास्करोति– तदर्थविशेषितेति, तदर्थविशेषितशक्तिविषयतापर्यन्तस्य नाम तदर्थविशेषितशक्तिविशिष्टपदविषयकत्वस्योपस्थितिनिष्ठकारणतावच्छेदकेऽनिवेशादनुगम=शक्तिलक्षणाज्ञानजन्योपस्थित्योरनुगमः सम्भवतीति तेन रूपेण लक्षणाज्ञानजन्योपस्थितेरपि संग्रहः सम्भवत्येवेति नोक्तव्यभिचारापत्तिः । उक्तलक्षणाज्ञानहेतुतायां नाम 'घटसम्बन्धि-

पयतापर्यन्तस्योपस्थितिनिष्ठकारणतावच्छेदकेऽनिवेशादनुगमसंभवादुक्तलक्षणाज्ञानहेतुतायामपि शक्तिविषयताया अवच्छेदकत्वेन प्रवेशादिति ।

तन्न समीचीनम्– उक्तानुगतरूपेण पदार्थोपस्थितेर्हेतुत्वे 'घटकालीना या शक्तिस्तद्वत् पटपदम्' इत्यादिज्ञानजन्यघटाद्युपस्थितितोऽपि घटादिशाब्दबोधप्रसङ्गात्, तत्कालीनशक्तिरूपपरम्परासंबन्धविषयतान्तःपातिन्याः शक्तिविषयताया

---

शक्तं पटपदम्' इत्याकारकलक्षणाज्ञाननिष्ठायामुपस्थितिनिष्ठकार्यतानिरूपितकारणतायामपि शक्तिविषयतायाः=शक्तिविषयकत्वस्यावच्छेदकत्वेन निवेशान्नोक्तलक्षणाज्ञानजन्योपस्थितेरसंग्रह इत्याह– उक्तलक्षणेति । "शक्तिविषयत्वावच्छिन्न" इत्यादिना शक्तिविषयकज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकविषयताशाल्युपस्थितेः शाब्दबोधकारणत्वमुक्तं एतादृशविषयताशालित्वं च यथा शक्तिविषयकज्ञानजन्योपस्थितावस्ति तथा 'घटसबन्धिशक्तं पटपदम्' 'तीरसंबन्धिप्रवाहशक्तं गङ्गापदम्' इत्याद्याकारकलक्षणाज्ञानजन्यलक्ष्यार्थविषयकोपस्थितावप्यस्त्येव–लक्षणायाः शावयसंबन्धरूपत्वेन लक्षणाज्ञानस्यापि शक्तिविषयकत्वावश्यंभावादित्यभिप्रायः। लक्षणाज्ञाने उपस्थितिनिष्ठकार्यतानिरूपितहेतुताप्यस्ति शक्तिविषयकत्वमप्यस्तीति तादृशशक्तिविषयतायास्तादृशहेतुतावच्छेदकत्वं प्राप्तम् । अनुगमसंभवाच्च न पूर्वोक्तविशेषकार्यकारणभावकल्पनापेक्षेति सामान्यत उक्तकार्यकारणभावेन सतर्गस्यापि शाब्दबोधे भानार्थं वृत्तिज्ञानजन्योपस्थितेस्तदर्थं घटादिपदवाच्यत्वस्य चापेक्षा प्रातैव ।

यत्त्वित्यादिनोक्तं पराचष्टे– तन्नेति, उक्तानुगतरूपेण=शक्तिविषयत्वावच्छिन्नेत्यादिरूपेण, अर्थात् शक्तिविषयकज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकविषयताशालित्वेन. रूपेण पदार्थोपस्थितेः शाब्दबोधहेतुत्वे हि 'घटकालिका या शक्तिस्तद्वत् पटपदम्' इत्यादिज्ञानजन्यघटाद्युपस्थितेरपि घटादिविषयकशाब्दबोधजनकत्वमापद्येत न चैतदिष्टमित्यर्थ. । पटादिपदनिष्ठा शक्तिर्घटकालेऽपि वर्तते ईश्वरेच्छारूपशक्तेर्नित्यत्वादित्युक्तम्– "घटकालीना" इति । उक्ते हेतुमाह– तत्कालीनेति, घटकालिकशक्तिरूपो यः परम्परासबन्धस्तादृशसंबन्धनिष्ठा या विषयता तदन्तःपातिनी या शक्तिविषयता तस्या अपि तादृशसबन्धप्रयोज्या=घटकालिकशक्तिमत्त्वसबन्धप्रयोज्या योपस्थितिनिष्ठा घटादिविषयता तत्प्रयोजकत्वादित्यन्वयः । घटकालीनेत्यस्य 'घटकालिकशक्तिमत्त्वसबन्धेन घटविशिष्टं पटपदम्' इति पर्यवसितं स्यादित्यभिप्रेत्य शक्तेः संबन्धत्वमुक्तम्, तत्रापि घटस्य काले कालस्य च शक्तावन्वयेन शक्तेः परम्परासंबन्धत्वमुक्तम् । तादृशसंबन्धविषयता च संबन्धनिष्ठा सांसर्गिकविषयता तदन्तःपातिनी शक्तिविषयताऽस्ति–शक्तेरुक्तसंबन्धस्वरूपे प्रविष्टत्वात्, शक्तिविषयता शक्तिनिष्ठाऽवच्छेदकत्वरूपा विषयता विज्ञेया शक्तेः सबन्धस्वरूपे प्रवेशेन सबन्धनिष्ठविषयतावच्छेदकत्वात्, तादृशशक्तिविषयताया उक्तसबन्धप्रयोज्यघटादिविषयताप्रयोजकत्वमस्त्येव– 'घटकालिकशक्तिमत् पटपदम्' इत्याकारकवृत्तिज्ञाने घट-

तित्वेन हेतुता वाच्या तथा च न तेन रूपेण घटसम्बन्धिशक्तं पटपदमित्यादि ज्ञानजन्यघटाद्युपस्थितेः संग्रह इत्युक्तव्यभिचारो दुर्वार एवेतिवाच्यम्, शक्तिविषयत्वावच्छिन्नकारणताप्रतियोगिकतद्विषयकत्वावच्छिन्नकार्यताशालित्वेनोपस्थितेस्तच्छाब्दबोधे हेतुतया दर्शितोद्बोधकान्तरप्रयोज्यघटादिविषयताकोपस्थिते निरुक्तकार्यताशालित्वविरहेणोक्तातिप्रसङ्गानवकाशात् । तदर्थविशेषितशक्तिवि-

---

तदर्थविशेषितशक्तिविशिष्टपदविषयकज्ञानजन्यपदार्थोपस्थितित्वेन रूपेणोभयविधोपस्थित्योरनुगमासम्भवादपरापरजन्यशाब्दबोधे उक्तव्यभिचारो दुर्वार एवेत्युक्तविशेषरूपेणैव कार्यकारणभावकल्पना कर्तव्या तथा च नोक्तरीत्या संसर्गस्य घटादिपदवाच्यत्वापत्तिरित्याशङ्क्याह—न चेति । विशेषितत्वस्य निरूपितत्वमर्थः किं वा शक्तिरर्थेन निरूपिता भवतीति निरूपितत्वसम्बन्धेन तदर्थविशिष्टा या शक्तिस्तत्वर्थः । परिहारहेतुमाह—शक्तिविषयत्वेति, शक्तिर्विषयो यस्य तज्ज्ञानं शक्तिविषयं यथा 'घटशक्तं घटपदम्' इति एतादृशशक्तिविषयकज्ञाने शक्तिविषयत्वमप्यस्ति उपस्थितिनिष्टकार्यतानिरूपिता कारणताप्यस्तीति सा कारणता शक्तिविषयत्वावच्छिन्ना जातेत्युक्तम्—" शक्तिविषयत्वावच्छिन्नकारणता " इति प्रतियोगिके यस्य निरूपित इत्यर्थः तादृशकारणतानिरूपिता योपस्थितिनिष्ठा तद्विषयकत्वावच्छिन्ना कार्यता. तद्=घटादिकम् उपस्थितौ हि घटादिविषयकत्वमप्यस्ति कार्यताप्यस्तीति सा कार्यता तत् ( घटादि ) विषयकत्वावच्छिन्ना जाता तादृशकार्यताशालित्वेन नामैतादृशकार्यतावत्त्वेन योपस्थितिस्तस्या एव तच्छाब्दबोधहेतुत्वं स्वीक्रियते भवति चोक्तकार्यता शाब्दबोधजनकत्वेनेष्टोपस्थितौ—तादृशकार्यतायास्तद्विषयकत्वावच्छिन्नत्वात् शक्तिविषयत्वावच्छिन्नकारणतानिरूपितत्वाच, तथा च 'तद्विषयकशाब्दबोधं प्रति शक्तिविषयकज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकविषयताशाल्युपस्थितित्वेन कारणता' इत्येव वक्तव्यम् अस्य च शक्तिविषयकज्ञानत्वावच्छिन्ना या शक्तिज्ञाननिष्ठा कारणता तन्निरूपिता योपस्थितिनिष्ठा कार्यता तादृशकार्यतावच्छेदिका योपस्थितिनिष्ठा विषयता तादृशविषयताशाल्युपस्थितेः कारणत्वमर्थः । प्रदर्शितोद्बोधकान्तरप्रयोज्यघटादिविषयताकोपस्थितौ च या कार्यता सा तदुद्बोधकनिष्ठकारणतानिरूपिता भवति न तु शक्तिविषयत्वावच्छिन्नकारणतानिरूपितेति नोद्बोधकान्तरप्रयोज्योपस्थितेः शाब्दबोधजनकत्वापत्तिरित्याह— दर्शितेति । यदुक्तम्—"तदर्थविशेषितशक्तिविशिष्टपदविषयकज्ञानजन्यतदुपस्थितित्वेन हेतुता वाच्या तथा च न तेन रूपेण 'घटसम्बन्धिशक्तं पटपदम्' इत्यादि ( लक्षणा ) ज्ञानजन्यघटाद्युपस्थितेः संग्रह इत्युक्तव्यभिचारो दुर्वार एव" इति तत्परास्करोति— तदर्थविशेषितेति, तदर्थविशेषितशक्तिविषयत्वावच्छिन्न-तस्य नाम तदर्थविशेषितशक्तिविशिष्टपदविषयकत्वस्योपस्थितिनिष्टकारणतावच्छेदकेऽनिवेशात् नु तयोः =शक्तिलक्षणाज्ञानजयोपस्थित्योरनुगमः सम्भवतीति तेन रूपेण लक्षणाज्ञानजन्योपस्थितेरपि संग्रहः सम्भवत्येवेति नोक्तव्यभिचारापत्तिः । उक्तलक्षणाज्ञानहेतुतायां नाम 'घटसम्बन्धि

पयतापर्यन्तस्योपस्थितिनिष्ठकारणतावच्छेदकेऽनिवेशादनुगमसंभवादुक्तलक्षणाज्ञानहेतुतायामपि शक्तिविषयताया अवच्छेदकत्वेन प्रवेशादिति ।

तन्न समीचीनम्– उक्तानुगतरूपेण पदार्थोपस्थितेर्हेतुत्वे 'घटकालीना या शक्तिस्तद्वत् पटपदम्' इत्यादिज्ञानजन्यघटाद्युपस्थितितोऽपि घटादिशाब्दबोधप्रसङ्गात्, तत्कालीनशक्तिरूपपरम्परासंबन्धविषयतान्तःपातिन्याः शक्तिविषयताया

---

शक्तं पटपदम्' इत्याकारकलक्षणाज्ञाननिष्ठायामुपस्थितिनिष्ठकार्यतानिरूपितकारणतायामपि शक्तिविषयताया =शक्तिविषयकत्वस्यावच्छेदकत्वेन निवेशान्नोक्तलक्षणाज्ञानजन्योपस्थितेरसंग्रह इत्याह– उक्तलक्षणेति । "शक्तिविषयत्वावच्छिन्न" इत्यादिना शक्तिविषयकज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकविषयताशाल्युपस्थितेः शाब्दबोधकारणत्वमुक्तं एतादृशविषयताशालित्वं च यथा शक्तिविषयकज्ञानजन्योपस्थितावस्ति तथा 'घटसंबन्धिशक्तं पटपदम्' 'तीरसंबन्धिप्रवाहशक्तं गङ्गापदम्' इत्याद्याकारकलक्षणाज्ञानजन्यलक्ष्यार्थविषयकोपस्थितावप्यस्त्येव–लक्षणायाः शक्यसंबन्धरूपत्वेन लक्षणाज्ञानस्यापि शक्तिविषयकत्वावश्यंभावादित्यभिप्रायः । लक्षणाज्ञाने उपस्थितिनिष्ठकार्यतानिरूपितहेतुताप्यस्ति शक्तिविषयकत्वमप्यस्तीति तादृशशक्तिविषयतायास्तादृशहेतुतावच्छेदकत्वं प्राप्तम् । अनुगमसंभवाच्च न पूर्वोक्तविशेषकार्यकारणभावकल्पनापेक्षेति सामान्यत उक्तकार्यकारणभावेन संसर्गस्यापि शाब्दबोधे भानार्थं वृत्तिज्ञानजन्योपस्थितेस्तदर्थं घटादिपदवाच्यत्वस्य चापेक्षा प्राप्तेः ।

यदित्यादिनोक्तं प्रत्याचष्टे– तन्नेति, उक्तानुगतरूपेण=शक्तिविषयत्वावच्छिन्नेत्यादिरूपेण, अर्थात् शक्तिविषयकज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकविषयताशालित्वेन रूपेण पदार्थोपस्थितेः शाब्दबोधहेतुत्वे हि 'घटकालिका या शक्तिस्तद्वत् पटपदम्' इत्यादिज्ञानजन्यघटाद्युपस्थितेरपि घटादिविषयकशाब्दबोधजनकत्वमापद्येत न चैतदिष्टमित्यर्थः । पटादिपदनिष्ठा शक्तिर्घटकालेऽपि वर्तते ईश्वरेच्छारूपशक्तेर्नित्यत्वादित्युक्तम्– "घटकालीना" इति । उक्ते हेतुमाह– तत्कालीनेति, घटकालिकशक्तिरूपो यः परम्परासंबन्धस्तादृशसंबन्धनिष्ठा या विषयता तदन्तःपातिनी या शक्तिविषयता तस्या अपि तादृशसंबन्धप्रयोज्या=घटकालिकशक्तिमत्त्वसंबन्धप्रयोज्या योपस्थितिनिष्ठा घटादिविषयता तत्प्रयोजकत्वादित्यन्वयः । घटकालीनेत्यस्य 'घटकालिकशक्तिमत्त्वसंबन्धेन घटविशिष्टं पटपदम्' इति पर्यवसितं स्यादित्यभिप्रेत्य शक्तेः संबन्धत्वमुक्तम्, तत्रापि घटस्य काले कालस्य च शक्तावन्वयेन शक्तेः परम्परासंबन्धत्वमुक्तम् । तादृशसंबन्धविषयता च संबन्धनिष्ठा सांसर्गिकविषयता तदन्तःपातिनी शक्तिविषयतास्ति–शक्तेरुक्तसंबन्धरूपे प्रविष्टत्वात्, शक्तिविषयता च शक्तिनिष्ठाऽवच्छेदकत्वरूपा विषयता विज्ञेया शक्तेः संबन्धस्वरूपे प्रवेशेन संबन्धनिष्ठविषयतावच्छेदकत्वात्, तादृशशक्तिविषयताया उक्तसंबन्धप्रयोज्यघटादिविषयताप्रयोजकत्वमस्त्येव– 'घटकालिकशक्तिमत् पटपदम्' इत्याकारकवृत्तिज्ञाने घट-

अपि तादृशसंबन्धप्रयोज्यघटादिविषयताप्रयोजकत्वात् । तादृशशक्तिविषयकधियश्च घटादिनिरूपितत्वोपरागेण तत्संबन्धिनिरूपितत्वोपरागेण च पदे शक्त्यनवगाहितया शाब्दबोधप्रयोजकतच्छक्तपदज्ञानतल्लाक्षणिकपदज्ञानानात्मकतया तज्जन्योपस्थितेः शाब्दबोधजनकत्वोपगमासंभवात् ।

न च यत्किंचिन्निरूपितत्वोपरक्तशक्तिविषयताप्रयोज्यतत्तदर्थविषयताकोपस्थितित्वेनैव शाब्दधीजनकत्वोपगमाच्चायमतिप्रसङ्गः— उक्तज्ञानीयशक्तिविषयतायाः

---

स्यात् । विषयत्वेनैतादृशशक्तिज्ञानात् पटवद् घटस्याप्युपस्थितत्वस्य संभवाद् एतादृशघटोपस्थितेरप्युक्तशक्तिविषयकज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकविषयताशालित्वात् तादृशोपस्थितेः शाब्दबोधजनकत्वस्वीकारात् 'घटकालिकशक्तिमत् पटपदम्' इत्याकारकज्ञानजन्यघटोपस्थित्या घटविषयकशाब्दबोधस्यापत्तिरस्त्येव न चैतदिष्टम्—नियामकाभावे ईश्वरेच्छारूपशक्तेः पदार्थमात्रसमानकालिकत्वेन सकलविषयकशाब्दबोधप्रसङ्गादित्यर्थः । नन्वस्तु 'घटकालिकशक्तिमत् पटपदम्' इत्यादिज्ञानजन्यघटोपस्थितेः घटविषयकशाब्दबोधजनकत्वमित्यत्र बाधकमाह— तादृशशक्तीति । तादृशशक्तिविषयकधियः ='घटकालिकशक्तिमत् पटपदम्' इत्याकारकज्ञानस्य घटादिनिरूपितत्वोपरागेण= घटादिनिरूपितत्वेनापि पदे शक्त्यवगाहित्वं नाम घटादिशक्यनिरूपितपदनिष्ठशक्तिविषयकत्वमपि नास्ति येन शाब्दबोधप्रयोजकतच्छक्तपदज्ञानात्मकत्वप्राप्त्या तज्जन्योपस्थितेः शक्यार्थविषयकशाब्दबोधजनकत्वमुपपद्येत तथा 'घटकालिकशक्तिमत् पटपदम्' इतिज्ञानस्य तत्संबन्धिनिरूपितत्वोपरागेण=लक्ष्यार्थसंबन्धिशक्यार्थनिरूपितत्वेनापि पदे शक्त्यवगाहित्वं नाम लक्ष्यार्थसंबन्धिशक्यार्थनिरूपितपदनिष्ठशक्तिविषयकत्वमपि नास्ति येन शाब्दबोधप्रयोजकतल्लाक्षणिकपदविषयकज्ञानात्मकत्वप्राप्त्या तज्जन्योपस्थितेः लक्ष्यार्थविषयकशाब्दबोधजनकत्वमुपपद्येतेति न 'घटकालिकशक्तिमत् पटपदम्' इत्यादिज्ञानजन्यघटोपस्थितेः घटविषयकशाब्दबोधजनकत्वोपगमः संभवतीत्यर्थः । उपरागेण=वैशिष्ट्येन । पदे इति सप्तम्यर्थो निष्ठत्वम् । शक्त्यनवगाहितया= शक्तपदाविषयकतया=शक्तिविषयकत्वाभावात् । एवं हि शक्यार्थनिरूपितपदनिष्ठशक्त्यवगाहिज्ञानजन्योपस्थितेः शक्यार्थविषयकशाब्दबोधजनकत्वं लक्ष्यार्थसंबन्धिशक्यार्थनिरूपितपदनिष्ठशक्त्यवगाहिज्ञानजन्योपस्थितेश्च लक्ष्यार्थविषयकशाब्दबोधजनकत्वमिति भावः ।

ननु यत्किंचित् ( शक्यार्थ ) निरूपितत्वविशिष्टा या शक्तिस्तन्निष्ठा या विषयता तादृशविषयताप्रयोज्या या तत्तदर्थविषयकोपस्थितिस्तादृशोपस्थितेरेव शाब्दबोधजनकत्वं स्वीक्रियते अर्थात् ' यत्किंचिन्निरूपितत्वविशिष्टशक्तिविषयकज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकीभूतविषयताशाल्युपस्थितिः शाब्दबोधकारणम् ' इत्युच्यते. तथा च नायमतिप्रसङ्गः=' घटकालिकशक्तिमत् पटपदम्' इत्याकारकज्ञानजन्यघटोपस्थितेः शाब्दबोधजनकत्वापत्तिर्नास्ति—'घटकालिकशक्तिमत् पटपदम्' इत्याकारकज्ञाने या शक्तिविषयतास्ति तस्याः किंचिन्निरूपितत्वविषयता-

किंचिन्निरूपितत्वविषयतानिरूपितत्वविरहादितिवाच्यम्, एवमपि 'घटकालीना या पटनिरूपिता शक्तिस्तद्वत् पटपदम्' इत्यादिज्ञानप्रयोज्यघटाद्युपस्थितेरव्यावृत्तेः ।

अथ किंचिन्निरूपितत्वविषयतानिरूपितत्वेन शक्तिविषयता यादृशकारणतावच्छेदिका तादृशकारणताप्रतियोगिकप्रकृतार्थविषयतावच्छिन्नकार्यताशालित्वेन

निरूपितत्वाभावात्, अर्थात् 'घटकालिकशक्तिमत्पटपदम्' इत्याकारकज्ञाने या शक्ति प्रविष्टास्ति तस्या किंचिन्निरूपितत्वेन रूपेण प्रवेशाभावात्तेतादृशज्ञानजन्योपस्थिते शाब्दबोधजनकत्वाप त्तिरित्याशङ्क्याह– न चेति । परिहारहेतुमाह– एवमपीति, एवमपि=उक्तार्थ किंचिन्निरूपितत्वोपरक्तशक्तिविषयताप्रयोज्यतत्तदर्थविषयताकोपस्थितित्वेन रूपेणोपस्थितेः शाब्दबोधजनकत्वोपगमेपि 'घटकालिका या पटनिरूपिता शक्तिस्तद्वत् पटपदम्' इत्याकारकज्ञानज यघटाद्युपस्थितेस्तु अव्यावृत्ते =शाब्दबोधजनकत्वमापद्येतैव– एतज्ज्ञानीयशक्तिविषयतायाः पटनिरूपितत्वविषयतानिरूपितत्वात्, अर्थात् 'घटकालिकपटनिरूपितशक्तिमत्पटपदम्' इत्याकारकज्ञाने या शक्ति प्रविष्टास्ति तस्या पटनिरूपितत्वेनैव रूपेण प्रवेशादेतादृशज्ञानजन्यघटाद्युपस्थितेर्घटादिशाब्दबोधजनकत्वं स्यादथ न चैतदिष्टम्– ईश्वरेच्छारूपशक्तेर्नित्यत्वेन पदार्थमात्रसमानकालिकत्वात् सकलविषयकशाब्दबोधप्रसङ्गादित्यर्थ ।

शङ्कते–अथेति, किंचिन्निरूपितत्वविषयतानिरूपितत्वेन नाम किंचिन्निरूपितत्वनिष्ठा या विषयता तादृशविषयतानिरूपिता या शक्तिज्ञाननिष्ठा शक्तीयविषयता सा यादृशकारणतावच्छेदिका=यथा पटविषयकोपस्थितिनिष्ठकार्यतानिरूपितायाः 'घटकालिकपटनिरूपितशक्तिमत्पटपदम्' इत्याकारकशक्तिज्ञाननिष्ठकारणताया अवच्छेदिका भवति तादृशकारणताप्रतियोगिका=तादृशपटविषयकोपस्थितिजनकोक्तशक्तिज्ञाननिष्ठकारणतानिरूपिता या प्रकृतार्थविषयत्वावच्छिन्ना=पटरूपार्थविषयत्वावच्छिन्ना कार्यता=उपस्थितिनिष्ठा कार्यता तादृशकार्यताशालित्वेन नाम तादृशकार्यतावती या पदार्थोपस्थितिस्तस्या एव शाब्दबोध प्रति हेतुत्व स्वीक्रियते इति नायमतिप्रसङ्गो नाम " घटकालीना या पटनिरूपिता शक्तिस्तद्वत्पटपदम् " इत्याकारकज्ञानप्रयोज्यघटोपस्थित्या घटविषयकशाब्दबोधापत्तिर्नास्तीत्यर्थ । घटकालीनेत्याद्युक्तशक्तिज्ञानजन्यपटोपस्थितौ उक्तशक्तिज्ञाननिष्ठकारणतानिरूपितकार्यताप्यस्ति पटरूपार्थविषयकत्वमप्यस्तीति उपस्थितिनिष्ठा कार्यता पटलक्षणप्रकृतार्थविषयत्वावच्छिन्ना जतेति विज्ञेयम् । अयमर्थ – 'घटकालिकपटनिरूपितशक्तिमत्पटपदम्' इत्याकारकोक्तशक्तिज्ञानेन घटोपस्थितिरपि जायते पटोपस्थितिरपि जायते इत्युभयविधोपस्थितिं प्रति कारण तूक्तशक्तिज्ञानमेकमेव यद्यपि तथापि कारणतावच्छेदक पृथक् पृथगेव यथा घटोपस्थितेस्तु घटकालिकशक्तिविषयकत्व पटोपस्थितेश्च पटनिरूपितशक्तिविषयकत्वम्, तथा च " किंचिन्निरूपितत्वविषयतानिरूपितत्वेन " इत्याद्युक्तकार्यकारणभावे स्वीकृते घटकालीनेत्यादिशक्तिज्ञाने पदे शक्तेर्विशेषणत्वेन शक्तावपि विषयतास्ति सा च शक्तिविषयता पटनिरूपितत्वविषयतानिरूपिता सती तादृशशक्तिज्ञाननिष्ठकार-

पदार्थोपस्थितेर्हेतुत्वोपगमात्रायमतिप्रसङ्गः- शक्त्यंशे उदासीनस्य पटनिरूपित-त्वादेर्भानेपि घटकालीनशक्तिरूपघटीयपरम्परासंबन्धाविषयकपदज्ञानस्य घटादि-स्मारकतया तत्स्मृतिजनकतायां पटादिनिरूपितत्वविषयतानिरूपितत्वस्य शक्ति-विषयकत्वेऽनिवेशादितिचेत् ?

एवमपि यत्र ज्ञाने घटादेः शक्तत्वसंबन्धेन पदांशे प्रकारता तज्जन्योपस्थि-तितोपि घटादेः शाब्दबोधोत्पत्त्या तदनुपपत्तिर्दुर्वारैव-तत्र पदांशेऽर्थसंसर्गतया भासमानशक्तावर्थस्य निरूपितत्वरूपसंबन्धान्तराऽभानात् ।

णतानिरूपितपटमात्रविषयकत्वावच्छिन्नकार्यतातादात्म्युपस्थितेरेव कारणतावच्छेदिका भवति न तु घटोपस्थितेरपी युक्तशक्तिज्ञानजन्यपटोपस्थित्या पटविषयकशाब्दबोधो जायते घटोपस्थित्या च घटविषयकशाब्दबोधापत्तिर्नास्त्येव- घटोपस्थितिनिष्ठकार्यतानिरूपितोक्तशक्तिज्ञाननिष्ठकारणता-वच्छेदिका या शक्तिविषयता तस्या घटनिरूपितत्वविषयतानिरूपितत्वाभावाद् घट-कालिकशक्तिविषयतारूपत्वात् घटस्य कालमाने विशेषणत्वाद् निरूपितत्वे च विशे-षणत्वाभावात् । उक्तशक्तिज्ञानजन्यपटोपस्थित्या पटविषयकशाब्दबोधस्त्विष्ट एव ।

उक्तातिप्रसङ्गाभावे हेतुमाह- शक्त्यश इति, शक्त्यंशे= 'घटकालीनपटनिरूपितशक्ति-मत्पटपदम्' इत्याकारकशक्तिज्ञानघटकशक्तौ पटनिरूपितत्वादेरुदासीनस्य=उदासीनतया भानेपि 'घटकालीनशक्तिसंबन्धेन घटविशिष्टं पटपदम्' इत्यत्र घटकालीनशक्तिरूपो यो घटस्य पटपदे परम्परासम्बन्धस्तादृशसम्बन्धविषयकं यत् 'घटकालीनपटनिरूपितशक्ति-मत्पटपदम्' इत्याकारकं पदज्ञानम्=पदविशेष्यकं शक्तिज्ञानं तस्यैव घटादिस्मारकतया= घटोपस्थितिजनकतया तत्स्मृतिजनकतायाम्=उक्तपदज्ञाननिष्ठा या घटोपस्थितिजनकता तादृशजनकतायां कारणतावच्छेदकत्वेन प्रविष्टं यच्छक्तिविषयकत्वं तस्मिन् पटादिनिरूपितत्वविषयतानिरूपितत्वस्य=किंचिन्निरूपितत्वविषयतानिरूपितत्वस्याऽनिवेशादित्यन्वयः । घटोपस्थिति-जनकं हि घटकालिकशक्तिविषयकमेव ज्ञानं न तु किंचिन्निरूपितशक्तिविषयकं घटकालिकश-क्तिविषयकज्ञानीयशक्तिविषयकत्वे चावच्छेदकत्वेन किंचिन्निरूपितत्वविषयतानिरूपितत्वस्य नि-वेशो नास्त्येवेति न तादृशघटोपस्थित्या घटविषयकशाब्दबोधापत्तिरित्यर्थः । भगवदिच्छारूप-शक्तौ पटादिनिरूपितत्वस्याऽनवच्छेदकत्वेनोदासीनत्वम्-, घटस्य काले कालस्य शक्तौ शक्तेश्च पदेऽन्वय इति घटस्य साक्षाच्छक्तावन्वयाभावेन शक्तेर्घटीयपरम्परासम्बन्धत्वमुक्तम् । "भानेपि" इत्यत्र "अभानेपि" इत्यपि पाठस्तस्य च 'अभानेन' इत्यर्थः, तथाभानमनिवेशे हेतुः, अभाने चोदासीनत्वं हेतुः शेषं पूर्ववदेव ।

अत्रापि दोषमाह-एवमपीति, यत्र=यस्मिन् ज्ञाने=शक्तिज्ञाने घटादेः शक्तत्वसम्बन्धेन पदांशे प्रकारता यथा 'शक्तत्वसम्बन्धेन घटविशिष्टं घटपदम्' इत्याकारकशक्तिज्ञानेनापि घटोपस्थि-तिर्जायते तया च घटोपस्थित्या घटविषयकशाब्दबोध इष्ट एव स चोक्तकार्यकारणभावे स्वीकृते

वस्तुतो घटत्वाद्युपलक्षितवाचकाद् द्रव्यादिपदाच्छक्त्याऽभ्रान्तस्य घटत्वादिप्रकारकशाब्दबोधवारणाय तद्धर्मप्रकारकशाब्दबोधे शक्तौ तद्धर्मविशिष्टनिरूपितत्वावगाहित्वेन शक्तिज्ञानस्योपयोगिता वाच्या तथा च तत्संबन्धिशक्तत्वावगाहिनो लक्षणाग्रहस्य तेन रूपेणाऽसंग्रहादऽननुगमेन व्यभिचारप्रसक्त्या उक्तकार्यकारणभावे कारणानन्तर्यप्रवेश आवश्यकः।

---

न स्यादव। उक्ते हेतुमाह–तत्रेति, तत्र=' स्वशक्तत्वसम्बन्धेन घटविशिष्टं घटपदम् ' इत्याकारकशक्तिज्ञाने पदेऽर्थसंसर्गतया=घटप्रतियोगिकसम्बन्धत्वेन या शक्तिर्भासते तस्यामर्थस्य घटस्य निरूपितत्वरूपसम्बन्धस्याऽभानात्। अत्र शक्तौ घटस्य स्वनिरूपितत्वसम्बन्धेनाऽन्वयाभावादितियावत्, त्वया चोक्तरीत्या शक्तिज्ञाने शक्तौ यस्य स्वनिरूपितत्वसंबन्धेनान्वयो भवति तद्विषयकशाब्दबोधस्यैव नियमितत्वात्। तदनुपपत्तिः=उक्तघटादिविषयकशाब्दबोधानुपपत्तिः।

कार्यतावच्छेदककोटौ कारणानन्तर्यप्रवेशस्यावश्यकत्वे हेत्वन्तरमाह–वस्तुत इति, द्रव्यपदं घटस्य घटत्वोपलक्षितत्वेन रूपेण वाचकं भवति न तु घटत्वविशिष्टत्वेन रूपेण द्रव्यपदस्य द्रव्यत्वमात्रविशिष्टवाचकत्वाद् द्रव्यपदशक्तिज्ञानीयविषयतावच्छेदकत्वस्य द्रव्यत्वे एव स्वीकाराद् घटत्वे च द्रव्यपदशक्तिज्ञानीयविषयतासामानाधिकरण्यमात्रस्यैव सत्त्वात्, तथा च द्रव्यपदाच्छक्त्या घटत्वप्रकारकशाब्दबोधोऽभ्रान्तस्य नेष्ट इति तद्वारणाय तद्धर्मप्रकारकशाब्दबोधे=तद्धर्मप्रकारकशाब्दबोधं प्रति शक्तौ=शक्तिविषयकं यत् तद्धर्मविशिष्टनिरूपितत्वावगाहित्वेन नाम शक्तिनिष्ठं यद् घटत्वादिधर्मविशिष्टघटादिपदार्थनिरूपितत्वं तदवगाहि यत् ' द्रव्यपदं द्रव्यत्वविशिष्टनिरूपितशक्तिविशिष्टम्' ' घटपदं घटत्वविशिष्टनिरूपितशक्तिविशिष्टम् ' इत्याद्याकारकं शक्तिज्ञानं तस्यैवोपयोगिता=कारणता वक्तव्या एवं हि द्रव्यपदादऽभ्रान्तस्य शक्त्या घटत्वप्रकारकशाब्दबोधापत्तिर्निरस्ता–द्रव्यपदस्य घटत्वविशिष्टनिरूपितशक्तिविशिष्टत्वाभावात् द्रव्यत्वविशिष्टनिरूपितशक्तिविशिष्टत्वाच्चेत्यर्थः। उपसंहरति–तथा चेति, शक्तिज्ञानं हि शक्तौ तद्धर्मविशिष्टनिरूपितत्वावगाहकमेव शाब्दबोधजनकं भवति लक्षणाज्ञानं च तत्सम्बन्धिशक्तत्वावगाहि=लक्ष्यतीरादिसम्बन्धिप्रवाहादिनिरूपितत्वावगाहित्वेन लक्ष्यार्थविषयकशाब्दबोधजनकं भवतीति शक्तिज्ञानलक्षणाज्ञानयोः स्वरूपभेदात् तेन रूपेण=तद्धर्मविशिष्टनिरूपितत्वावगाहित्वेन रूपेण लक्षणाज्ञानस्याऽसंग्रहाच्छक्तिज्ञानलक्षणाज्ञानयोरननुगमः प्राप्तस्तेन चाननुगमेन लक्षणाज्ञानजन्यशाब्दबोधे शक्तिज्ञानस्य शक्तिज्ञानजन्यशाब्दबोधे च लक्षणाज्ञानस्य व्यभिचारः प्राप्तस्तादृशव्यभिचारस्य निवृत्त्यर्थं हि (२७) पूर्वोक्तरीत्योक्तकार्यकारणभावे=कार्यतावच्छेदककोटौ कारणानन्तर्यस्य प्रवेश आवश्यक एव तथा च वृत्त्यनुपस्थितस्यापि संसर्गस्य शाब्दबोधस्वीकारे व्यभिचाराप्रसक्त्या संसर्गस्य घटादिपदवाच्यत्वं वृत्तिज्ञानविषयत्वं च न स्वीकार्यमित्यर्थः। सर्वं चैतत् पूर्वमेव व्याख्यातम्।

रूपेणाऽनुगमासंभवात् परस्परजन्यबोधे व्यभिचार इति कार्यतावच्छेदकगर्भे तत्तत्कारणानन्तर्यप्रवेशो ध्रुव इत्यवधेयम् ।

॥ इति क्रोडपत्रं समाप्तम् ॥

अथ वृत्त्यनुपस्थितस्यापि पदार्थद्वयसंसर्गस्य शाब्दबोधविषयत्वोपगमे संबन्धभाने नियामकाभावाच्छाब्दबोधेऽबाधितयावत्संसर्गभानापत्तिरिति चेत् ? न—कयोश्चित् पदयोः केनचित्संबन्धेन स्वार्थान्वयबोधे साकाङ्क्षतयाऽऽकाङ्क्षाज्ञानस्यैव पदार्थसंसर्गभाने नियामकत्वात्। ययोश्च पदयोर्नानासंबन्धेन स्वार्थान्वयबोधे

---

तयोरप्यननुगम, तज्जन्योपस्थित्योरपि परस्पर विलक्षणरूपत्वेनाऽनुगमाऽसंभवात् परस्परजन्यशाब्दबोधे व्यभिचार प्राप्त इति तादृशव्यभिचारस्य निवृत्त्यर्थं कार्यतावच्छेदककोटौ तत्तत्कारणानन्तर्यप्रवेश आवश्यक एवेत्यर्थ । कारणानन्तर्यप्रवेशप्रकारश्च पूर्वमेव प्रदर्शितो यथा पदविशेष्यकशक्तिज्ञानाधीनोपस्थित्यव्यवहितोत्तरजायमानशाब्दबोध प्रति पदविशेष्यकशक्तिज्ञानाधीनोपस्थितिः कारणम्, अर्थविशेष्यकशक्तिज्ञानजन्योपस्थित्यव्यवहितोत्तरजायमानशाब्दबोध प्रत्यऽर्थविशेष्यकशक्तिज्ञानजन्योपस्थिति कारणमित्यादि । एव लक्षणास्थलेपि कल्पनीयम् ।

॥ इति क्रोडपत्रटीका समाप्ता ॥

ननु यदि वृत्त्यनुपस्थितस्यापि पदार्थद्वयसंसर्गस्याऽभेदादे शाब्दबोधे भान स्यात्तदा वृत्त्यनुपस्थितत्वाविशेषादऽबाधितयावत्संसर्गाणा शाब्दबोधे भानापत्ति स्यादिति पदार्थद्वयसंसर्गस्य वृत्त्युपस्थितत्व तदर्थं च घटादिपदवाच्यत्व स्वीकार्यमित्याशङ्कते—अथेति । परिहरति—नेति । कयोश्चिदिति—यथा ' नीलो घट ' इत्यत्र नीलघटपदयो केनचित्सम्बन्धेन=अभेदसम्बन्धेनैव स्वार्थान्वयबोधे साकाङ्क्षतया तादृशाकाङ्क्षाज्ञानमेव पदार्थद्वयसंसर्गभाने नियामकमस्तीत्याकाङ्क्षाज्ञानविषयस्यैव संसर्गस्य शाब्दबोधे भानमुपपद्यते नत्वबाधितयावत्संसर्गभानापत्तिरित्यर्थ । आकाङ्क्षाज्ञान चाऽव्यवहितोत्तरत्वसंसर्गेणैकपदविशिष्टापरपदज्ञानरूप विज्ञेय यथा ' नीलो घट ' इत्यत्राभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबोध प्रत्यऽव्यवहितोत्तरत्वसम्बन्धेन नीलपदविशिष्ट यद् घटपद तज्ज्ञानम् कारणम् । ' राज्ञ पुरुष ' इत्यत्र च स्वत्वसम्बन्धावच्छिन्नराजत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकशाब्दबोध प्रति षष्ठ्यन्तराजपदसमभिव्याहृतपुरुषपदज्ञान कारणम् ।

ननु ' ब्राह्मणस्य दर्शनम् ' इत्यत्र " कर्तृकर्मणो कृति " इत्यनेन ' ब्राह्मणस्य ' इति षष्ठी कर्मण्यपि समवति कर्तर्यपीति ' ब्राह्मणकर्मक दर्शनम् ' ' ब्राह्मणकर्तृक दर्शनम् ' इति द्विविधोऽप्यर्थ संभवतीति तत्र कथमाकाङ्क्षाज्ञानस्य ब्राह्मणकर्मकत्वकर्तृकत्वरूपसम्बन्धयोरन्यतरभाननियामकत्वं स्यादित्याशङ्क्याह—ययोश्चेति । नानासम्बन्धेन स्वार्थान्वयबोधे साकाङ्क्षपदयो शाब्दबोधे संसर्गविशेषविषयक यत् तात्पर्यज्ञान तादृशतात्पर्यज्ञानसहकृताकाङ्क्षाज्ञानमेव संसर्गविशेष-

आकाङ्क्षा तज्जन्यशाब्दबोधे संसर्गविशेषतात्पर्यज्ञानरूपकारणबलादेव संबन्धभाननियमोपपत्तेः । अन्वयांशे शक्त्युपगमेऽप्येकैकस्यैव पदार्थसंसर्गस्य संसर्गविषया क्वचित् कस्यचिद् भानं क्वचित् कस्यचिदभानमित्यनियमेन सामान्यरूपेणैवान्वयस्य शक्यकोटावन्तर्भावनीयतयोक्तस्यैव संसर्गभाननियामकत्वात् ।

न च संसर्गविशेषानुपस्थितौ तात्पर्यज्ञानासंभवेन तदुपस्थितेरावश्यकतया तद्गोचरसंस्कारोद्बोधार्थमेव तत्र वृत्तिज्ञानमपेक्षितमिति वाच्यम्, उद्बोधकान्तरादुपस्थितेऽपि संसर्गे तात्पर्यग्रहसंभवात् तत्र वृत्तिज्ञानस्याऽनपेक्षितत्वात्, तस्माद् घटत्वगोत्वादिविशिष्टे एव घटगवादिपदस्य शक्तिः पदार्थद्वयसंसर्गस्त्वाऽऽकाङ्क्षादिबललभ्य एवेति स्थितम् ।

---

भाननियामकं भवतीति न काचिदनुपपत्तिः । संसर्गविशेषविषयकतात्पर्यज्ञानं च प्रकरणादिना जायते । यस्मिन् संसर्गे वक्तुस्तात्पर्यं भवति तस्यैव वक्तृतात्पर्यज्ञानेन शाब्दबोधे भानं भवतीति यावत् ।

विपक्षे बाधकमाह–अन्वयांशे इति, पदार्थद्वयसंसर्गे घटादिपदस्य शक्तिस्वीकारपक्षेऽप्याननुगमव्यभिचारदोषनिवृत्त्यर्थं संसर्गत्वे एव शक्तिः स्वीकर्तव्या तथा च संसर्गत्वेन रूपेणाविशेषादबाधितयावत्संसर्गभानापत्तिः स्यादेव न चाऽबाधितयावत्संसर्गभानं भाति किं तु क्वचित् कस्यचिदेव संसर्गस्य भानं भवति कस्यचिदभानमपि भवतीति कस्य भानं स्यात् कस्य च न स्यादित्यनियमे प्राप्ते उक्तस्याऽऽकाङ्क्षाज्ञानस्यैव संसर्गभाननियामकत्वं स्वीकार्यमित्यर्थः । सामान्यरूपेण=अन्वयत्वेन रूपेण । किं वा शाब्दबोधे भासमानस्यैव संसर्गस्य घटादिपदार्थत्वं वक्तव्यं भाने कस्यैव संसर्गस्य भानं कस्य च नेति नियमाभावेन संसर्गत्वेन सामान्यरूपेणैव संसर्गस्य शक्यकोटावन्तर्भावः=घटादिपदार्थत्वं वक्तव्यं तथा च सर्वेषामपि संसर्गाणां संसर्गत्वाऽविशेषाद् घटादिपदार्थत्वं शाब्दबोधे भानं च प्राप्तं न च सर्वसंसर्गभानं भवतीत्युक्ताऽऽकाङ्क्षाज्ञानस्यैवावश्यं संसर्गभाननियामकत्वं प्राप्तमित्येवं ग्रन्थयोजना कर्तव्या । “ अन्वयांशे शक्त्युपगमेऽपि ” इत्यादिग्रन्थस्तु प्रक्षिप्त एव प्रतिभाति प्राक्तनपुस्तकेष्वनुपलम्भात् ।

नन्वनुपस्थितपदार्थे एव तात्पर्यस्य ज्ञानं जायते उपस्थितविषय एव तद्विषयकाऽऽकाङ्क्षादिबोधेन भवतीति संसर्गविशेषविषयकतात्पर्यज्ञानार्थं तदुपस्थितेः=संसर्गविशेषोपस्थितेरावश्यकतया तदुपस्थितये तद्गोचरसंस्कारोद्बोधार्थम्=संसर्गविशेषविषयकसंस्कारोद्बोधार्थमेव तत्र=संसर्गे ( संसर्गविषयकम् ) वृत्तिज्ञानमपेक्षितमपीति संसर्गस्य घटादिपदार्थत्वं वृत्तिज्ञानविषयत्वं च स्वीकार्यमित्याशङ्क्याह–न चेति । परिहारमनुमाह–उद्बोधकान्तरेति, प्रकरणादिरूपोद्बोधकान्तरेणोपस्थितेऽपि संसर्गे तात्पर्यज्ञानसंभवात्, तत्र=संसर्गे ( संसर्गविषयकम् ) वृत्तिज्ञानमपेक्षितं नास्तीति न संसर्गस्य घटादिपदार्थत्वमावश्यकमित्यर्थः । उपसंहरति–तस्मादिति, घटत्वादिविशिष्टे एव घटादिपदानां शक्तिः पदार्थद्वयसंसर्गोऽपि पदार्थद्वयसंसर्गस्तु शाब्दबोधे आकाङ्क्षाज्ञानवशेनैव भासत इति सिद्धम् ।

घटादिपदस्य पदार्थतावच्छेदकीभूतघटत्वादिविशिष्टे एव शक्तिर्न तु तदुपलक्षिते घटत्वादेरुपलक्षणत्वे तस्य द्रव्यत्वाद्यविशेषेण 'घटादिपदाद् द्रव्यत्वादिना न बोधोऽपि तु घटत्वादिनैव' इतिनियमानुपपत्तेः ।

अथ घटत्वादेरिव द्रव्यत्वादेरपि वैशिष्टयस्य घटादौ सत्त्वाद् घटादिपदशक्तौ घटत्वादिसामानाधिकरण्यरूपवैशिष्टयवद् द्रव्यत्वादिसामानाधिकरण्यरूपवैशिष्टयस्याप्यक्षततया 'घटत्वादिविशिष्टे शक्तिर्न तु द्रव्यत्वादिविशिष्टे' इत्यस्य कोर्थः ?

अत्र वदन्ति—'तद्विशिष्टे शक्तिः' इत्यस्य 'तद्धर्मतद्वैशिष्टयतदाश्रयेष्वेव शक्तिः' इत्यर्थः । घटादिपदशक्तिमति द्रव्यत्वादिवैशिष्टयसत्त्वेपि द्रव्यत्वादौ

---

घटादीति— घटादिपदस्य घटत्वादिविशिष्टे एव घटादिपदार्थे शक्तिः, घटत्वादिकं च घटादौ विशेषणमेव न तूपलक्षणमित्यर्थः । तदुपलक्षिते=घटत्वाद्युपलक्षिते । विपक्षे बाधकमाह— घटत्वादेरिति, यदि घटादौ घटत्वादिकमुपलक्षणं स्यात्तदा तस्य=घटत्वादेरुपलक्षणत्वेन रूपेण द्रव्यत्वादिधर्माविशेषाद् यथा घटादिपदाद् घटादेर्घटत्वादिरूपेण बोधो भवति तथा द्रव्यत्वादिरूपेणापि बोधः स्यात् तथा च "घटादिपदाद्द्रव्यत्वादिना न बोधोऽपि तु घटत्वादिनैव", इति नियमो नोपपद्येत, घटत्वादेर्विशेषणत्वे तु घटत्वादिकं विशेषणं द्रव्यत्वादिकं चोपलक्षणमिति विशेषाद् विशेषणीभूतधर्मरूपेणैव बोधस्वीकाराच्चोक्तनियम उपपद्यते इति सारः ।

ननु यथा घटादौ घटत्वादिकं वर्तते तथा द्रव्यत्वादिकमपि वर्तत एवेति "घटादिपदानां घटत्वादिविशिष्टे एव शक्तिर्न तु द्रव्यत्वादिविशिष्टे" इतिनियमस्य किं तात्पर्यमित्याशङ्कते— अथेति । घटादौ निरूपकत्वसंबन्धेन घटादिपदशक्तिरपि वर्तते समवायेन च घटत्वद्रव्यत्वादिकमपि वर्तते इति घटादिपदशक्तौ घटत्वद्रव्यत्वादिधर्मसामानाधिकरण्यरूपं वैशिष्टयं प्राप्तम् । शक्तौ च यादृशधर्मस्य सामानाधिकरण्यरूपवैशिष्टयं भवति तादृशधर्मरूपेणैव पदार्थस्य शक्त्या बोधो भवति, अस्ति च घटादिपदशक्तौ द्रव्यत्वादेरपि सामानाधिकरण्यरूपं वैशिष्टयमिति घटादिपदाच्छक्त्या घटादेर्द्रव्यत्वादिरूपेणापि बोधः कथं न स्यादित्याक्षेपः ।

उत्तरमारभते— अत्रेति । "तद्विशिष्टे शक्तिः" इत्यस्य नाम "घटत्वादिविशिष्टे शक्तिर्न तु द्रव्यत्वादिविशिष्टे" इतिनियमस्य । अर्थमाह—तद्धर्मेति, तद्धर्मः=घटत्वादिधर्मः तद्वैशिष्टयम्=घटत्वादिसमवायः, तदाश्रयः=घटत्वाद्याश्रयो घटादिः, तथा च घटघटत्वतत्समवायेषु घटपदस्य शक्तिरिति सिद्धम्, एवमन्यत्रापि ज्ञेयम् । घटादौ घटत्वादेरेव विशेषणत्वं द्रव्यत्वादेश्चोपलक्षणत्वमेव न विशेषणत्वमित्यत्र विनिगमनामाह— घटादिपदेति, निरूपकत्वसंबन्धेन घटादिपदशक्तिमति घटादौ यद्यपि द्रव्यत्वादिवैशिष्टयमस्ति तथापि द्रव्यत्वादौ अवच्छेदकत्वसंबन्धेन तच्छक्तिविरहात्=घटादिपदशक्त्यभावात् तेषाम्=द्रव्यत्वादीनामुपलक्षणता, घटत्वादौ चावच्छेदकत्वसं-

आकाङ्क्षा तज्ज्ञानं च शाब्दबोधे संसर्गविशेषतात्पर्यज्ञानरूपकारणबलादेव संबन्धभाननियमोपपत्तेः । अन्वयांशे शक्त्युपगमेऽप्येकैकस्यैव पदार्थसंसर्गस्य संसर्गविधया क्वचित् कस्यचिद् भानं क्वचित् कस्यचिदभानमित्यनियमेन सामान्यरूपेणान्वयस्य शक्यकोटावन्तर्भावनीयतयोक्तस्यैव संसर्गभाननियामकत्वात् ।

न च संसर्गविशेषानुपस्थितौ तात्पर्यज्ञानासंभवेन तदुपस्थितेरावश्यकतया तद्गोचरसंस्कारोद्बोधार्थमेव तत्र वृत्तिज्ञानमपेक्षितमिति वाच्यम्, उद्बोधकान्तरादुपस्थितेऽपि संसर्गे तात्पर्यग्रहसंभवात् तत्र वृत्तिज्ञानस्यानपेक्षितत्वात्, तस्माद् घटत्वगोत्वादिविशिष्टे एव घटगवादिपदस्य शक्तिः पदार्थद्वयसंसर्गस्त्वाऽऽकाङ्क्षादिबललभ्य एवेति स्थितम् ।

---

भाननियामकं भवतीति न काचिदनुपपत्तिः । संसर्गविशेषविषयकतात्पर्यज्ञानं च प्रकरणादिना जायते । यस्मिन् संसर्गे वक्तुस्तात्पर्यं भवति तस्यैव वक्तृतात्पर्यज्ञानेन शाब्दबोधे भानं भवतीति यावत् ।

निरुक्ते बाधकमाह—अन्वयांशे इति, पदार्थद्वयसंसर्गे घटादिपदस्य शक्तिस्वीकारपक्षेऽप्याननुगमव्यभिचारदोषनिवृत्त्यर्थं संसर्गत्वेन शक्तिः स्वीकर्तव्या तथा च संसर्गत्वेन रूपेणाविशेषादबाधितयावत्संसर्गभानापत्तिः स्यादेव न चाऽबाधितयावत्संसर्गभानं भवति किं तु क्वचित् कस्यचिदेव संसर्गस्य भानं भवति कस्यचिदभानमपि भवतीति कस्य भानं स्यात् कस्य च न स्यादित्यनियमे प्राप्ते उक्तस्याऽऽकाङ्क्षाज्ञानस्यैव संसर्गभाननियामकत्वं स्वीकार्यमित्यर्थः । सामान्यरूपेण=अन्वयत्वरूपेण । किं वा शाब्दबोधे भासमानस्यैव संसर्गस्य घटादिपदवाच्यत्वं वक्तव्यं भानं चास्यैव संसर्गस्य नान्यस्य चेति नियमाभावेन संसर्गत्वेन सामान्यरूपेणैव संसर्गस्य शक्यकोटावन्तर्भावः=घटादिपदवाच्यत्वं वक्तव्यं तथा च सर्वेषामपि संसर्गाणां संसर्गत्वाऽविशेषात् घटादिपदवाच्यत्वं शाब्दबोधे भानं च प्राप्तं न च यावत्संसर्गभानं भवतीत्युक्ताऽऽकाङ्क्षाज्ञानस्यैवागत्या संसर्गभाननियामकत्वं प्राप्तमित्येवं ग्रन्थयोजना कर्तव्या । " अन्वयांशे शक्त्युपगमेऽपि " इत्यादिपाठस्तु प्रक्षिप्त एव प्रतिभाति प्राक्तनपुस्तकेष्वनुपलम्भात् ।

ननूपस्थितपदार्थे एव तात्पर्यस्य ज्ञानं जायते उपस्थितिश्च तद्विषयकसंस्कारस्योद्बोधेन भवतीति संसर्गविशेषविषयकतात्पर्यज्ञानार्थं तदुपस्थितेः=संसर्गविशेषोपस्थितेरावश्यकतया तदुपस्थित्यर्थं तद्गोचरसंस्कारोद्बोधार्थम्=संसर्गविशेषविषयकसंस्कारोद्बोधार्थमेव तत्र=संसर्गे ( संसर्गविषयकम् ) वृत्तिज्ञानमपेक्षितमस्तीति संसर्गस्य घटादिपदवाच्यत्वं वृत्तिज्ञानविषयत्वं च स्वीकार्यमित्याशङ्क्याह— न चेति । परिहारहेतुमाह—उद्बोधकान्तरेति, प्रकरणादिलक्षणोद्बोधकान्तरेणोपस्थितेऽपि संसर्गे तात्पर्यज्ञानसंभवात् तत्र=संसर्गे ( संसर्गविषयकस्य ) वृत्तिज्ञानस्यापेक्षा नास्तीति न संसर्गस्य घटादिपदवाच्यत्वापत्तिरित्यर्थः । उपसंहरति—तस्मादिति, घटत्वादिविशिष्टे एव घटादिपदानां शक्तिर्न तु पदार्थद्वयसंसर्गेऽपि पदार्थद्वयसंसर्गस्तु शाब्दबोधे आकाङ्क्षाज्ञानवशेनैव भासते इति स्थितम् ।

घटादिपदस्य पदार्थतावच्छेदकीभूतघटत्वादिविशिष्टे एव शक्तिर्न तु तदुपलक्षिते घटत्वादेरुपलक्षणत्वे तस्य द्रव्यत्वाद्यविशेषेण 'घटादिपदाद् द्रव्यत्वादिना न बोधोऽपि तु घटत्वादिनैव' इतिनियमानुपपत्ते ।

अथ घटत्वादेरिव द्रव्यत्वादेरपि वैशिष्टयस्य घटादौ सत्त्वाद् घटादिपदशक्तौ घटत्वादिसामानाधिकरण्यरूपवैशिष्टयवद् द्रव्यत्वादिसामानाधिकरण्यरूपवैशिष्टयस्याप्यक्षततया 'घटत्वादिविशिष्टे शक्तिर्न तु द्रव्यत्वादिविशिष्टे' इत्यस्य कोऽर्थः ?

अत्र वदन्ति–'तद्विशिष्टे शक्तिः' इत्यस्य 'तद्धर्मतद्वैशिष्टयतदाश्रयेष्वेव शक्तिः' इत्यर्थः । घटादिपदशक्तिमति द्रव्यत्वादिवैशिष्टयसत्त्वेऽपि द्रव्यत्वादौ

---

घटादीति– घटादिपदस्य घटत्वादिविशिष्टे एव घटादिपदार्थे शक्ति , घटत्वादिकं च घटादौ विशेषणमेव न तूपलक्षणमित्यर्थ । तदुपलक्षिते=घटत्वाद्युपलक्षिते । विपक्षे बाधकमाह– घटत्वादेरिति, यदि घटादौ घटत्वादिकमुपलक्षण स्यात्तदा तस्य=घटत्वादेरुपलक्षणत्वेन रूपेण द्रव्यत्वादिधर्माविशेषाद् यथा घटादिपदाद् घटादेर्घटत्वादिरूपेण बोधो भवति तथा द्रव्यत्वादिरूपेणापि बोध स्यात् तथा च "घटादिपदाद् द्रव्यत्वादिना न बोधोऽपि तु घटत्वादिनैव", इति नियमो नोपपद्येत, घटत्वादेर्विशेषणत्वे तु घटत्वादिक विशेषण द्रव्यत्वादिक चोपलक्षणमिति विशेषाद् विशेषणीभूतधर्मरूपेणैव बोधस्वीकारादुक्तनियम उपपद्यते इति सार ।

ननु यथा घटादौ घटत्वादिक वर्तते तथा द्रव्यत्वादिकमपि वर्तत एवेति "घटादिपदात् घटत्वादिविशिष्टे एव शक्तिर्न तु द्रव्यत्वादिविशिष्टे" इतिनियमस्य किं तात्पर्यमित्याशङ्कते– अथेति । घटादौ निरूपकत्वसबन्धेन घटादिपदशक्तिरपि वर्तते समवायेन च घटत्वद्रव्यत्वादिकमपि वर्तते इति घटादिपदशक्तौ घटत्वद्रव्यत्वादिधर्मसामानाधिकरण्यरूप वैशिष्टय प्राप्तम् । शक्तौ च यादृशधर्मस्य सामानाधिकरण्यरूपवैशिष्टय भवति तादृशधर्मरूपेणैव पदार्थस्य शक्त्या बोधो भवति, अस्ति च घटादिपदशक्तौ द्रव्यत्वादेरपि सामानाधिकरण्यरूप वैशिष्टयमिति घटादिपदाच्छक्तया घटादेर्द्रव्यत्वादिरूपेणापि बोध कथ न स्यादित्याक्षेप. ।

उत्तरमारभते– अत्रेति । "तद्विशिष्टे शक्ति" इत्यस्य नाम "घटत्वादिविशिष्टे शक्तिर्न तु द्रव्यत्वादिविशिष्टे" इतिनियमस्य । अर्थमाह–तद्धर्मेति, तद्धर्म=घटत्वादिधर्म तद्वैशिष्टयम्=घटत्वादिसमवाय . तदाश्रय =घटत्वाद्याश्रयो घटादिः, तथा च घटघटत्वतत्समवायेषु घटपदस्य शक्तिरिति सिद्धम्, एवम् यत्रापि ज्ञेयम् । घटादौ घटत्वादेरेव विशेषणत्व द्रव्यत्वादेश्चोपलक्षणत्वमेव न विशेषणत्वमित्यत्र विनिगमनामाह– घटादिपदेति, निरूपकत्वसबन्धेन घटादिपदशक्तिमति घटादौ यद्यपि द्रव्यत्वादिवैशिष्टयमस्ति तथापि द्रव्यत्वादौ अवच्छेदकत्वसबन्धेन तच्छक्तिविरहात्=घटादिपदशक्त्यभावात् तेषाम्=द्रव्यत्वादीनामुपलक्षणता, घटत्वादौ चावच्छेदकत्वस-

तच्छक्तिविरहात् तेषामुपलक्षणता घटत्वादौ तत्सत्त्वाच्च तेषां विशेषणता। एवं च प्रवृत्तिनिमित्तेऽपि शक्तेः सत्त्वात् तस्यापि वाच्यतया "वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वम्" इतिप्रवृत्तिनिमित्तलक्षणे "वाच्यत्वे सति" इतिविशेषणदानम् "जात्याकृतिव्यक्तयः पदार्थः" इतिन्यायसूत्रोक्तं गोत्वादिजातेर्गवादिपदार्थत्वं चाप्युपपद्यते।

---

तत्सत्त्वात्= घटादिपदशक्तेः सत्त्वात् तेषाम्=घटत्वादीनां विशेषणता सिद्धेत्यर्थः। 'घटपदाद् घटो बोद्धव्यः' 'घटपदं घटत्वावच्छिन्नवाचकम्' इत्याद्याकारा भगवदिच्छारूपा शक्तिरस्ति तत्र घटो नाम समवायेन घटत्वावच्छिन्ना व्यक्तिरेवेति भगवदिच्छारूपशक्तौ घटो घटत्व समवायश्चेति त्रितयमेव भासते न तु द्रव्यत्वमपि येन द्रव्यत्वादिविशिष्टे घटादिपदानां शक्तिः स्यादिति सारः।

घटत्वादेर्घटादिपदवाच्यत्वे मानमाह—एवं चेति। घटादिपदानां बोधकत्वलक्षणा या घटादौ प्रवृत्तिरस्ति तत्र घटत्वादिकमेव निमित्तं घटत्वादिविशिष्ट एव तादृशप्रवृत्तेः सत्त्वादिति घटत्वादिकं प्रवृत्तिनिमित्तं विज्ञेयम्। तस्य=प्रवृत्तिनिमित्तलक्षणघटत्वादेः। यदि घटत्वादेर्घटादिपदवाच्यत्वं न स्यात्तदोक्तप्रवृत्तिनिमित्तलक्षणे प्रवृत्तिनिमित्तस्य घटत्वादेः "वाच्यत्वे सति" इति वाच्यत्वविशेषणं नोपपद्येत तथा "जात्याकृतिव्यक्तयः पदार्थः" इतिन्यायसूत्रोक्तपदार्थत्वं च नोपपद्येत तस्माद् घटत्वादेरपि घटादिपदवाच्यत्वमावश्यकमेवेत्यर्थः। वाच्यत्वे इति—घटत्वादौ वाच्यत्वमप्यस्ति वाच्यभूतघटादिव्यक्तिवृत्तित्वमप्यस्ति वाच्यभूतघटादिव्यक्तिविषयकोपस्थितौ प्रकारतया भासमानत्वमप्यस्तीति विशेषणत्रयार्थः। प्रवृत्तिनिमित्तत्वमिति च शेषः। अत्र च लक्षणे "वाच्यत्वे सति" इत्यनुक्ते शब्दाश्रयत्वस्याकाशपदप्रवृत्तिनिमित्तत्वं स्यात्—शब्दाश्रयत्वस्याकाशवृत्तित्वादाकाशोपस्थितौ प्रकारतया भासमानत्वाच्च न चैतदिष्टमिति "वाच्यत्वे सति" इत्युक्तं तथा च शब्दाश्रयत्वस्याऽऽकाशपदवाच्यत्वाभावादाकाशपदप्रवृत्तिनिमित्तत्वापत्तिर्नास्ति एतच्चाकाशपदे द्रष्टव्यम्, "वाच्यवृत्तित्वे सति" इत्यनुक्ते आकृतेरपि गवादिपदप्रवृत्तिनिमित्तत्वं स्यात्—उक्तन्यायसूत्रप्रामाण्येनाकृतेरपि पदार्थत्वेन वाच्यत्वाद्वाच्योपस्थितिप्रकारत्वाच्च न चैतदिष्टमिति "वाच्यवृत्तित्वे सति" इत्युक्तं तथा चाकृतेरवयवसंयोगरूपत्वादवयवमात्रवृत्तित्वेन वाच्यभूतगवादिव्यक्तावृत्तित्वाद् गवादिपदप्रवृत्तिनिमित्तत्वापत्तिर्नास्ति। आकृतेर्वाच्यत्व वाच्योपस्थितिप्रकारत्वं च "पिष्टकमय्यो गावः" इत्यादौ द्रष्टव्यं पिष्टकमयीगोषु गोत्वजातेरसमवात्, "वाच्योपस्थितिप्रकारत्वम्" इत्यनुक्ते घटस्य मृत्पदप्रवृत्तिनिमित्तत्वं स्यात्—घटस्य मृत्पदवाच्यत्वाद् मृत्पदवाच्यकपालद्वयवृत्तित्वाच्च न चैतदिष्टमिति "वाच्योपस्थितिप्रकारत्वम्" इत्युक्तं तथा च घटस्य मृत्पदात् घटकपालाद्युपस्थितौ प्रकारत्वाभावाद् मृत्पदप्रवृत्तिनिमित्तत्वापत्तिर्नास्ति, नवीनतार्किकमते तु द्रव्यादिपदानां घटत्वादेः प्रवृत्तिनिमित्तत्ववारणाय "वाच्यत्वे सति" इतिविशेषणमिति विशेषणत्रयसार्थक्यम्।

अथ 'घटशब्दाद् घटो बोद्धव्यः' इत्याकारिकाया भगवदिच्छाया बोधविशेषविषयतात्वेन बोधविषयतानिष्ठप्रकारतानिरूपितविशेष्यता घटे एव न तु घटत्वादौ विषयतामात्रं च वस्तुमात्रे एवेति कथं घटपदशक्तिर्घटत्वादिषु त्रिष्वेवेति नियम इतिचेत् ?,

ईश्वरेच्छायास्तत्पदजन्यशाब्दबोधविषयताप्रयोजकः संबन्ध एव तत्र तत्पद-

---

ननु 'घटपदाद् घटो बोद्धव्य' इत्याकाराया भगवदिच्छाया=भगवदिच्छाविषयीभूता या बोधविषयतानिष्ठप्रकारतानिरूपिता विशेष्यता सा बोधविशेषविषयतात्वेन रूपेण नामाऽऽश्रयत्वसम्बन्धावच्छिन्नत्वेन रूपेण तु घटे एवास्ति न तु घटत्वादौ भगवदिच्छाया विषयतामात्रं तु वस्तुमात्रे एवास्तीति कथं घटपदशक्तिर्घटत्वादिषु त्रिषु=घटघटत्वसमवायेष्वेवेतिनियम उपपद्येतेत्याशङ्कते—अथेति । आश्रयत्वसम्बन्धावच्छिन्नाया भगवदिच्छीयविशेष्यताया शक्यताप्रयोजकत्वे घटादिपदानां घटादावेव शक्तिः स्यान्न तु घटत्वादौ—आश्रयत्वसम्बन्धेन भगवदिच्छीयविशेष्यताया घटादिव्यक्तिमात्रवृत्तित्वात् सामान्यतो भगवदिच्छीयविशेष्यताया शक्यताप्रयोजकत्वे तस्या वस्तुमात्रवृत्तित्वाद् वस्तुमात्रे घटादिपदशक्तिः स्यान्न तु घटघटत्वसमवायेतित्रितयमात्रेइत्याक्षेपाभिप्राय । घटादिपदजन्यबोधविषयता घटादौ जायते तादृशविषयतानिष्ठप्रकारतानिरूपिता विशेष्यता घटादौ विज्ञेया । बोधविशेषविषयतेत्यत्र विषयता विशेष्यतारूपा विज्ञेया । बोधविशेषविषयता प्रकारताऽसमानाधिकरणरूपा वा विज्ञेया सा च घटादावेव सम्भवति—व्यक्तौ प्रकारताया अभावात् घटत्वादौ च घटादिनिष्ठविशेष्यतानिरूपितप्रकारताया अपि सत्त्वाद् बोधीयविषयता प्रकारतासमानाधिकरणैव भवतीत्यनुसन्धेयम् ।

उत्तरमारभते— ईश्वरेति, ईश्वरेच्छाया इति षष्ठ्यर्थो निरूपितत्वं तथा च 'घटपदाद् घटो बोद्धव्य' इत्याद्याकारकेश्वरेच्छानिरूपिता या घटादिपदजन्यबोधविषयता तत्प्रयोजको य सम्बन्धः स एव तत्र=घटघटत्वादौ घटादिपदशक्तिरस्तीतिव्यपदेशस्य=उक्तिव्यवहारस्य नियामकोऽस्ति स च सम्बन्धो नैकविध एव येन घटादेरेव वा घट स्यान्न घटत्वादे, किं तु त्रिविधत्वाद् घटघटत्वसमवायेषु त्रिष्वेव शक्तिरिति नियम उपपद्यते तथा चाऽऽश्रयत्वसम्बन्धावच्छिन्नबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितभगवदिच्छीयविशेष्यतारूपसंबन्धेन घटादिपदजन्यबोधविषयता घटादौ वर्तते इति घटादौ घटादिपदानां शक्तिः । स्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वसम्बन्धावच्छिन्नबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितभगवदिच्छीयविशेष्यतारूपसम्बन्धेन घटादिपदजन्यबोधविषयता घटत्वादौ वर्तते इति घटत्वादावपि घटादिपदशक्तिः, अत्र स्व बोधविषयता सापि घटे वर्तते घटत्वमपि घटे वर्तते इत्यवच्छेदकत्वं घटत्वे अवच्छेद्यत्वं च बोधविषयतायाम् तादृशबोधविषयतानिष्ठावच्छेद्यत्वनिरूपितं यद् घटत्वनिष्ठमवच्छेदकत्वं तत्सम्बन्धावच्छिन्ना या घटत्वनिष्ठा बोधविषयता तन्निष्ठप्रकारतानिरूपितभगवदिच्छीयविशेष्यता घटत्वे वर्तते एव, 'घटत्व

शक्तिरितिव्यपदेशनियामकः, 'घटपदाद् घटो बोद्धव्यः' इत्येतादृशेच्छायां च घटत्वावच्छेदेन बोधविषयत्वमवगाहमानायां समवायावच्छिन्नं बोधविषयता· वच्छेदकत्वं घटत्वे समवायेन घटत्वावच्छेद्यत्वं वा विषयतायां संसर्गमर्यादया भासते ।

एवं चाऽऽश्रयत्वसंबन्धावच्छिन्नबोधविषयत्वप्रकारतानिरूपितविशेष्यत्वं घट-स्य. अवच्छेदकत्वसंसर्गावच्छिन्ना घटविशेषणतापन्नबोधविषयत्वस्य या प्रकारता तन्निरूपितविशेष्यत्वं घटत्वस्य. घटविशेषणतापन्नबोधविषयत्वाशेऽवच्छे-द्यत्वसंबन्धेन प्रकारत्वं वा घटत्वस्य. घटत्वे बोधविषयतायाः संसर्गविधया भास-

---

भवतु' इति च भगवदिच्छाया आकार । स्वनिष्ठावच्छेद्य-
घटपदजन्यबोधविषयतावच्छेदक भवतु' इति च भगवदिच्छाया आकार । स्वनिष्ठावच्छेद्य-
तानिरूपितावच्छेदकतावच्छेदकत्वसम्बन्धावच्छिन्नबोधविषयतावच्छिन्नप्रकारतानिरूपितभगवदि-
च्छीयविशेष्यतारूपसम्बन्धेन घटादिपदजन्यबोधविषयता घटत्वादिसमवाये वर्तते इति घटत्वादि
समवायेपि घटादिपदशक्ति, अत्रापि पूर्ववदेव एव बोधविषयता तादृशबोधविषयतानिष्ठावच्छेद्यता
निरूपितावच्छेदकता घटत्वे घटत्वनिष्ठतादृशावच्छेदकताया अवच्छेदकत्व समवाये तादृशसम्बन्धेन
घटादिपदजन्यबोधविषयता समवाये तादृशबोधविषयतानिष्ठप्रकारतानिरूपितविशेष्यता समवाये
वर्तेत एव, 'समवायो घटपदजन्यबोधविषयतावच्छेदकतावच्छेदको भवतु' इति च भगवदिच्छाया
आकार । बोधविषयता ह्याश्रयतासम्बन्धेन व्यक्तौ स्वावच्छेदकतासम्बन्धेन घटत्वादौ स्वावच्छेदकता
वच्छेदकत्वसम्बन्धेन च समवाये वर्तेत इति त्रिष्वेव शक्तिरिति नियम उपपद्यते इति सार । स्वयमपि
विशदयति— घटपदादित्यादिना, घटत्वावच्छेदेन=घटत्वावच्छिन्न यद् घटनिष्ठ घटपदजन्यबोध-
विषयत्व तदवगाहमानायाम्=तद्विषयकायाम् 'घटपदाद् घटो बोद्धव्य' इत्याकाराया भगव-
दिच्छाया समवायेन बोधविषयतावच्छेदकत्व घटत्वे संसर्गमर्यादया=आकाङ्क्षाबलेन भासते—
बोधविषयताया समवायेन घटत्वस्य च घटे सत्त्वात्तयोरवच्छेद्यावच्छेदकभाव, किं वा सम-
वायेन घटत्वावच्छेद्यत्व बोधविषयतायां संसर्गमर्यादया भासते इत्यन्वय । अत्र 'बोधविषयता-
वच्छेदकतावच्छेदकत्व समवाये समवायावच्छिन्नघटत्वावच्छिन्नत्व वा बोध विषयताया संसर्गमर्या-
दया भासते' इति शेष ।

घटपदजन्यबोधविषयताप्रयोजकसम्बन्धस्य त्रैविध्य स्वयमप्याह— एव चेत्यादिना । सर्व चैतत्
पूर्वमेव स्पष्टीकृतम् । घटस्येत्यत्रास्तीतिशेष, घटे इति यावत् । घटविशेषणतापन्नेति— घटे
विशेषणताप्राप्तमपि बोधविषयत्वमवच्छेदकत्वसम्बन्धेन घटत्वे वर्तते इति तादृशबोधविषयत्व-
निष्ठाऽवच्छेदकत्वसम्बन्धावच्छिन्ना या प्रकारता तन्निरूपितविशेष्यता घटत्वस्य=घटत्वे इत्यर्थ ।
घटविशेषणताप-
पन्ना तस्माह— घटविशेषणतेति, उक्तघटत्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यत्व घटविशेषणताप-
न्नबोधविषयतायामस्तीति तादृशावच्छेद्यत्वसम्बन्धेन घटत्वस्य बोधविषयताया प्रकारत्व वा वक्तव्य-
मित्यर्थ । घटत्वे इति— बोधविषयतानिष्ठावच्छेद्यतानिरूपितावच्छेदकत्व घटत्वे यदस्ति तदवच्छे-

मानेऽवच्छेदकत्वेऽवच्छेदकतया भासमानत्वं समवायस्य. इति त्रितयमेव घटपद-जन्यबोधविषयतायामुपयुज्यते इति त्रयाणां वाच्यतोपपत्तिः ।

---

दकत्वं समवायेऽस्तीति घटघटत्वसमवायेतित्रितयमेव घटपदजन्यबोधविषयतायामुपयुज्यते=अन्वेतीति त्रयाणामेव वाच्यतोपपत्तिः, त्रिष्वेव शक्तिरित्यर्थः । " ज्ञातमुपयुज्यते" इति पाठे तु त्रितयमेव घटपदजन्यबोधविषयताविषयकज्ञानविषयो भवतीति त्रयाणां वाच्यतोपपत्तिरित्यर्थः ।

अत्र च— अनवच्छिन्नधर्मिताकज्ञानस्य स्वविरोधिज्ञानप्रतिबन्धकत्वं न भवति अत्र तु ' घटत्वं घटपदजन्यबोधविषयतावच्छेदकम् ' इतिज्ञानस्य ' घटत्वं घटपदजन्यबोधविषयतावच्छेदकं न ' इत्याकारकज्ञानं प्रति प्रतिबन्धकत्वमिष्टमस्ति तदर्थं घटत्वस्य घटत्वत्वेन रूपेणोपस्थितिः स्वीकार्या तथा च घटत्वनिष्ठधर्मिताया घटत्वत्वेनावच्छिन्नत्वसंभवेनुक्तप्रतिबध्यप्रतिबन्धकभाव उपपद्येत घटत्वस्य चात्र स्वरूपेणैवोपस्थितिर्भवति न तु घटत्वत्वेन रूपेण गौरवादिति घटत्वे विशेष्यता न स्वीकार्या किं तु प्रकारतैव अनवच्छिन्नप्रकारताकज्ञानस्य तु स्वविरोधिज्ञानप्रतिबन्धकत्वं संभवतीत्युक्तप्रतिबध्यप्रतिबन्धकभावोपपत्त्यर्थं पक्षान्तरेण घटत्वे प्रकारत्वमुक्तम्, अस्मिन् पक्षे ' घटपदजन्यबोधविषयता घटत्वावच्छिन्ना भवतु ' इत्येव भगवदिच्छाया आकारः, तथा च स्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यत्वसंसर्गावच्छिन्नघटत्वनिष्ठप्रकारतानिरूपितबोधविषयतात्वावच्छिन्ना विशेष्यता तत्पदजन्यबोधविषयतायां विज्ञेया स्वं घटत्वम् । एवं समवायस्यापि समवायत्वेनोपस्थितिस्वीकारे गौरवाद् अनवच्छिन्नधर्मिताकज्ञानस्य च स्वविरोधिज्ञानप्रतिबन्धकत्वासंभवाच्च ' समवायो घटपदजन्यबोधविषयतावच्छेदकतावच्छेदको भवतु ' इति ज्ञानस्य ' समवायो घटपदजन्यबोधविषयतावच्छेदकतावच्छेदको न ' इत्याकारकज्ञानप्रतिबन्धकत्वं न स्यादिति समवायेपि प्रकारतैव स्वीकार्या न तूक्तरीत्या विशेष्यता अस्मिन् पक्षे ' घटत्वनिष्ठा बोधविषयता समवायसंबन्धावच्छिन्ना भवतु ' इति भगवदिच्छाया आकारः, तथा च स्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेद्यत्वसम्बन्धावच्छिन्ना समवायनिष्ठप्रकारतानिरूपितबोधविषयतात्वावच्छिन्ना विशेष्यता तत्पदजन्यबोधविषयतायां विज्ञेया. अत्र स्वं घटत्वं घटत्वनिष्ठावच्छेदकतावच्छेदकत्वं समवाये समवायनिष्ठावच्छेदकतानिरूपितावच्छेद्यता बोधविषयतायां समवायनिष्ठप्रकारतानिरूपितविशेष्यतापि बोधविषयताया प्राप्ता तथा चानवच्छिन्नप्रकारताकज्ञानस्य तु स्वविरोधिज्ञानप्रतिबन्धकत्वसंभवादुक्तप्रतिबध्यप्रतिबन्धकभाव उपपद्यते इत्यवधेयम् ।

ननु संकेतविषयता=भगवदिच्छीयविशेष्यतोक्तरीत्या घटे आश्रयत्वसंबन्धेन. घटत्वे स्वनिष्ठावच्छेद्यतानिरूपितावच्छेदकत्वसम्बन्धेन समवाये च स्वनिष्ठावच्छेद्यतानिरूपितावच्छेदकतावच्छेदकत्वसम्बन्धेन वर्तते इति घटघटत्वसंसर्गेषु=घटघटत्वसमवायेषु वर्तमानानां तादृशसंकेतविषयतानां संबन्धभेदेन भेदात् तत्पदजन्यबोधविषयताप्रयोजकसंबन्धस्यापि चोक्तरीत्या भेदाद् घटघटत्वसमवा-

घटघटत्वसंसर्गेषु संकेतविषयताना मिथो वैलक्षण्येऽपि तन्निरूपकबोधविषयताया ऐक्याच्छक्त्यैक्यप्रवादो न तु संकेतैक्यात्–शक्यतावच्छेदकभेदेनापि शक्तिभेदानुपपत्तेः–भगवत्संकेतस्याऽभेदात् ।

तदंशे आश्रयत्वसंबन्धावच्छिन्नबोधविषयत्वप्रकारतानिरूपितसंकेतविषयतावगाहिज्ञानस्यैव पदार्थान्तरान्वयबोधोपयोगित्वमिति शक्तिभ्रमं विना न पदार्थतावच्छेदके पदार्थान्तरान्वयः ।

---

येषु कथमेका शक्तिः स्यादित्याशङ्कयाह– घटघटत्वेति, घटघटत्वसंसर्गेषु संकेतविषयताना स्वस्वसम्बन्धिभेदेन मिथो वैलक्षण्येऽपि=परस्परं भेदेऽपि तन्निरूपकबोधविषयताया =भगवत्संकेतनिरूपक-घटादिपदजन्यबोधविषयतायास्त्विक्याच्छक्त्यैक्यप्रवादो न तु संकेतैक्यादित्यर्थः । संकेतैक्येन शक्त्यैक्यस्वीकारे बाधकमाह– शक्येति, यदि संकेतभेदेनैव शक्तिभेदः संकेतैक्येन च शक्त्यैक्यं स्यात्तदा भगवदिच्छारूपस्य संकेतस्य नित्यत्वेनाऽभेदात्=एकत्वात् शक्तभेदेनापि= घटपटादिपदानां शक्तानां भेदेनापि शक्तिभेदो न स्यात्तथा शक्यतावच्छेदकानां घटत्वपटत्वादीनां भेदेनापि शक्तिभेदो न स्यात् इत्थं शक्तशक्यतावच्छेदकभेदेन शक्तिभेद इति संकेतनिरूपकबोधविषयताया एव भेदाभेदौ शक्तिभेदाभेदनियामकाविति अभ्युपगन्तव्यमित्यर्थः ।

नन्वेवं घटत्वादेरपि वाच्यत्वेन पदार्थत्वात् ' नित्यो घटः ' इत्यादौ घटपदवाच्यघटत्वे नित्यत्वस्य पदार्थान्तरस्यान्वयः स्यात् न चैतदिष्टम्, किं वा घटत्वे नित्यत्वपदार्थान्वयतात्पर्येण 'नित्यो घटः ' इति प्रयोगः स्यात् घटत्वस्याप्युक्तरीत्या घटपदवाच्यत्वेन पदार्थत्वात् न चैतदिष्टमिति अभिप्रायेणाह– तदंशे इति, पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति आश्रयत्वसम्बन्धावच्छिन्नबोधविषयतावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शक्तिज्ञानं कारणं तथा च ' नीलो घटः ' इत्यत्र पदार्थान्तरनीलनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति आश्रयत्वसम्बन्धेनाद्युक्तरूपेण शक्तिज्ञानं कारणमिति प्रागतमाऽऽश्रयत्वसम्बन्धेनाद्युक्तरूप-शक्तिज्ञानं च घटस्यैवास्ति न घटत्वादेरिति नीलपदार्थस्य घटे एवान्वयो भवति न घटत्वे एवम् ' नित्यो घटः ' इत्यत्राप्याश्रयत्वसम्बन्धेनाद्युक्तरूपेण शक्तिज्ञानं घटस्यैवास्ति न घटत्वस्येति घटे एव नित्यत्वान्वयः स्यात्स घटत्वे घटे च नित्यत्वं बाधितमिति ' नित्यो घटः ' इति-प्रयोगो न भवति । यस्मिन् घटादौ बोधविषयत्वप्रकारतानिरूपितभगवदिच्छीयविशेष्यता आश्रयत्वसम्बन्धेन वर्तते तस्मिन्नेव पदार्थान्तरस्यान्वयो भवति नान्यत्रेति सारः । संकेतविषयता=भगवदिच्छीयविशेष्यता तदवगाहि=तद्विषयकं यच्छक्तिज्ञानं तस्यैव पदार्थान्तरान्वयबोधकारणत्वमित्यन्वयः । यद्विषयकमुक्तसंकेतविषयतावगाहिशक्तिज्ञानं भवति तत्र पदार्थान्तरान्वयो भवति यथा घटादिव्यक्तौ, न तु घटत्वादौ घटत्वं अवच्छेदकत्वसम्बन्धेनोक्तरूपा भगवदिच्छीयविशेष्यताया-सत्त्वादित्यर्थः ।यदि च घटपदस्य घटत्वे शक्तिभ्रमो भवति नाम घटत्वे एवाश्रयत्वसम्बन्धेन घटपद-

यत्तु तदंशे संकेतमुख्यविशेष्यताग्रहस्तत्रेतरान्वयबोधप्रयोजकः 'लोमादिमान् पशुपदाद् बोद्धव्यः' इत्याकारकसंकेते लोमाद्यंशे बोधविषयतायाः प्रकारत्वेपि लोमादेर्धर्मिविशेषणतापन्नस्यैव तादृशविषयताविशेष्यत्वं न तु मुख्यविशेष्यत्वमतो शक्तिभ्रमं विना न लोमादौ पदार्थान्तरान्वय इति तादृशबोधविषयत्वप्रकारतायामाऽऽश्रयत्वसंसर्गावच्छिन्नत्वविशेषणमनर्थकमिति, ।

---

जन्यबोधविषयत्वप्रकारतानिरूपितभगवदिच्छीयविशेष्यताभ्रमो भवति तदा तु घटत्वादौ पदार्थतावच्छेदकेपि पदार्थान्तरान्वय इष्ट एवेत्याह– शक्तिभ्रममिति ।

ननु पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति आश्रयत्वसम्बन्धावच्छिन्नबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शक्तिज्ञानं कारणमित्येव कार्यकारणभावकल्पनाया अपेक्षा नास्ति–आश्रयत्वसम्बन्धनिवेशेन गौरवात् किं तु पदार्थांतरनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति संकेतमुख्यविशेष्यतासम्बन्धेन शक्तिज्ञानं कारणमित्येव कार्यकारणभावकल्पना कर्तव्या तथा च 'नीलो घट.' इत्यत्र संकेतमुख्यविशेष्यतासम्बन्धेन शक्तिज्ञानं घटविषयकमेवास्तीति घटे नीलपदार्थान्वयः, 'नित्यो घटः' इत्यत्र च घटत्वे शक्तिज्ञानं संकेतमुख्यविशेष्यतासम्बन्धेन नास्ति–घटत्वे प्रकारताया अपि सत्त्वात् प्रकारताऽसमानाधिकरणाया एव विशेष्यताया मुख्यत्वसम्भवादिति न घटत्वे नित्यत्वान्वयसम्भवो घटे च नित्यत्वं बाधितमेव । एवम् 'लोमादिमान् पशुपदाद् बोद्धव्य' इत्याकारकभगवत्संकेते यद्यपि लोम्ना लोमत्वेन रूपेणोपस्थितिरप्यस्ति बोधविषयतानिरूपितविशेष्यतापि लोमत्वेऽस्ति तथापि लोमसु न संकेतमुख्यविशेष्यता–अन्वयिनिष्ठविशेष्यतानिरूपितप्रकारताया अपि सत्त्वादिति 'दीर्घो लोमादिमान्' इत्यत्र दीर्घत्वस्य न लोमस्वन्वयापत्तिः किं तु लोमादिमत्येव तथा च त्वदुक्तरीत्या बोधविषयतात्वावच्छिन्नप्रकारतायामाश्रयत्वसम्बन्धावच्छिन्नत्वविशेषणमनर्थकमेवेत्याशङ्कते–यत्त्विति । लोमाद्यंशे बोधविषयतायाः प्रकारत्वेपि नाम लोमसु बोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतायाः सत्त्वेपि लोमादेर्धर्मिभूतव्यक्तौ विशेषणत्वेन प्रकारत्वात् प्रकारतासमानाधिकरणमेव तादृशविषयताविशेष्यत्वम्=बोधविषयतानिष्ठप्रकारतानिरूपितविशेष्यत्वं न तु मुख्यविशेष्यत्वम्=प्रकारताऽसमानाधिकरणं विशेष्यत्वमिति न लोमादौ दीर्घत्वादिपदार्थान्तरान्वयापत्तिरित्यन्वयः । पशुपदस्य लोमसु शक्तिभ्रमे तु लोमसु पदार्थान्तरान्वय इष्ट एवेत्युक्तम्–शक्तिभ्रममिति । 'नित्यो घटः' इत्यत्र तु घटत्वस्यान्वयितावच्छेदकत्वेनैवोपस्थितिर्भवति न त्वन्वयित्वेन घटत्वत्वेन रूपेणापि येन घटत्वे नित्यत्वान्वयापत्तिः स्यादिति तदुदाहरणं त्यक्त्वा लोमादिमानित्युदाहृतं लोम्नां च लोमत्वेन रूपेणोपस्थितिस्वीकारात्तत्र दीर्घत्वादिपदार्थान्तरान्वयापत्तिरस्तीत्यनुसन्धेयम् । यस्मिन् संकेतमुख्यविशेष्यता तस्मिन् पदार्थान्तरान्वय इति सारः ।

तत्र— 'लोम पशुपदजन्यबोधविषयतावच्छेदकं भवतु' इत्यादिसंकेतविषयका-दृऽवच्छेदकतासंसर्गकतादृशबोधविषयत्वप्रकारताकसंकेतमुख्यविशेष्यं लोमेति ज्ञानाल्लोमादिमुख्यविशेष्यकशाब्दबोधानुदयेनाश्रयत्वसंबन्धावच्छिन्नत्वेन तादृशशाब्दबोधविषयत्वप्रकारताया अवश्यं निवेशनीयत्वात् तत्र च लोमावच्छिन्नविशेष्यकबोधस्यैव संकेतविषयतया ग्रहेणाऽन्यादृशबोधोत्पत्तेरनुभवविरुद्धतयेष्टापत्तेरयोगात् ।

एवं च 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इत्यत्र पदार्थत्वम्=बोधविषयताश्रयत्वेन संकेतविषयत्वम् । तदेकदेशत्वं च बोधविषयतावच्छेदकत्वेन तथात्वरूपं तदेव शक्यतावच्छेदकत्वमित्यवधेयम् ।

---

उक्तपूर्वपक्षं पराकरोति— तत्रेत्यादिना, यदि संकेतमुख्यविशेष्यतासम्बन्धेन शक्तिज्ञानमुक्तरीत्या पदार्थान्तरान्वयं प्रति मुख्यविशेष्यताकशाब्दबोधं प्रति च कारणं स्यात्तदा 'लोम पशुपदजन्यबोधविषयतावच्छेदकं भवतु' इत्याकारकसंकेतविषयकं यद् अवच्छेदकतासंसर्गावच्छिन्नतादृशबोधविषयत्वप्रकारताकं संकेतमुख्यविशेष्यं लोमेतिज्ञानं नामाऽवच्छेदकत्वसम्बन्धावच्छिन्नबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यताश्रयो लोमेतिज्ञानं तस्माल्लोमविषयको मुख्यविशेष्यताकः शाब्दबोधो भवेदेव—उक्तसंकेते लोम्नामेव मुख्यविशेष्यत्वाद् न चोक्तसंकेतज्ञानाल्लोमविषयको मुख्यविशेष्यताकः शाब्दबोधो जायते इति तादृशशाब्दबोधानुदयोपपादनाय तादृशशाब्दबोधविषयत्वप्रकारताया आश्रयत्वसंबन्धावच्छिन्नत्वेन रूपेण निवेशः कर्तव्यो यथा— पदार्थान्तरान्वयं प्रति मुख्यविशेष्यताकशाब्दबोधं प्रति चाश्रयत्वसंबन्धावच्छिन्नबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धेन शक्तिज्ञानं कारणमिति । ननु 'लोम पशुपदजन्यबोधविषयतावच्छेदकं भवतु' इत्याकारकसंकेतविषयकादुक्तज्ञानादपि लोमादिविषयकमुख्यविशेष्यताकः शाब्दबोधो भवतु को दोष इत्याशङ्क्याह—तत्र चेति, तत्र=उक्तसंकेतविषयकोक्तज्ञानस्थले लोमावच्छिन्ना या पशुव्यक्तिस्तद्विशेष्यकबोधस्यैव संकेतविषयतया ग्रहेण तादृशसंकेतग्रहेण पशुव्यक्तिविशेष्यक एव शाब्दबोधो जायते अन्यादृशबोधोत्पत्तेः=लोमादिविशेष्यकबोधोत्पत्तेरनुभवविरुद्धतया लोमादिविशेष्यकबोधोत्पत्ताविष्टापत्तिर्न सम्भवतीत्यर्थः । 'लोम पशुपदजन्यबोधविषयतावच्छेदकं भवतु' इत्याकारकसंकेते लोम्नो बोधविषयतावच्छेदकत्वेन विषयतया तादृशसंकेतग्रहेण पशुव्यक्तिविशेष्यकलोमप्रकारक एव बोधो युक्तः अर्थाद् यस्मिन् बोधे लोम बोधविषयतावच्छेदकत्वेन भासेत तादृश एव बोधो युक्तस्तादृशबोधश्च पशुव्यक्तिविशेष्यक एव सम्भवति न तु लोमविशेष्यक इति सारः ।

एवं चेति— एवं च=आश्रयत्वसंबन्धावच्छिन्नबोधविषयताया पदार्थान्तरान्वयप्रयोजकत्वे च सिद्धे 'नीलादिपदार्थः पदार्थेन घटादिनैवाऽन्वेति न तु पदार्थैकदेशेन घटत्वादिना' इत्यत्र बोधविषयताश्रयत्वेनैव रूपेण संकेतविषयत्वं पदार्थत्वम्, तदेकदेशत्वम्=पदार्थैकदेशत्वं च बोधविषय-

अथ घटत्वाद्युपलक्षिते द्रव्यपदशक्त्यवगाहिप्रमातो घटत्वादिप्रकारकस्य घटादिपदशक्तिप्रमातः कालिकादिसंबन्धेन घटत्वादिप्रकारकस्य च शाब्दबोधस्य वारणाय तत्सम्बन्धेन तद्धर्मप्रकारकबोधं प्रति तत्संबन्धेन तद्धर्मविशिष्टांशे तत्पदवाच्यत्वावगाहि ज्ञानं कारणं वाच्यं विशिष्टांशे तत्पदवाच्यत्वावगाहित्वं च विशेषणीभूततद्धर्मतत्संबन्धतद्धर्म्यंशे तदवगाहित्वरूपं वाच्यं न तु तेन संबन्धेन तद्धर्मं धर्मितावच्छेदकीकृत्य तदवगाहित्वम्–घटत्वादिकं धर्मितावच्छे-

---

तावच्छेदकत्वेन रूपेण तथात्वरूपम्=संकेतविषयत्वरूपं विज्ञेयं तदेव=बोधविषयतावच्छेदकत्वमेव शक्यतावच्छेदकत्वं यथा घटत्वादौ, घटघटत्वसमवायेषु त्रिषु घटपदशक्तिस्वीकाराद् घटत्वादेः पदार्थैकदेशत्वमेव पदार्थत्वं च घटादेरेवेत्यर्थः । तथा चाश्रयत्वसम्बन्धावच्छिन्नबोधविषयतात्वा-वच्छिन्नप्रकारतानिरूपितभगवदिच्छीयविशेष्यताश्रयत्वं पदार्थत्वम्, अवच्छेदकत्वसम्बन्धावच्छिन्नबो-धविषयतात्वावच्छिन्नप्रकारतानिरूपितभगवदिच्छीयविशेष्यताश्रयत्वं पदार्थैकदेशत्वमिति सिद्धम् ।

सम्प्रति यद्रूपेण शक्तिज्ञानस्य शाब्दबोधहेतुत्वमस्ति तद्रूपनिरूपणमारभते–अथेत्यादिना । ननु घटत्वोपलक्षिते घटे नाम घटत्वोपलक्षितघटविषयकं यद् द्रव्यपदशक्तिज्ञानं तदपि यथार्थ-त्वात् प्रमैव तादृशद्रव्यपदशक्तिज्ञानाद् द्रव्यत्वप्रकारक एव बोध इष्टः–द्रव्यपदसंकेते द्रव्यत्वस्यैव प्रकारतया भानाद् न तु घटत्वप्रकारकोऽपि बोध इति घटत्वोपलक्षितविषयकद्रव्यपदशक्तिज्ञानाद् घटत्वप्रकारकबोधोत्पत्तेर्वारणाय तथा घटपदशक्तिज्ञानादपि समवायसम्बन्धेनैव घटत्वप्रकारकबोधो नाम समवायसम्बन्धावच्छिन्नघटत्वनिष्ठप्रकारताक एव बोध इष्टः– घटपदसंकेते प्रकारतावच्छेद-कसम्बन्धत्वेन समवायस्यैव प्रवेशाद् न तु कालिकादिसम्बन्धेनापि घटत्वप्रकारकबोध इष्ट इति घटपद-शक्तिज्ञानादपि कालिकादिसम्बन्धावच्छिन्नघटत्वनिष्ठप्रकारताकबोधोत्पत्तेर्वारणाय तत्सम्बन्धेन= समवायसम्बन्धेन तद्धर्मप्रकारकबोधम्=घटत्वादिधर्मप्रकारकबोधं प्रति तत्सम्बन्धेन=समवायसम्बन्धेन तद्धर्मविशिष्टांशे=घटत्वादिधर्मविशिष्टा या घटादिव्यक्तिस्तद्विषयकं यत् तत्पदवाच्यत्वावगाहि='सम-वायेन घटत्वविशिष्टो घटो घटपदवाच्य' इत्याकारकं शक्तिज्ञानं तस्यैव कारणत्वं वक्तव्यं तथा च द्रव्य-पदसंकेते द्रव्यत्वस्यैवावच्छेदकत्वेन भानाद् द्रव्यपदशक्तिज्ञानाद् घटत्वप्रकारकबोधस्यापत्तिर्नास्ति तथा घटपदसंकेते प्रकारतावच्छेदकसम्बन्धत्वेन समवायस्यैव भानाद् घटपदशक्तिज्ञानात् काल-कादिसम्बन्धेनापि घटत्वप्रकारकबोधस्यापत्तिर्नास्तीत्यर्थः । तत्सम्बन्धेन तद्धर्मविशिष्टांशे तत्पदवाच्य-त्वावगाहित्वं परिष्करोति–विशिष्टांश इति, विशेषणीति–विशेषणीभूतो यो घटत्वादिरूपो धर्मस्तादृशध-र्मस्य च व्यक्तौ यः समवायस्तत्सम्बन्धस्तयोर्धर्मिभूता च या घटादिव्यक्तिस्तेषु त्रिष्वेव तदवगाहित्वरू-पम्=घटादिपदवाच्यत्वावगाहित्वरूपं विशिष्टांशे तत्पदवाच्यत्वावगाहित्वं वक्तव्यं न तु तेन समवाय-सम्बन्धेन तद्धर्मम्=घटत्वादिकं धर्मितावच्छेदकीकृत्य=धर्मितावच्छेदकमात्रं कृत्वा तदवगाहित्वम्= घटादिपदवाच्यत्वावगाहित्वरूपम्–अर्थात् घटत्वं समवायसम्बन्धेन धर्मितावच्छेदकं कृत्वा समवायेन

तत्र— 'लोम पशुपदजन्यबोधविषयतावच्छेदकं भवतु' इत्यादिसंकेतविषयका-दवच्छेदकतासंसर्गकतादृशबोधविषयत्वप्रकारताकसंकेतमुख्यविशेष्य लोमेति ज्ञानाल्लोमादिमुख्यविशेष्यकशाब्दबोधानुदयेनाश्रयत्वसंबन्धावच्छिन्नत्वेन तादृशशाब्दबोधविषयत्वप्रकारताया अवश्यं निवेशनीयत्वात् तत्र च लोमावच्छिन्नविशेष्यकबोधस्यैव संकेतविषयतया ग्रहेणाऽन्यादृशबोधोत्पत्तेरनुभवविरुद्धतयेष्टापत्तेरयोगात् ।

एवं च 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इत्यत्र पदार्थत्वम्=बोधविषयताश्रयत्वेन संकेतविषयत्वम् । तदेकदेशत्वं च बोधविषयतावच्छेदकत्वेन तयात्वरूपं तदेव शक्यतावच्छेदकत्वमित्यवधेयम् ।

---

उक्तपूर्वपक्षं पराकरोति— तत्रेत्यादिना, यदि संकेतमुख्यविशेष्यतासम्बन्धेन शक्तिज्ञानमुक्तरा-त्या पदार्थान्तरान्वयं प्रति मुख्यविशेष्यताकशाब्दबोधं प्रति च कारणं स्यात्तदा 'लोम पशुपद-जन्यबोधविषयतावच्छेदकं भवतु' इत्याकारकसंकेतविषयकं यद् अवच्छेदकतासंसर्गावच्छिन्नतादृश-बोधविषयत्वप्रकारताकं संकेतमुख्यविशेष्यं लोमेतिज्ञानं नामाऽवच्छेदकत्वसंबन्धावच्छिन्नबोध-विषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यताश्रयो लोमेतिज्ञानं तस्माल्लोमविषयको मुख्यविशे-ष्यताकः शाब्दबोधो भवत्वेव—उक्तसंकेते लोम्नामेव मुख्यविशेष्यत्वाद् न चोक्तसंकेतज्ञानाल्लोमवि-षयको मुख्यविशेष्यताकः शाब्दबोधो जायते इति तादृशशाब्दबोधानुदयोपपादनाय तादृशशाब्द-बोधविषयत्वप्रकारताया आश्रयत्वसंबन्धावच्छिन्नत्वेन रूपेण निवेशः कर्तव्यो यथा— पदार्था-न्तरान्वयं प्रति मुख्यविशेष्यताकशाब्दबोधं प्रति चाश्रयत्वसंबन्धावच्छिन्नबोधविषयतात्वावच्छिन्न-प्रकारतानिरूपितविशेष्यतासंबन्धेन शक्तिज्ञानं कारणमिति । ननु 'लोम पशुपदजन्यबोधविषय-तावच्छेदकं भवतु' इत्याकारकसंकेतविषयकादुक्तज्ञानादपि लोमादिविषयकमुख्यविशेष्यताकः शाब्दबोधो भवतु को दोष इत्याशङ्क्याह—तत्र चेति, तत्र=उक्तसंकेतविषयकोक्तज्ञानस्थले लोमा-वच्छिन्ना या पशुव्यक्तिस्तद्विशेष्यकबोधस्यैव संकेतविषयतया ग्रहेण तादृशसंकेतग्रहेण पशुव्यक्ति-विशेष्यक एव शाब्दबोधो जायते अन्यादृशबोधोत्पत्ते=लोमादिविशेष्यकबोधोत्पत्तेरनुभवविरु-द्धतया लोमादिविशेष्यकबोधोत्पत्तावापत्तिर्न सम्भवतीत्यर्थः । 'लोम पशुपदजन्यबोधविषयताव-च्छेदकं भवतु' इत्याकारकसंकेत लोम्ना बोधविषयतावच्छेदकत्वेन विषयतया तादृशसंकेतग्रहेण पशुव्यक्तिविशेष्यकलोमप्रकारक एव बोधो युक्तः अर्थाद् यस्मिन् बोधे लोम बोधविषयतावच्छेदक-त्वेन भासेत तादृश एव बोधो युक्तस्तादृशबोधश्च पशुव्यक्तिविशेष्यक एव सम्भवति न तु लोमवि-शेष्यक इति सारः ।

एवं चेति— एवं च=आश्रयत्वसंबन्धावच्छिन्नबोधविषयताया पदार्थान्तरान्वयप्रयोजकत्वे च सिद्धे 'नीलादिपदार्थः पदार्थेन घटादिनाऽन्वेति न तु पदार्थैकदेशेन घटत्वादिना' इत्यत्र बोध-विषयताश्रयत्वेनैव रूपेण संकेतविषयत्वं पदार्थत्वम्, तदेकदेशत्वम्=पदार्थैकदेशत्वं च बोधविषय-

अथ घटत्वाद्युपलक्षिते द्रव्यपदशक्त्यवगाहिप्रमातो घटत्वादिप्रकारकस्य घटादिपदशक्तिप्रमातः कालिकादिसंवन्धेन घटत्वादिप्रकारकस्य च शाब्दबोधस्य वारणाय तत्सम्वन्धेन तद्धर्मप्रकारकवोधं प्रति तत्संवन्धेन तद्धर्मविशिष्टांशे तत्पदवाच्यत्वावगाहि ज्ञानं कारणं वाच्यं विशिष्टांशे तत्पदवाच्यत्वावगाहित्वं च विशेषणीभूततद्धर्मतत्संवन्धतद्धर्म्यंशे तदवगाहित्वरूपं वाच्यं न तु तेन संवन्धेन तद्धर्मं धर्मितावच्छेदकीकृत्य तदवगाहित्वम्—घटत्वादिकं धर्मितावच्छे-

---

तावच्छेदकत्वेन रूपेण तथात्वरूपम्=संकेतविषयत्वरूपं विज्ञेयं तदेव=बोधविषयतावच्छेदकत्वमेव शक्यतावच्छेदकत्वं यथा घटत्वादौ, घटघटत्वसमवायेषु त्रिषु घटपदशक्तिस्वीकाराद् घटत्वादेः पदार्थैकदेशत्वमेव पदार्थत्वं च घटादेरेवेत्यर्थः । तथा चाश्रयत्वसंवन्धावच्छिन्नबोधविषयतावच्छिन्नप्रकारतानिरूपितभगवदिच्छीयविशेष्यताश्रयत्वं पदार्थत्वम्, अवच्छेदकत्वसंवन्धावच्छिन्नबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितभगवदिच्छीयविशेष्यताश्रयत्वं पदार्थैकदेशत्वमिति सिद्धम् ।

संप्रति यद्रूपेण शक्तिज्ञानस्य शाब्दबोधहेतुत्वमस्ति तद्रूपनिरूपणमारभते—अथेत्यादिना । ननु घटत्वोपलक्षिते घटे नाम घटत्वोपलक्षितघटविषयकं यद् द्रव्यपदशक्तिज्ञानं तदपि यथार्थत्वात् प्रमैव तादृशद्रव्यपदशक्तिज्ञानाद् द्रव्यत्वप्रकारक एव बोध इष्टः—द्रव्यपदसंकेते द्रव्यत्वस्यैव प्रकारतया मानाद् न तु घटत्वप्रकारकोपि बोध इति घटत्वोपलक्षितविषयकद्रव्यपदशक्तिज्ञानाद् घटत्वप्रकारकबोधोत्पत्तेर्वारणाय तथा घटपदशक्तिज्ञानादपि समवायसंवन्धेनैव घटत्वप्रकारकबोधो नाम समवायसंवन्धावच्छिन्नघटत्वनिष्ठप्रकारताक एव बोध इष्टः— घटपदसंकेते प्रकारतावच्छेदकसंवन्धत्वेन समवायस्यैव प्रवेशाद् न तु कालिकादिसंवन्धेनापि घटत्वप्रकारकबोध इष्ट इति घटपदशक्तिज्ञानादपि कालिकादिसंवन्धावच्छिन्नघटत्वनिष्ठप्रकारताकबोधोत्पत्तेर्वारणाय तत्सम्वन्धेन=समवायसंवन्धेन तद्धर्मप्रकारबोधम्=घटत्वादिधर्मप्रकारकबोधं प्रति तत्संवन्धेन=समवायसंवन्धेन तद्धर्मविशिष्टांशे=घटत्वादिधर्मविशिष्टा या घटादिव्यक्तिस्तद्विषयकं यत् तत्पदवाच्यत्वावगाहि='समवायेन घटत्वविशिष्टो घटो घटपदवाच्यः' इत्याकारकं शक्तिज्ञानं तस्यैव कारणत्वं वक्तव्यं तथा च द्रव्यपदसंकेते द्रव्यत्वस्यैवावच्छेदकत्वेन मानाद् द्रव्यपदशक्तिज्ञानाद् घटत्वप्रकारकबोधस्यापत्तिर्नास्ति तथा घटपदसंकेते प्रकारतावच्छेदकसंवन्धत्वेन समवायस्यैव मानाद् घटपदशक्तिज्ञानात् कालिकादिसंवन्धेनापि घटत्वप्रकारकबोधस्यापत्तिर्नास्तीत्यर्थः । तत्संवन्धेन तद्धर्मविशिष्टांशे तत्पदवाच्यत्वावगाहित्वं परिष्करोति—विशिष्टांश इति, विशेषणेति-विशेषणीभूतो यो घटत्वादिरूपो धर्मस्तादृशधर्मस्य च व्यक्तौ यः समवायरूपः संवन्धस्तयोर्धर्मिभूता च या घटादिव्यक्तिस्तेषु त्रिष्वेव तदवगाहित्वरूपम्=घटादिपदवाच्यत्वावगाहित्वरूपं विशिष्टांशे तत्पदवाच्यत्वावगाहित्वं वक्तव्यं न तु तेन समवायसंवन्धेन तद्धर्मम्=घटत्वादिकं धर्मितावच्छेदकीकृत्य=धर्मितावच्छेदकमात्रं कृत्वा तदवगाहित्वम्=घटादिपदवाच्यत्वावगाहित्वरूपम्—अर्थाद् घटत्वं समवायसंवन्धेन धर्मितावच्छेदकं मत्वा समवाये

दकीकृत्य द्रव्यादिपदशक्तिज्ञानस्यापि कालिकादिसंबन्धेन घटत्वादिकं धर्मितावच्छेदकीकृत्य घटादौ घटादिपदशक्तिग्रहस्यापि च प्रमात्वेनोक्तातिप्रसङ्गाऽवारणात् ।

एवमपि घटत्वांशे निर्धर्मितावच्छेदककात् प्रमेयत्वादिधर्मितावच्छेदककाच्च

घटत्वविशिष्टघटव्यक्तिमात्रविषयकघटपदशक्तिज्ञानस्य समवायसम्बन्धेन घटत्वप्रकारकबोधं प्रति कारणत्वं न वक्तव्यमन्यथा—घटत्वं धर्मितावच्छेदकीकृत्य घटविषयकं यद् द्रव्यपदशक्तिज्ञानं तदपि यथार्थत्वात् प्रमैव—घटस्य द्रव्यत्वादिति घटत्वोपलक्षितविषयकद्रव्यपदशक्तिज्ञानादपि घटत्वप्रकारकबोध आपद्येत न चैतदिष्टम्—द्रव्यपदशक्तिज्ञानाद् द्रव्यत्वप्रकारकबोधस्यैवेष्टत्वात्, तथा कालिकसम्बन्धेनापि घटत्वं घटे वर्तत एवेति कालिकसम्बन्धेन घटत्वं धर्मितावच्छेदकं मत्वा घटादौ= घटविषयकं यद् घटपदशक्तिज्ञानं तदपि यथार्थत्वात् प्रमैवेति घटपदशक्तिज्ञानात् कालिकसम्बन्धेनापि घटत्वप्रकारकबोध आपद्येत न चैतदिष्टम्—घटपदशक्तिज्ञानात् समवायसम्बन्धेनैव घटत्वप्रकारकबोधस्येष्टत्वात्, यदा तु विशेषणीभूततद्धर्मतत्सम्बन्धतद्धर्मिषु त्रिष्वेव तत्पदवाच्यत्वावगाहिज्ञानस्य तत्सम्बन्धेन तद्धर्मप्रकारकबोधं प्रति कारणत्वमुच्यते तदा तु द्रव्यपदसंकेते द्रव्यत्वस्यैवावच्छेदकत्वेन भानाद् घटत्वस्य चाऽभानाद् द्रव्यपदशक्तिज्ञानाद् घटत्वप्रकारकबोधस्यापत्तिर्नास्ति तथा घटादिपदशक्तिज्ञानं सम्बन्धांशे समवायविषयकमेव भवतीति घटपदशक्तिज्ञानात् समवायातिरिक्तकालिकादिसम्बन्धेनापि घटत्वप्रकारकबोधस्यापत्तिर्नास्तीति । उक्तातिप्रसङ्ग=द्रव्यपदशक्तिज्ञानाद् घटत्वप्रकारकबोधातिप्रसङ्गो घटपदशक्तिज्ञानात् कालिकादिसम्बन्धेन घटत्वप्रकारकबोधातिप्रसङ्गश्च ।

तत्सम्बन्धेन तद्धर्मप्रकारकबोधं प्रति विशेषणीभूततद्धर्मतत्सम्बन्धतद्धर्मिषु त्रिष्वेव तत्पदवाच्यत्वावगाहिशक्तिज्ञानस्य कारणत्वस्वीकारेणोक्तातिप्रसङ्गयोर्वारणे कृतेऽपि दोषान्तरं किं चेष्टबोधस्यानुपपत्तिमुद्घाटयति—एवमपीत्यादिना । तथा हि घटघटत्वसमवायेषु त्रिष्वपि शक्तिस्वीकारपक्षे—आश्रयत्वसम्बन्धावच्छिन्नबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यता घटे अवच्छेदकत्वसम्बन्धावच्छिन्नबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यता घटत्वे स्वनिष्ठावच्छेद्यतानिरूपितावच्छेदकतावच्छेदकत्वसम्बन्धावच्छिन्नबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यता च समवाये प्राप्ता तत्र घटे तु विशेष्यता युक्तैव—विशेष्यतायाः सावच्छिन्नत्वनियमाद् घटनिष्ठविशेष्यतायाश्च घटत्वावच्छिन्नत्वात्, घटत्वे या विशेष्यता तथापि घटत्वं धर्मेण सावच्छिन्नैव भवितव्यमिति घटत्वस्य घटत्वत्वरूपेणोपस्थित्यभावदशायां शाब्दबोधानुपपत्तिः, एतद्दोषपरिनिहीर्षया यदुक्तप्रकारेण घटत्वे विशेष्यता त्यक्त्वा प्रकारता स्वीक्रियते तदा जात्यखण्डोपाधिनिष्ठप्रकारताया निरवच्छिन्नत्वस्वीकारेण घटत्वस्य च जातिरूपत्वाद् घटत्वत्वेन रूपेणोपस्थित्यपेक्षाभावाद् घटत्वत्वेन रूपेणानुपस्थितिदशायां शाब्दबोधानुपपत्तिवारणे

घटादिपदनिरूपितवाच्यताग्रहात् तत्प्रकारकबोधवारणाय स्वरूपतो घटत्वादिप्रकारकबोधे घटत्वत्वाद्यवच्छिन्नधर्मिकवाच्यत्वग्रहापेक्षोपेया तथा च घटत्वत्वाद्यनुपस्थितिदशायां घटादिपदाच्छाब्दबोधानुपपत्तिः ।

---

कृतेपि समवाये या विशेष्यता तयापि सावच्छिन्नया भवितव्यं तदवच्छेदकसमवायत्वं च नित्यसंबन्धत्वमेवेति नित्यसंबन्धत्वरूपेण समवायानुपस्थितिदशायां शाब्दबोधानुपपत्तिः, समवाये प्रकारतास्वीकारपक्षेपि जात्यखण्डोपाधिनिष्ठैव प्रकारता निरवच्छिन्ना भवति समवायस्तु न जातिर्न वाऽखण्डोपाधिः— सम्बन्धविशेषरूपत्वादिति समवायनिष्ठया प्रकारतयापि नित्यसंबन्धत्वरूपसमवायत्वेन सावच्छिन्नयैव भवितव्यमिति समवायस्य नित्यसंबन्धत्वरूपेणानुपस्थितिदशायां शाब्दबोधानुपपत्तिस्तदवस्थैव, शक्तिज्ञानोपस्थितिशाब्दबोधानां च समानरूपतानियम इति केन रूपेण शक्तिज्ञानं कारणमिति पूर्वपक्षाभिप्रायः ।

घटत्वांशे=घटत्वविषयकं यन्निर्धर्मितावच्छेदकक नाम यस्मिन् घटादिपदनिरूपितवाच्यताज्ञाने घटत्वे धर्मितावच्छेदकत्वेन कोपि धर्मो न भासेत तादृशशक्तिज्ञानादपि शाब्दबोधो नेष्टः—घटत्वांशे तादृशनिर्धर्मितावच्छेदकशक्तिज्ञानाद् घटत्वांशे निर्धर्मितावच्छेदकक एव शाब्दबोधः स्याद् निर्धर्मितावच्छेदकशाब्दबोधस्य च स्वविरोधिज्ञानप्रतिबन्धकत्वाभावेनोपयोगाभावात् तथा यस्मिन् शक्तिज्ञाने घटत्वांशे प्रमेयत्वादिकं धर्मितावच्छेदकत्वेन भासेत तादृशादपि घटादिपदनिरूपितवाच्यताग्रहात् शाब्दबोधो नेष्टः—तादृशशाब्दबोधे घटत्वस्य प्रमेयत्वेन भानं स्याद् घटत्वस्य प्रमेयत्वेन च भानासमत एवेति घटत्वांशे निर्धर्मितावच्छेदककशक्तिज्ञानाद् घटत्वांशे निर्धर्मितावच्छेदककबोधवारणाय घटत्वांशे प्रमेयत्वादिधर्मितावच्छेदककशक्तिज्ञानात् प्रमेयत्वादिप्रकारकबोधवारणाय च स्वरूपतो घटत्वादिप्रकारकबोधे नाम यस्मिन् शाब्दबोधे घटत्वं घटत्वत्वादिरूपेण न भासते किं तु स्वरूपेणैव भासेत तादृशबोधार्थमपि घटत्वत्वाद्यवच्छिन्नधर्मिकवाच्यत्वग्रहापेक्षा स्वीकार्या अर्थात् यद्यपि शाब्दबोधः स्वरूपत एव घटत्वप्रकारक इष्टस्तथापि वाच्यत्वग्रहः=घटत्वविषयकं शक्तिज्ञानं तु घटत्वत्वाद्यवच्छिन्नधर्मिकमेव स्वीकार्यं तथा च शक्तिज्ञानशाब्दबोधयोः समानप्रकारकत्वनियमाद् अनवच्छिन्नघटत्वविषयकोपि शाब्दबोधो न भविष्यति प्रमेयत्वादिप्रकारकघटत्वविषयकोपि शाब्दबोधो न भविष्यति शक्तिज्ञानेन घटत्वत्वावच्छिन्नस्यैव घटत्वस्याऽऽकलनात् तथा च=घटत्वांशे घटत्वत्वावच्छिन्नधर्मिकशक्तिज्ञाने स्वीकृते च शाब्दबोधार्थं घटत्वस्य घटत्वत्वेनैव रूपेणोपस्थितेरपेक्षा प्राप्तेति घटत्वत्वाद्यनुपस्थितिदशायां घटादिपदाच्छाब्दबोधानुपपत्तिरित्यर्थः ।

नन्वर्थविशेष्यकशक्तिज्ञानस्य शाब्दबोधहेतुत्वे हि घटत्वविषयकशक्तिज्ञाने घटत्वस्य विशेष्यतया भानाद् विशेष्यतायाश्च सावच्छिन्नत्वनियमाद् घटत्वत्वाद्यनुपस्थितिदशायां शाब्दबोधानुपपत्तिरस्तीति नार्थविशेष्यकशक्तिज्ञानस्य शाब्दबोधहेतुत्वं वक्ष्यामः किं तु पदविशेष्यकशक्तिज्ञानस्य

दकीकृत्य द्रव्यादिपदशक्तिज्ञानस्यापि कालिकादिसंबन्धेन घटत्वादिकं धर्मितावच्छेदकीकृत्य घटादौ घटादिपदशक्तिग्रहस्यापि च प्रमात्वेनोक्तातिप्रसङ्गाऽवारणात् ।

एवमपि घटत्वांशे निर्धर्मितावच्छेदकत्वात् प्रमेयत्वादिधर्मितावच्छेदकत्वाच्च

घटत्वविशिष्टघटत्वविशिष्टघटत्वविषयकघटपदशक्तिज्ञानस्य समवायसम्बन्धेन घटत्वप्रकारकबोधं प्रति कारणत्वे न चान्यथा—घटत्वं धर्मितावच्छेदकीकृत्य घटविषयकं यद् द्रव्यपदशक्तिज्ञानं तदपि यथार्थत्वात् प्रमैव—घटस्य द्रव्यत्वादिति घटत्वोपलक्षितविषयकद्रव्यपदशक्तिज्ञानादपि घटत्वप्रकारकबोध आपद्येत न चैतदिष्टम्—द्रव्यपदशक्तिज्ञानाद् द्रव्यत्वप्रकारकबोधस्यैवेष्टत्वात्, तथा कालिकसम्बन्धेनापि घटत्व घटे वर्तत एवेति कालिकसम्बन्धेन घटत्व धर्मितावच्छेदक मत्वा घटादौ= घटविषयक यद् घटपदशक्तिज्ञान तदपि यथार्थत्वात् प्रमैवेति घटपदशक्तिज्ञानात् कालिकसम्बन्धेनापि घटत्वप्रकारकबोध आपद्येत न चैतदिष्टम्—घटपदशक्तिज्ञानात् समवायसम्बन्धेनैव घटत्वप्रकारकबोधस्येष्टत्वात्, यदा तु विशेषणीभूततद्धर्मतत्सम्बन्धतद्धर्मिषु त्रिष्वेव तत्पदवाच्यत्वावगाहिज्ञानस्य तत्सम्बन्धेन तद्धर्मप्रकारकबोधं प्रति कारणत्वमुच्यते तदा तु द्रव्यपदसङ्केते द्रव्यत्वस्यैवावच्छेदकत्वेन भानाद् घटत्वस्य चाऽभानाद् द्रव्यपदशक्तिज्ञानाद् घटत्वप्रकारकबोधस्यापत्तिर्नास्ति तथा घटादिपदशक्तिज्ञान सम्बन्धांशे समवायविषयकमेव भवतीति घटपदशक्तिज्ञानात् समवायातिरिक्तकालिकादिसम्बन्धेनापि घटत्वप्रकारकबोधस्यापत्तिर्नास्तीति । उक्तातिप्रसङ्ग =द्रव्यपदशक्तिज्ञानाद् घटत्वप्रकारकबोधातिप्रसङ्गो घटपदशक्तिज्ञानात् कालिकादिसम्बन्धेन घटत्वप्रकारकबोधातिप्रसङ्गश्च ।

तत्सम्बन्धेन तद्धर्मप्रकारकबोधं प्रति विशेषणीभूततद्धर्मतत्सम्बन्धतद्धर्मिषु त्रिष्वेव तत्पदवाच्यत्वावगाहिशक्तिज्ञानस्य कारणत्वस्वीकारेणोक्तातिप्रसङ्गयोर्वारणे कृतेपि दोषान्तरं किं चेष्टबोधस्यानुपपत्तिमुद्घाटयति—एवमपीत्यादिना । तथा हि घटघटत्वसमवायेषु त्रिष्वपि शक्तिस्वीकारपक्षे—आश्रयत्वसम्बन्धावच्छिन्नबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यता घटे अवच्छेदकत्वसम्बन्धावच्छिन्नबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यता घटत्वे स्वनिष्ठावच्छेद्यतानिरूपितावच्छेदकतावच्छेदकत्वसम्बन्धावच्छिन्नबोधविषयतात्वावच्छिन्नप्रकारतानिरूपविशेष्यता च समवाये प्राप्ता तत्र घटे [illegible] विशेष्यता युक्तैव—विशेष्यतायाः सावच्छिन्नत्वनियमाद् घटनिष्ठविशेष्यतायाश्च घटत्वावच्छिन्नत्वात्, घटत्वे या विशेष्यता तयापि घटत्व धर्मेण सावच्छिन्नयैव भवितव्यमिति घटत्वस्य घटत्व त्वरूपेणोपस्थितेरपेक्षा [illegible]सा घटत्वस्य घटत्वत्वरूपेणोपस्थित्यभावदशायां शाब्दबोधानुपपत्ति, एतद्दोषपरिजिहीर्षया यथुक्तप्रकारेण घटत्वे विशेष्यतां त्यक्त्वा प्रकारता स्वीक्रियते तदा जात्यखण्डोपाधिनिष्ठप्रकारताया निरवच्छिन्नत्वस्वीकारेण घटत्वस्य च जातिरूपत्वाद् घटत्वत्वेन रूपेणोपस्थित्यपेक्षाभावाद् घटत्वत्वेन रूपेणानुपस्थितिदशायां शाब्दबोधानुपपत्तिवारणे

घटादिपदनिरूपितवाच्यताग्रहात् तत्प्रकारकबोधवारणाय स्वरूपतो घटत्वादिप्रकारकबोधे घटत्वत्वाद्यवच्छिन्नधर्मिकवाच्यत्वग्रहापेक्षोपेया तथा च घटत्वत्वाद्यनुपस्थितिदशायां घटादिपदाच्छाब्दबोधानुपपत्तिः ।

---

कृतेपि समवाये या विशेष्यता तयापि सावच्छिन्नया भवितव्यं तदवच्छेदकसमवायत्वं च नित्यसंबन्धत्वमेवेति नित्यसंबन्धत्वरूपेण समवायानुपस्थितिदशायां शाब्दबोधानुपपत्तिः, समवाये प्रकारतास्वीकारपक्षेपि जात्यखण्डोपाधिनिष्ठैव प्रकारता निरवच्छिन्ना भवति समवायस्तु न जातिर्नवाऽखण्डोपाधिः— संबन्धविशेषरूपत्वादिति समवायनिष्ठया प्रकारतयापि नित्यसंबन्धत्वरूपसमवायत्वेन सावच्छिन्नयैव भवितव्यमिति समवायस्य नित्यसंबन्धत्वरूपेणानुपस्थितिदशायां शाब्दबोधानुपपत्तिस्तदवस्थैव, शक्तिज्ञानोपस्थितिशाब्दबोधानां च समानरूपतानियम इति केन रूपेण शक्तिज्ञानं कारणमिति पूर्वपक्षाभिप्रायः ।

घटत्वांशे=घटत्वविषयकं यन्निर्धर्मितावच्छेदककं नाम यस्मिन् घटादिपदनिरूपितवाच्यताज्ञाने घटत्वे धर्मितावच्छेदकत्वेन कोपि धर्मो न भासेत तादृशशक्तिज्ञानादपि शाब्दबोधो नेष्टः—घटत्वांशे तादृशनिर्धर्मितावच्छेदककशक्तिज्ञानाद् घटत्वांशे निर्धर्मितावच्छेदकक एव शाब्दबोधः स्याद् निर्धर्मितावच्छेदककशाब्दबोधस्य च स्वविरोधिज्ञानप्रतिबन्धकत्वाभावेनोपयोगाभावात् तथा यस्मिन् शक्तिज्ञाने घटत्वांशे प्रमेयत्वादिकं धर्मितावच्छेदकत्वेन भासेत तादृशादपि घटादिपदनिरूपितवाच्यताग्रहात् शाब्दबोधो नेष्टः—तादृशशाब्दबोधे घटत्वस्य प्रमेयत्वेन भानं स्याद् घटत्वस्य प्रमेयत्वेन च भानासंभव एवेति घटत्वांशे निर्धर्मितावच्छेदककशक्तिज्ञानाद् घटत्वांशे निर्धर्मितावच्छेदककबोधवारणाय घटत्वांशे प्रमेयत्वादिधर्मितावच्छेदककशक्तिज्ञानात् प्रमेयत्वादिप्रकारकबोधवारणाय च स्वरूपतो घटत्वादिप्रकारकबोधे नाम यस्मिन् शाब्दबोधे घटत्वं घटत्वत्वादिरूपेण न भासते किं तु स्वरूपेणैव भासेत तादृशबोधार्थमपि घटत्वत्वाद्यवच्छिन्नधर्मिकवाच्यत्वग्रहापेक्षा स्वीकार्या अर्थात् यद्यपि शाब्दबोधः स्वरूपत एव घटत्वप्रकारक इष्टस्तथापि वाच्यत्वग्रहः=घटत्वविषयकं शक्तिज्ञानं तु घटत्वत्वावच्छिन्नधर्मिकमेव स्वीकार्यं तथा च शक्तिज्ञानशाब्दबोधयोः समानप्रकारकत्वनियमाद् अनवच्छिन्नघटत्वविषयकोपि शाब्दबोधो न भविष्यति प्रमेयत्वादिप्रकारकघटत्वविषयकोपि शाब्दबोधो न भविष्यति शक्तिज्ञानेन घटत्वत्वावच्छिन्नस्यैव घटत्वस्याऽऽकलनात् तथा च=घटत्वांशे घटत्वत्वावच्छिन्नधर्मिकशक्तिज्ञाने स्वीकृते च शाब्दबोधार्थं घटत्वस्य घटत्वत्वेनैव रूपेणोपस्थितेरपेक्षा प्राप्तेति घटत्वत्वाद्यनुपस्थितिदशायां घटादिपदाच्छाब्दबोधानुपपत्तिरित्यर्थः ।

नन्वर्थविशेष्यकशक्तिज्ञानस्य शाब्दबोधहेतुत्वे हि घटत्वविषयकशक्तिज्ञाने घटत्वस्य विशेष्यतया भानाद् विशेष्यतायाश्च सावच्छिन्नत्वनियमाद् घटत्वत्वाद्यनुपस्थितिदशायां शाब्दबोधानुपपत्तिस्तथापि नार्थविशेष्यकशक्तिज्ञानस्य शाब्दबोधहेतुत्वं वक्ष्यामः किं तु पदविशेष्यकशक्तिज्ञानस्य

न च घटपदांशे घटादिवाचकताज्ञानमेव शाब्दबोधहेतुः, एवं च स्वरूपतो घटत्वादिप्रकारकबोधे वाचकत्वांशे स्वरूपतो घटत्वादिप्रकारकज्ञानस्यैव हेतुत्वमिति घटादिपदजन्यबोधे घटत्वत्वाद्युपस्थितेर्नापेक्षेतिवाच्यम्, एवमपि घटादिपदांशे समवायवाचकताप्रकारकज्ञानस्य शाब्दबोधे घटत्वादिसंबन्धतया स्वरूपतः समवायभानप्रयोजकताया वाच्यतया समवायवाचकताज्ञाने च वाचकतांशे समवायस्य स्वरूपतः प्रकारत्वासंभवेन नित्यसंबन्धत्वरूपसमवायत्वेनैव समवायावगाहिताया उक्तसमवायभानप्रयोजकत्वस्योपगन्तव्यतया तदनुपस्थितिद-

---

पदविशेष्यकशक्तिज्ञाने च पदस्यैव विशेष्यतया भानाद् घटत्वस्य च प्रकारतयैव भानात् प्रकारतायाश्चाऽनवच्छिन्नाया अपि समवादऽनवच्छिन्नप्रकारताकबोधस्य स्वविरोधिज्ञानप्रतिबन्धकत्वस्यापि स्वीकाराच्च न घटत्वस्य घटत्वत्वेन रूपेणोपस्थितेरपेक्षेति न घटत्वत्वाद्यनुपस्थितिदशायां शाब्दबोधानुपपत्तिरित्यभिप्रायेणाशङ्कयाह– न चेति। घटपदांशे घटादिवाचकताज्ञानम्=पदविशेष्यकशक्तिज्ञानम्– 'घटपदं घटत्वावच्छिन्नवाचकम्' इति। एवं च=पदविशेष्यकशक्तिज्ञानस्य शाब्दबोधहेतुत्वे च। स्वरूपतो घटत्वादिप्रकारबोधे=स्वरूपत एव घटत्वादिः प्रकारो यस्मिन् तादृशशाब्दबोधं प्रति। वाचकत्वांशे स्वरूपतो घटत्वादिप्रकारकज्ञानस्यैव=वाचकत्वविषयकं यत् स्वरूपतो घटत्वादिप्रकारकं शक्तिज्ञानं तस्यैव शाब्दबोधहेतुत्वमिति घटादिपदजन्यबोधे=घटादिपदजन्यबोधं प्रति घटत्वत्वाद्युपस्थितेर्नापेक्षेत्यन्वयः। 'स्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यत्वसंबन्धेन घटत्वावच्छिन्ना या घटपदजन्यबोधविषयता तादृशबोधविषयतानिरूपको यो बोधस्तादृशबोधजनकत्वनिष्ठप्रकारतानिरूपितभगवदिच्छीयविशेष्यतावद् घटपदम्' 'तादृशविशेष्यतासंबन्धेन घटविशिष्टं घटपदम्' इत्येव वा पदविशेष्यकशक्तिज्ञानस्वरूपं वक्तव्यम्। पदविशेष्यकशक्तिज्ञानपक्षेपि दोषमुद्घाटयति– एवमपीति, एवमपि=पदविशेष्यकशक्तिज्ञानस्य शाब्दबोधकारणत्वं स्वीकृत्योक्तरीत्या घटत्वत्वाद्यनुपस्थितिदशायामपि शाब्दबोधोपपादने कृतेपि घटघटत्वसमवायेषु त्रिष्वेव घटपदशक्तिरित्येवं घटपदजन्यशाब्दबोधे च समवायोपि भासत एवेति स्वीकारात् शाब्दबोधे घटत्वादिसंबन्धतया=घटानुयोगिकघटत्वप्रतियोगिकसंबन्धरूपेण यत् स्वरूपतः समवायो भासते तादृशसमवायभानप्रयोजकता घटादिपदांशे=घटादिपदविषयकं घटादिपदविशेष्यकं यत् समवायवाचकताप्रकारकं शक्तिज्ञानं तस्यैव वक्तव्या. समवायवाचकताज्ञाने=उक्तशाब्दबोधकारणीभूतसमवायवाचकताप्रकारकशक्तिज्ञाने च वाचकतांशे समवायस्य जात्यखण्डोपाध्यतिरिक्तत्वात् स्वरूपतः प्रकारत्वासंभवेन नित्यसंबन्धत्वरूपसमवायत्वेनैव रूपेण शक्तिज्ञाने या समवायावगाहिता तस्या एव उक्तसमवायभानप्रयोजकत्वमुपगन्तव्यमिति समवायनिष्ठप्रकारतायाः नित्यसंबन्धत्वरूपसमवायत्वावच्छिन्नत्वात् समवायस्य समवायत्वेनैव रूपेण शक्तिज्ञानविषयत्वात् तदनुपस्थितिदशायाम्=समवायत्वानुपस्थितिदशायां घटादिपदा-

शायां घटादिपदाच्छाब्दबोधानुपपत्तिः, तथा च केन रूपेण शक्तिधियो हेतुता?।

अत्रोच्यते—तत्सम्बन्धेन तद्धर्मप्रकारकशाब्दबोधे तत्संबन्धावच्छिन्नतद्धर्मनिष्ठावच्छेदकताकस्वजन्यबोधविषयत्वप्रकारतानिरूपितेच्छाविशेष्यतात्वावच्छिन्नसंसर्गकतत्सम्बन्धावच्छिन्नतद्धर्मनिष्ठधर्मितावच्छेदकताकपदप्रकारकज्ञानत्वेन विषयताविशेषसंसर्गकाऽर्थविशेष्यकशक्तिज्ञानस्य हेतुता, ईदृशशक्तिग्रहे च संब-

न्धाच्छाब्दबोधानुपपत्तिः, तथा च तत्र=शाब्दबोधे=शाब्दबोधं प्रति शक्तिज्ञानस्य केन रूपेण हेतुतेत्यन्वयः । समवायस्य नित्यसम्बन्धत्वं तार्किक एव जानातीति तार्किकातिरिक्तस्य नित्यसम्बन्धत्वरूपेण समवायोपस्थितिरेव न सम्भवतीति भावः । समवायनिष्ठया विशेष्यतयापि सावच्छिन्नयैव भवितव्यं पदविशेष्यकशक्तिज्ञाने तु समवायः प्रकारतयैव भासते प्रकारता च जात्यखण्डोपाधिनिष्ठैवाऽनवच्छिन्ना भवति समवायश्च न जातिर्नाऽप्यखण्डोपाधिरिति समवायनिष्ठप्रकारतयापि सावच्छिन्नयैव भवितव्यमिति समवायस्य स्वरूपतः प्रकारत्वासम्भवः प्रदर्शितः । घटपदे समवायवाचकतास्त्येवेति घटपदविशेष्यकं समवायभानप्रयोजकं शक्तिज्ञानं समवायवाचकताप्रकारकं विज्ञेयम्, समवायस्य प्रकारत्वं च वाचकताया विज्ञेयम् ।

अर्थविशेष्यकशक्तिज्ञानस्य शाब्दबोधहेतुतामाश्रित्य समाधत्ते— अत्रोच्यत इत्यादिना । तत्सम्बन्धेन=यथा समवायसम्बन्धेन तद्धर्मप्रकारकशाब्दबोधे=घटत्वादिधर्मप्रकारकघटादिविशेष्यकशाब्दबोधं प्रति तत्सम्बन्धावच्छिन्ना=समवायसम्बन्धावच्छिन्ना या तद्धर्मनिष्ठा=घटत्वादिधर्मनिष्ठाऽवच्छेदकता (बोधविषयतावच्छेदकता) तादृशावच्छेदकताको यः स्वजन्यः=घटादिपदजन्यो बोधस्तादृशबोधस्य घटादौ यद्विषयत्वं तादृशबोधविषयत्वनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या विशेष्यतात्वावच्छिन्ना भगवदिच्छीयविशेष्यता तादृशविशेष्यतासंसर्गकं तथा तत्सम्बन्धावच्छिन्ना=समवायसम्बन्धावच्छिन्ना या तद्धर्मनिष्ठा=घटत्वादिधर्मनिष्ठा धर्मितावच्छेदकता (विशेष्यतावच्छेदकता) तादृशधर्मितावच्छेदकताकं यत् पदप्रकारकम् 'उक्तविशेष्यतासम्बन्धेन घटपदविशिष्टो घटः' इत्याकारकं ज्ञानम्=अर्थविशेष्यकशक्तिज्ञानं तादृशज्ञानत्वेन रूपेण विषयताविशेषसंसर्गकस्य=भगवदिच्छीयविशेष्यतासंसर्गकस्यार्थविशेष्यकशक्तिज्ञानस्य हेतुता स्वीक्रियते इत्यन्वयः, उक्तपदप्रकारकस्य विषयताविशेषसंसर्गकार्थविशेष्यकशक्तिज्ञानस्य हेतुतेत्यर्थः । 'तत्सम्बन्धावच्छिन्नतद्धर्मनिष्ठावच्छेदकताकतत्पदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितभगवदिच्छीयविशेष्यतासम्बन्धेन घटपदविशिष्टो घटः' इत्येव शक्तिज्ञानस्वरूपं वक्तव्यम्, घटे उक्तविशेष्यताऽस्तीति तादृशविशेष्यतासम्बन्धेन घटो घटपदविशिष्टो विज्ञेयः । विषयताविशेषसंसर्गकार्थविशेष्यकशक्तिज्ञानस्य हेतुता स्वीकृता तादृशशक्तिज्ञानस्य स्वरूपं च तत्सम्बन्धावच्छिन्नेत्यादिना प्रदर्शितम् । अर्थविशेष्यकशक्तिज्ञाने पदमर्थे विषयताविशेषेण=भगवदिच्छीयविशेष्यतासम्बन्धेन प्रकारो भवतीति तादृशशक्तिज्ञानं विषयताविशेषसंसर्गकं विज्ञेयम् । एतदभिप्रायेणैव स्वरूपवाक्ये विशेष्यतात्वावच्छिन्नसंसर्गकेत्युक्तम् । समवायस्य सम्बन्धत्वेनोपस्थितेरदेशमाशयमाह—ईदृशेति, ईदृशशक्तिग्रहे=

न्घघटकतयाऽवच्छिन्नत्वांशे समवायभानात् स्वरूपतोऽपि तस्य तथाभानसंभवेन समवायत्वोपस्थितेर्नाऽपेक्षेति सामञ्जस्यम् ।

'द्रव्यपदाद् द्रव्यं बोद्धव्यम्' इत्याकारताप्रयोजकद्रव्यपदजन्यबोधविषयत्वीयभगवदिच्छाप्रकारता न घटत्वावच्छिन्नविषयत्वनिष्ठा अपि तु द्रव्यत्वावच्छिन्नविषयत्वनिष्ठेवेति । द्रव्यपदजन्यबोधीयघटत्वावच्छिन्नविषयत्वनिष्ठप्रकार-

---

उक्तरूपार्थविशेष्यकशक्तिज्ञाने समवायघटकतांशे उक्त अंशे=घटत्वादिधर्मनिष्ठधर्मितावच्छेदकतानिष्ठ यत्समवायसम्बन्धावच्छिन्नत्व तादृशावच्छिन्नत्वांशे सम्बन्धघटकतयैव=सम्बन्धरूपेणैव=संसर्गतयैव मानात् तथा च तस्य=समवायस्य स्वरूपतोऽपि=समवायरूपेणापि तथा=संसर्गतया भानसम्भवेन समवायत्वेन रूपेणोपस्थितेर्नाऽपेक्षेति समवायस्य समवायत्वेन रूपेणानुपस्थितिदशायामपि न शाब्दबोधानुपपत्तिरित्यर्थः ।जात्यखण्डोपाध्यतिरिक्तपदार्थनिष्ठा प्रकारता सावच्छिन्नैव भवतीति नियमेऽपि संसर्गतावच्छिन्ना भवतीति नियमाभावात् समवाये चात्र संसर्गतांश एव स्वीकारान्न समवायत्वोपस्थितेरपेक्षेति भावः ।

द्रव्यपदात् प्रदर्शिता घटत्वप्रकारकबोधापत्तिं पराकरोति- द्रव्यपदादिति, शक्तिज्ञाननिष्ठा या 'द्रव्यपदाद् द्रव्यं बोद्धव्यम्' इत्याकारता तादृशाकारताप्रयोजको यो द्रव्यपदजन्यो बोधस्तादृशबोधस्य या विषयता तादृशविषयतानिष्ठा या भगवदिच्छीयविशेष्यतानिरूपिता प्रकारता सा प्रकारता घटत्वावच्छिन्न यद् घटनिष्ठ बोधविषयत्वं तन्निष्ठा न भवति किं तु द्रव्यत्वावच्छिन्न यद् द्रव्यनिष्ठ बोधविषयत्वं तन्निष्ठैव भवति—द्रव्यपदजन्यबोधविषयतायां द्रव्यत्वावच्छिन्नत्वनियमाद् घटत्वानवच्छिन्नत्वाच्च द्रव्यपदशक्तिज्ञाने द्रव्यस्य द्रव्यत्वेनैव भानाद् घटत्वेन चाऽभानादिति द्रव्यपदात् 'द्रव्यपदाद् द्रव्यं बोद्धव्यम्' इत्याकारकशक्तिज्ञानेन द्रव्यत्वप्रकारक एव शाब्दबोधः सम्भवति न घटत्वप्रकारक इत्यर्थः । यद्युक्तप्रकारता घटत्वावच्छिन्नविषयत्वनिष्ठा स्यात्तदा द्रव्यपदाद् घटत्वप्रकारकबोधः स्यादपि न चैवमस्ति, तत्पदजन्यबोधविषयत्वनिष्ठा प्रकारता यद्धर्मावच्छिन्नविषयत्वनिष्ठा भवति तद्धर्मप्रकारक एव बोधो भवतीति नियमस्तथा भगवदिच्छीयविशेष्यतानिरूपितप्रकारता यत्पदजन्यबोधविषयत्वनिष्ठा भवति तद्धर्मावच्छिन्नविषयत्वनिष्ठैव भवति किं वा तत्पदजन्यबोधविषयत्वनिष्ठा प्रकारता यत्पदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपकभगवदिच्छीयविशेष्यतानिरूपिता भवति तद्धर्मावच्छिन्नविषयत्वनिष्ठैव भवतीति नियम इति द्रव्यपदजन्यबोधविषयत्वनिष्ठा प्रकारता द्रव्यपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपकभगवदिच्छीयविशेष्यतानिरूपिता भवति द्रव्यत्वावच्छिन्नविषयत्वनिष्ठा च भवतीति द्रव्यपदाद् द्रव्यत्वप्रकारक एव बोधो जायते न घटत्वप्रकारक इत्यभिप्रायः । घटविशेष्यक द्रव्यपदप्रकारकं शक्तिज्ञानं तु न प्रमात्मकं भवति येन द्रव्यपदादप्यन्यस्य घटत्वप्रकारकबोधः स्यादित्याह—द्रव्यपदेति, द्रव्यपदाद् घटत्वप्रकारकबोधं प्रति 'द्रव्यपदजन्यबोधीयघटत्वावच्छिन्नविषयत्वनिष्ठप्रकारतानिरूपितभगवदि-

तानिरूपितभगवदिच्छीयविशेष्यतात्वावच्छिन्नसंसर्गेण घटत्वावच्छिन्ने द्रव्यपद-प्रकारकं ज्ञानं संसर्गतावच्छेदकघटकघटत्वावच्छिन्नत्वांशे भ्रम एव ।

न च द्रव्यपदजन्यविभक्त्युपस्थापितैकत्वादिप्रकारकद्रव्यत्वावच्छिन्नविशेष्यकबोधीया या एकत्वावच्छिन्नद्रव्यत्वावच्छिन्नविषयता सापि द्रव्यपदजन्यबोधीयद्रव्यत्वावच्छिन्नविषयतात्वेन भगवदिच्छाविषयः एवं च द्रव्यपदजन्यबोधीयैकत्वावच्छिन्नविषयत्वनिष्ठप्रकारतानिरूपितभगवदिच्छाविशेष्यत्वासम्बन्धेनैकत्वादिमतो द्रव्यपदवत्वाद् द्रव्यपदादभ्रान्तस्य पदान्तरानुपस्थितैकत्वप्रकारे-

---

च्छीयविशेष्यतात्वावच्छिन्नसंसर्गेण द्रव्यपदविशिष्टो घट' इत्याकारकशक्तिज्ञानस्य कारणत्वं वक्तव्यम् एतादृशशक्तिज्ञाने संसर्गता भगवदिच्छीयविशेष्यतायां प्राप्ता तादृशसंसर्गतावच्छेदकत्वात् घटत्वावच्छिन्नविषयत्वनिष्ठप्रकारतानिरूपितत्वस्य घटत्वं च तद्घटकमिति संसर्गतावच्छेदकघटकघटत्वेन यद् द्रव्यपदजन्यबोधविषयत्वस्यावच्छिन्नत्वं तद् बाधितमेव—द्रव्यपदजन्यबोधविषयत्वस्य द्रव्यत्वावच्छिन्नत्वनियमेन घटत्वावच्छिन्नत्वासम्भवादिति घटत्वावच्छिन्ने=घटविशेष्यकं ( घटविषयकम् ) द्रव्यपदप्रकारकं शक्तिज्ञानं संसर्गतावच्छेदकघटकघटत्वावच्छिन्नत्वांशे भ्रम एव भ्रमात्मकशक्तिज्ञानस्य च न प्रमात्मकबोधं प्रति कारणतेति न द्रव्यपदाद् घटत्वप्रकारकप्रमात्मकबोधापत्तिरित्यर्थः । द्रव्यपदेति—द्रव्यपदजन्यो यो बोधस्तादृशबोधीय यद् घटत्वावच्छिन्नविषयत्वं तन्निष्ठा या प्रकारता तन्निरूपिता या भगवदिच्छीया विशेष्यता तत्त्वावच्छिन्ना विशेष्यता तत्सम्बन्धेनेत्यन्वयः ।

ननु 'द्रव्यपदाद् द्रव्यं बोद्धव्यम्' इत्याकारकभगवत्सङ्केतस्वीकारे द्रव्यनिष्ठा या द्रव्यपदजन्यबोधविषयता सा यथा द्रव्यत्वावच्छिन्नास्ति तथा 'द्रव्यम्' इत्येकवचनोपस्थितैकत्वस्यापि द्रव्ये एवान्वयादेकत्वावच्छिन्नाप्यस्त्येव तथा चैकत्वावच्छिन्ना द्रव्यत्वावच्छिन्ना च या द्रव्यपदजन्यस्तथा द्रव्यमित्येकवचनविभक्त्युपस्थापितैकत्वप्रकारको द्रव्यत्वावच्छिन्न ( द्रव्य ) विशेष्यको बोधस्तादृशबोधीया विषयता सापि द्रव्यपदजन्यबोधीयाद्रव्यत्वावच्छिन्ना या विषयता तादृशविषयतात्वेन रूपेण भगवदिच्छाविषय एव तथा चैकत्वादिमतः=एकत्वादिविशिष्टस्य घटादिद्रव्यस्य द्रव्यपदजन्यबोधीया यैकत्वावच्छिन्ना द्रव्यनिष्ठा विषयता तादृशविषयतानिष्ठप्रकारतानिरूपिता या द्रव्यनिष्ठा भगवदिच्छीयविशेष्यता तादृशविशेष्यतासम्बन्धेन द्रव्यपदवत्त्वाद् द्रव्यपदादभ्रान्तस्यापि पदान्तरानुपस्थितैकत्वप्रकारेण=पदान्तरेणैकत्वस्यानुपस्थितिदशायामप्येकत्वप्रकारकशाब्दबोध स्यादेव, यथा द्रव्यत्वप्रकारकबोधं प्रति द्रव्यपदजन्यबोधीयविषयताया द्रव्यत्वान्वय एव हेतुस्तथैकत्वप्रकारकबोधं प्रति बोधीयविषयतायामेकत्वान्वयस्यैव हेतुत्वं प्राप्तम् अस्ति चोक्तरीत्या द्रव्यपदजन्यबोधीयविषयतायामेकत्वान्वय, किं च यथा द्रव्यत्वप्रकारकबोधं प्रति द्रव्ये द्रव्यपदजन्यबोधीयद्रव्यत्वावच्छिन्नविषयतानिष्ठप्रकारतानिरूपितभगवदिच्छीयविशेष्यतासम्बन्धेन द्रव्यपदवत्त्वं हेतुस्तथैकत्वप्रकारकबोधं प्रति एकत्ववति द्रव्यपदजन्यबोधीयैकत्वावच्छिन्नविषयतानि-

णापि शाब्दबोधप्रसङ्गो दुर्वार एवेति वाच्यम्, तादृशविशेष्यतात्वेन तस्याःसंबन्धत्वानुपगमात् ।

अथ वा— तत्पदजन्यतद्धर्मप्रकारकशाब्दबोधे तद्धर्मावच्छिन्नत्वावच्छिन्नत्वेन तत्पदजन्यबोधविषयत्वप्रकारतावगाहि तादृशप्रकारतानिरूपितविशेष्यतासंसर्गकं पदप्रकारकं ज्ञानं हेतुः, एवं चैकत्वादिमत्त्वरूपद्रव्यादिपदजन्यबोधजनकशक्तिग्रहेण

---

ष्टप्रकारतानिरूपितभगवदिच्छीयविशेष्यतासम्बन्धेन द्रव्यपदवत्त्वस्य हेतुत्वं प्राप्तम् अस्ति चैकत्वगणि घटादिद्रव्ये उक्तसम्बन्धेन द्रव्यपदवत्त्वमिति द्रव्यपदादश्चत्तस्यापि पदान्तरानुपस्थितैकत्वप्रकारेण शाब्दबोधप्रसङ्गो दुर्वार एवेत्याशङ्कयाह— न चेति। परिहारहेतुमाह— तादृशेति, तादृशविशेष्यतात्वेन= द्रव्यपदजन्यबोधीयैकत्वावच्छिन्नविषयत्वनिष्ठप्रकारतानिरूपितभगवदिच्छीयविशेष्यता येन रूपेण तस्या =भगवदिच्छीयविशेष्यताया. सम्बन्धत्वं न स्वीक्रियते येन द्रव्यपदादश्चत्तस्य पदान्तरानुपस्थितैकत्वप्रकारेण शाब्दबोधापत्तिः स्यात्, यद्युक्तरूपेण भगवदिच्छीयविशेष्यतायाः सम्बन्धत्वं स्यात्तदा द्रव्यपदजन्यबोधीयविषयताया एकत्वावच्छिन्नत्वेन तत्र प्रवेशेनैकत्वस्य पदान्तरानुपस्थितिदशायामप्येकत्वप्रकारकबोधो द्रव्यपदात् स्यादपि न चैवमस्ति, द्रव्यपदजन्यबोधीयविषयतायास्तत्र द्रव्यत्वमात्रावच्छिन्नत्वेन प्रवेशादित्यर्थः ।

प्रकारान्तरेण समाधत्ते— अथ वेति, यथा—घटपदजन्यघटत्वप्रकारकशाब्दबोधं प्रति घटत्वावच्छिन्नत्वावच्छिन्नत्वेन घटपदजन्यबोधविषयतानिष्ठप्रकारताया अवगाहि तथा तादृशप्रकारतानिरूपितविशेष्यतासंसर्गकं घटपद... [illegible]

. . . . . . .

पदप्रकारकमर्थविशेष्यकं यत् घटपद... [illegible] इत्याकारकं शक्तिज्ञानं तदेव हेतुरित्यर्थः । घटे घटत्वमस्ति घटपदजन्यबोधविषयत्वमप्यस्तीति घटपदजन्यबोधविषयत्वे घटत्वावच्छिन्नत्वमप्यस्ति भगवदिच्छीयविशेष्यतानिरूपिता प्रकारताप्यस्तीति सा प्रकारता घटत्वावच्छिन्नत्वावच्छिन्ना जातेति शक्तिज्ञानस्य तद्धर्मावच्छिन्नत्वावच्छिन्नत्वेन रूपेण तत्पदजन्यबोधविषयत्वनिष्ठप्रकारताया अवगाहित्वमुक्तं तथा च शक्तिज्ञानं यद्धर्मावच्छिन्नत्वावच्छिन्नत्वेन रूपेण तत्पदजन्यबोधविषयत्वनिष्ठप्रकारताया अवगाहनं करोति तद्धर्मप्रकारक एव तेन पदेन शाब्दबोधो भवति नान्यधर्मप्रकारेण यथा घटपदेन घटत्वप्रकारक एव बोधो जायते— घटपदशक्तिज्ञानेन घटत्वमात्रावच्छिन्नत्वावच्छिन्नत्वेनैव घटपदजन्यबोधविषयत्वनिष्ठप्रकारताया अवगाहनात्, तथा च द्रव्यपदशक्तिज्ञानेन द्रव्यपदजन्यबोधविषयत्वनिष्ठप्रकारताया द्रव्यत्वमात्रावच्छिन्नत्वावच्छिन्नत्वेनैवावगाहनाद् द्रव्यपदाद् द्रव्यत्वमात्रप्रकारक एव बोधो जायते न तु पदान्तरानुपस्थितैकत्वप्रकारकोपि । एवं च द्रव्यपदाद् घटत्वप्रकारकबोधस्याप्यापत्तिर्नास्तीत्यर्थः । स्वाभिप्रायमुद्घाटयति— एवं चेति, 'द्रव्यपदाद् द्रव्यं बोद्धव्यम्' इत्याकारा-

द्रव्यादिपदजन्यबोधविषयत्वनिष्ठद्रव्यत्वावच्छिन्नत्वेनैव तादृशविषयत्वमवगाहमानाया भगवदिच्छायाः प्रकारतायां द्रव्यत्वमात्रावच्छिन्नत्वेनावच्छिन्नायां बाधितस्यैकत्वावच्छिन्नत्वावच्छिन्नत्वस्यावगाहनात् तस्य भ्रमत्वनिर्वाहेणातिप्रसङ्गानवकाशात् ।

यत्तु पदार्थांशे घटत्वादेः शाब्दबोधप्रकारतायां तदंशे तत्पदशक्यतावच्छेदकत्वमेव प्रयोजकं शक्यतावच्छेदकत्वं च=तत्पदजन्यबोधविषयत्वप्रकारतानिरूपि-

---

भगवदिच्छा द्रव्यपदजन्यबोधविषयत्वनिष्ठं यद् द्रव्यत्वावच्छिन्नत्वं तेनैव रूपेण तादृशविषयत्वम्=द्रव्यपदजन्यबोधविषयत्वमवगाहते—द्रव्यपदजन्यबोधविषयत्वाधिकरणे द्रव्ये द्रव्यत्वधर्मस्य सत्त्वात् तस्यैव च बोधविषयतावच्छेदकत्वेन भगवदिच्छाविषयत्वाद् अत्र च 'द्रव्यपदेन द्रव्यत्वप्रकारक एव घटपदेन च घटत्वप्रकारक एव बोधो जायते नान्यधर्मप्रकारकः' इतिनियमस्यैव नियामकत्वात्, द्रव्यपदजन्यबोधविषयत्वं द्रव्यत्वावच्छिन्नत्वेन रूपेणावगाहमानाया भगवदिच्छाया नाम तादृशभगवदिच्छानिरूपिता अर्थात् तादृशभगवदिच्छीयविशेष्यतानिरूपिता या द्रव्यपदजन्यबोधविषयत्वनिष्ठा प्रकारता तस्यां द्रव्यत्वमात्रावच्छिन्नत्वावच्छिन्नत्वं वर्तते—द्रव्यवृत्तिद्रव्यपदजन्यबोधविषयत्वे द्रव्यत्वावच्छिन्नत्वस्य सत्त्वेन तादृशबोधविषयत्वनिष्ठप्रकारतायां द्रव्यत्वावच्छिन्नत्वावच्छिन्नत्वस्य सत्त्वाद् न त्वेकत्वावच्छिन्नत्वावच्छिन्नत्वमपीति तादृशप्रकारतायां बाधितस्यैकत्वावच्छिन्नत्वावच्छिन्नत्वस्य एकत्वप्रकारकद्रव्यपदजन्यबोधजनकशक्तिग्रहेण नाम पदान्तरेणैकत्वानुपस्थितिदशायामेकत्वप्रकारको द्रव्यपदजन्यो यो बोधस्तादृशबोधजनकेन शक्तिग्रहेणावगाहनाद् बाधितार्थविषयकज्ञानस्य भ्रमत्वनियमेन तस्य=द्रव्यपदजन्यबोधविषयत्वनिष्ठप्रकारतां बाधितेनैकत्वावच्छिन्नत्वावच्छिन्नत्वेन रूपेणावगाहमानस्योक्तशक्तिग्रहस्य भ्रमत्वनिर्वाहेण=भ्रमत्वप्राप्त्या अतिप्रसङ्गः=पदान्तरेणैकत्वानुपस्थितिदशायां द्रव्यपदादेकत्वप्रकारकबोधापत्तिर्नास्ति—उक्तभ्रमात्मकशक्तिज्ञानेन द्रव्यपदात् प्रमात्मकैकत्वप्रकारकबोधासंभवादित्यर्थः ।

पराकर्तुं दीधितिकारमतमनुवदति—यत्त्वित्यादिना, घटादिपदार्थविषयकशाब्दबोधे घटादौ घटत्वादेर्यत् प्रकारतया भानं भवति तादृशघटत्वादिनिष्ठशाब्दबोधप्रकारतायां तदंशे=घटत्वादौ यद् घटादिपदशक्यतावच्छेदकत्वं तदेव प्रयोजकमस्ति शक्यतावच्छेदकत्वं च घटादिपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितभगवदिच्छीयविशेष्यतावच्छेदकत्वरूपं विज्ञेयम्—घटादिपदार्थे तादृशविशेष्यताया घटत्वादेश्च सत्त्वेन घटत्वादौ तादृशविशेष्यतावच्छेदकत्वप्राप्तेः, बोधविषयतया संकेतविषयत्वरूपं यद् विशेषणविधया वाच्यत्वं तद्रूपं शक्यतावच्छेदकत्वं न विज्ञेयम्, प्रवृत्तिनिमित्तस्य घटत्वादेर्वाच्यत्वपक्षे तु बोधविषयतया संकेतविषयत्वरूपं यद् विशेषणविधया वाच्यत्वं तदेव शक्यतावच्छेदकत्वं सम्भवति—घटत्वादेर्घटादौ विशेषणत्वमस्तीति विशेषणविधयैव घटादिपदवाच्यत्वात्, यदा च शक्यतावच्छेदकत्वमुक्तविशेष्यतावच्छेदकत्वरूपं स्वीकृतं तदा प्रवृत्तिनिमित्तस्य घटत्वादेर्घटादिपदवाच्यत्वापत्तेरभावाद् वाच्यत्वस्वीकारो व्यर्थ

तद्विशेष्यतावच्छेदकत्वं न तु बोधविषयतया संकेतविषयत्वरूपं विशेषणविधया वाच्यत्वम्. तथा च तद्धर्मप्रकारकशाब्दबोधे तद्धर्मावच्छिन्नत्वविशिष्टतादृशविषयतासंसर्गकं पदशक्तिज्ञानमेव कारणमास्ताम्. द्रव्यादिपदजन्यबोधविषयत्वप्रकारतानिरूपितद्रव्यत्वावच्छिन्नभगवत्संकेतीयविशेष्यतात्वेनैव सम्बन्धता न तु तादृशप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यतात्वेन–तादृशप्रकारतानिरूपितभगवदिच्छाविशेष्यतायां द्रव्यत्वादेरेवाऽवच्छेदकत्वं न तु घटत्वादेरित्येवं स्वीकरणीयमिति नोक्तातिप्रसङ्ग इति किं प्रवृत्तिनिमित्तस्य वाच्यत्वोपगमेनेति शक्यतावच्छेदकमवाच्यमेवेति दीधितिकारमतम् ।

तन्न शोभनम्– एवं सति शक्तिज्ञानाऽऽधुनिकसंकेतज्ञानयोरेकरूपेणैव हेतुत्वाद्

---

एवेति शक्यतावच्छेदकं घटत्वादिकं घटादिपदाऽवाच्यमेवेत्युक्तप्रवृत्तिनिमित्तलक्षणे "वाच्यत्वे सति"
इति विशेषणमनर्थकमेव। अत्र "किं प्रवृत्तिनिमित्तस्य वाच्यत्वोपगमेन" इत्यग्रिमवाक्येनान्वय ।
शक्तिज्ञानशाब्दबोधयो कार्यकारणभावस्वरूपमाह–तथा चेति, शक्यतावच्छेदकत्वस्य तत्पदज-
न्यबोधविषयत्वनिष्ठप्रकारतानिरूपितभगवदिच्छीयविशेष्यतावच्छेदकत्वरूपत्वस्वीकारात् । तद्धर्म-
प्रकारकशाब्दबोधे=द्रव्यत्वादिप्रकारकशाब्दबोध प्रति तद्धर्मावच्छिन्नत्वविशिष्टा=द्रव्यत्वादिधर्मा-
वच्छिन्ना या तादृशविषयता=द्रव्यादिपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितभगवदिच्छीय-
विशेष्यता तत्संसर्गकम्=तादृशविशेष्यतासम्बन्धेन पदप्रकारकमर्थविशेष्यकम् 'उक्तविशेष्यतासम्बन्धेन
द्रव्यपदविशिष्टं द्रव्यम्' इत्याकारकं यत् शक्तिज्ञानं तदेव कारणमित्यर्थ । उक्तविशेष्यताया येन
रूपेण पदप्रति योगिकसम्बन्धत्वमभिमतं तदाह–द्रव्यादीति, द्रव्यपदजन्यबोधविषयत्वनिष्ठप्रकार-
तानिरूपिता द्रव्यत्वावच्छिन्ना च या भगवदिच्छीयविशेष्यता तादृशविशेष्यता येनैव रूपेणोक्त-
विशेष्यताया सम्बन्धत्वं न तु तादृशप्रकारतानिरूपिता=द्रव्यपदजन्यबोधविषयत्वनिष्ठप्रकारता-
निरूपिता या घटत्वावच्छिन्ना भगवदिच्छीयविशेष्यता तादृशविशेष्यतात्वेन रूपेण–'द्रव्यपदाद्
द्रव्यं बोद्धव्यम्' इत्येव रूपेण भगवत्संकेतस्वीकाराद् द्रव्यपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरू-
पितभगवदिच्छीयविशेष्यतावच्छेदकत्वं द्रव्यत्वे एव स्वीकृतं न तु घटत्वेपि येन उक्तातिप्रसङ्ग =
द्रव्यपदाद घटत्वप्रकारकबोधस्यापत्ति स्यात्–' द्रव्यपदाद् घटो बोद्धव्य ' इत्येव भगवत्संकेता-
ऽस्वीकारादिति द्रव्यपदाद् घटत्वप्रकारकबोधातिप्रसङ्गो नास्तीत्यर्थ ॥

उक्तं परास्करोति– तन्नेति, त्वदुक्तरीत्या हि शक्यतावच्छेदकप्रकारताकशक्तिज्ञानस्य शाब्द-
बोधकारणत्वं प्राप्तं शक्यतावच्छेदकं च विशेष्यतावच्छेदकमेव विशेष्यतावच्छेदकं च धर्मिताव-
च्छेदकमेव तथा च शक्तिज्ञानाऽऽधुनिकसंकेतज्ञानयोरेकरूपेणैव शाब्दबोधं प्रति हेतुत्वाद् यदि
शक्तिज्ञानस्य शक्यतावच्छेदकप्रकारताकशक्तिज्ञानत्वेन रूपेण शाब्दबोधहेतुत्वं तदाऽऽधुनिक-

यत्र 'द्रव्यपदाद् गुणवत्त्वादिना द्रव्यं बोद्धव्यम्' इत्याकारक आधुनिकः कस्यचित्संकेतो द्रव्यत्वावच्छिन्नविशेष्यतासंबन्धेन द्रव्ये गृहीतस्तत्र तादृशसंकेतग्रहाद् द्रव्यत्वेन द्रव्यबोधापत्तेः गुणवत्त्वादिप्रकारकशाब्दबोधानुपपत्तेश्च दुर्वारत्वात् ।

॥ इति शक्तिवादसामान्यकाण्डं समाप्तम् ॥

---

संकेतज्ञानस्यापि शक्यतावच्छेदकप्रकारताकशक्तिज्ञानत्वेनैव रूपेण शाब्दबोधहेतुत्वं वक्तव्यमिति 'द्रव्यपदाद् गुणवत्त्वेन द्रव्यं बोद्धव्यम्' इत्याकारकाधुनिकसंकेतस्यापि शक्यतावच्छेदकप्रकारताकशक्तिज्ञानत्वेनैव रूपेण शाब्दबोधकारणत्वं प्राप्तं शक्यतावच्छेदकं च धर्मितावच्छेदकमेव धर्मितावच्छेदकं चोक्ताधुनिकसंकेतस्थले द्रव्यत्वमेव द्रव्यस्यैव धर्मित्वाद् न तु गुणवत्त्वमपि. शक्तिज्ञानशाब्दबोधयोश्च समानप्रकारकत्वनियमाद् द्रव्यत्वप्रकारकसंकेतज्ञाने जाते शाब्दबोधोऽपि द्रव्यत्वप्रकारक एव स्यात् न तु गुणवत्त्वप्रकारक इष्टश्चोक्ताधुनिकसंकेतस्थले गुणवत्त्वप्रकारकः शाब्दबोध इत्याक्षेपः । द्रव्ये इत्यस्य द्रव्यविषयक इत्यर्थः । अस्मन्मते च तत्पदजन्यबोधविषयताया यस्य धर्मस्यावच्छेद्यत्वसंबन्धेनान्वयो भवति तद्धर्मप्रकारक एव शाब्दबोधो भवति 'द्रव्यपदाद् गुणवत्त्वेन द्रव्यं बोद्धव्यम्' इत्यत्र 'गुणवत्त्वेन' इति तृतीयाया अवच्छेदकत्वमर्थः, एतादृशसंकेतज्ञानेन जायमानद्रव्यपदजन्यबोधविषयताया स्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यत्वसंबन्धेन गुणवत्त्वस्यैवान्वयो भवति न द्रव्यत्वस्येति गुणवत्त्वप्रकारक एव बोधो जायते न तु द्रव्यत्वप्रकारकः । अथवैतस्यानुक्तकार्यकारणभावेन चोक्तसंकेतस्थले द्रव्यपदजन्यबोधविषयत्वनिष्ठा प्रकारता गुणवत्त्वावच्छिन्नत्वावच्छिन्ना भवतीति गुणवत्त्वप्रकारक एव बोधो जायते न द्रव्यत्वप्रकारकः — तत्पदजन्यबोधविषयत्वनिष्ठा प्रकारता यद्धर्मावच्छिन्नत्वावच्छिन्ना भवति तद्धर्मप्रकारकस्यैव शाब्दबोधस्य सम्भवादित्यभिप्रायः । द्रव्यपदजन्यबोधविषयताया गुणवत्त्वावच्छिन्नत्वमस्तीति तादृशविषयतानिष्ठा प्रकारता गुणवत्त्वावच्छिन्नत्वावच्छिन्ना जातेत्यवधेयम् ।

॥ इति सामान्यकाण्डशक्तिवादस्याऽऽदर्शाख्या व्याख्या समाप्ता ॥

अथ

# विशेषकाण्डम् ।

अथ पदार्थांशे इव प्रकारीभूतधर्मांशेऽपि वाच्यत्वग्रहस्यापेक्षितत्वे आकाशपदाच्छब्दाश्रयतया बोधो न स्यात्— शब्दाश्रयत्वस्याऽऽकाशपदावाच्यतायाः सिद्धान्तसिद्धत्वात् तद्वारणायैव प्रवृत्तिनिमित्तलक्षणे " वाच्यत्वे सति " इतिविशेषणोपादानादिति चेत् ? न— शब्दाश्रयत्वस्याकाशपदवाच्यत्वमनङ्गीकुर्वद्भिः प्राचीनैराकाशपदादाकाशांशे तदुपस्थाप्यधर्मप्रकारकशाब्दबुद्धेरेवोपगमात् तदुक्तम्— " अस्तु पदादपि निर्विकल्पकम् " इति, निर्विकल्पकत्वं च=तदंशे तत्प

---

सामान्यकाण्डवाक्यार्थपूर्णतानन्तरं नृणाम् ।
स्यान्न विशेषकाण्डेऽस्मिन् ज्ञातव्यमवशिष्यते ॥

गोघटादिसामान्यशब्दानां शक्तिशक्तिज्ञानयोः स्वरूपनिरूपणं कृत्वा सम्प्रत्याऽऽकाशादिविशेषशब्दानां शक्तिवादमारभते— अथेत्यादिना । विशेषतो विवृत्य व्याख्यातोऽयं ग्रन्थः । यथा घटादिपदार्थविषयकघटादिपदवाच्यत्वज्ञानस्य घटादिपदजन्यशाब्दबोधार्थमपेक्षाऽस्ति तथा यदि प्रकारीभूतघटत्वादिधर्मविषयकघटादिपदवाच्यत्वज्ञानस्यापि घटादिपदजन्यशाब्दबोधार्थमपेक्षा स्यात्तदा घटत्वादेर्घटादिपदवाच्यत्वस्वीकाराद् घटादिपदाद् घटत्वादिप्रकारकशाब्दबोधसम्भवेऽप्याकाशपदाच्छब्दाश्रयत्वप्रकारकबोधो न स्यादेव— शब्दाश्रयत्वस्याकाशपदवाच्यत्वाऽनङ्गीकारात्, शब्दाश्रयत्वप्रकारकबोधस्यैवेष्टत्वात्, आकाशत्वं च न जातिः— एकमात्रवृत्तित्वादित्याकाशत्वं शब्दाश्रयत्वमेव प्रकारकबोधस्यैवेष्टत्वात्, आकाशत्वं च न जातिः— एकमात्रवृत्तित्वादित्याकाशत्वं शब्दाश्रयत्वमेव इत्यर्थः । तद्वारणाय=शब्दाश्रयत्वस्याकाशपदवाच्यत्ववारणायैव । इष्टापत्त्या परिहरति— नेति, आकाशपदात् स्वरूपत एवाकाशविषयकः शाब्दबोधो जायते न तु शब्दाश्रयत्वरूपेण नाम शब्दाश्रयत्वप्रकारक इत्यर्थः । यदि शब्दाश्रयत्वस्याकाशपदावाच्यत्वेऽप्याकाशपदाच्छब्दाश्रयत्वप्रकारकबोधः स्यात्तदा वाच्यधर्मप्रकारक एव बोधो भवतीति नियमभङ्गेन घटत्वादीनामपि घटादिपदवाच्यत्वमनर्थकं स्यादपि न चैवमस्ति— आकाशपदाच्छब्दाश्रयत्वाऽप्रकारकस्यैव स्वरूपत आकाशविषयकबोधस्य स्वीकारादिति भावः । तदुपस्थाप्यधर्माप्रकारकशाब्दबुद्धेः=आकाशपदोपस्थाप्यो यः शब्दाश्रयत्वधर्मस्तदप्रकारकशाब्दबोधस्य । तथा चाकाशपदादाकाशस्योपस्थितिस्तु शब्दाश्रयत्वप्रकारिकैव भवतीति प्रोक्तम् । आकाशपदान्निष्प्रकारकबोधे प्रमाणमाह— अस्त्विति, ज्ञानमिति शेषः । इन्द्रियेण प्रत्यक्षं तु प्रथमं निर्विकल्पकं जायत एवेति सर्वमतसिद्धम् आकाशपदादपि सविकल्पकं किञ्चिद्धर्मप्रकारको बोधो नोपपद्यत इत्याकाशपदादपि निर्विकल्पकम्=आकाशपदोपस्थाप्य

दोपस्थाप्यधर्मप्रकारकत्वं न तु तदंशे सामान्यतो निष्प्रकारकत्वम्— विभक्त्युपस्थापितैकत्वादीनां तदंशे प्रकारताया आवश्यकत्वात् तेन समं पदार्थान्तरस्य संसर्गानवगाहने तादृशबोधस्य शाब्दत्वासंभवाच्च ।

वस्तुतस्तु तत्र निर्विकल्पकपदं तत्पदोपस्थाप्यवस्त्वविशेषितधर्मिविषयकशाब्दानुभवजनकनिर्विकल्पकस्मरणपरम्, अत एव तत्र " निर्विकल्पकरूपस्य स्मरणस्यानुपपत्तिः— अनुभवस्य स्वसमानप्रकारकमात्रस्मृतिजनकत्वात् " इत्याशङ्क्य प्रकारान्तरेण तादृशस्मरणमुपपादितं मिश्रैः ।

---

धर्मप्रकारकं ज्ञानम्=बोधो भवतु । अयं भावः—आकाशत्वं यथा शब्दाश्रयत्वरूपं तथाऽष्टद्रव्यातिरिक्तद्रव्यत्वरूपमपि तत्र यथाकाशपदस्य शक्तिः शब्दाश्रयत्वे स्यात्तथाऽष्टद्रव्यातिरिक्तद्रव्यत्वेऽपि स्यात् न चैतद् युक्तम्— एकधर्मिप्रकारीभूतेषु नानाधर्मेष्वेकपदस्य पर्यायेण नानाशक्तीनां क्वचिदप्यदर्शनात्, उभयत्रैकापि शक्तिर्न संभवति— एकदाऽऽकाशपदादुभयधर्मप्रकारकबोधस्यादर्शनात्, एकत्र शक्तिरेकत्र च लक्षणेत्यपि न युक्तम्—विनिगमनाविरहादित्याकाशपदस्य कस्मिन्नपि धर्मे शक्तिर्नास्ति तस्मान्निर्विकल्पक एव बोधो जायत इत्यगत्या स्वीकार्यमिति । इन्द्रियजन्यं निर्विकल्पकज्ञानं तु सामान्यतो निष्प्रकारकमेव जायते अस्ति किंचिदित्येव रूपत्वाद् व्यक्तिमात्रविषयत्वाद्वा पदात्तु सामान्यतो निष्प्रकारकं ज्ञानं न जायते "शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते" इति नियमेन पदार्थान्तरसंसर्गं विना शाब्दबोधत्वानुपपत्तेरित्यभिप्रेत्य निर्विकल्पकत्वस्वरूपमाह—निर्विकल्पकत्वं चेति । तदंशे=तत्पदवाच्यव्यक्तौ । तेन=तत्पदवाच्यव्यक्त्या ।

ननु यथाकाशपदादुपस्थितिस्तु शब्दाश्रयत्वप्रकारिका बोधश्च निष्प्रकारकस्तदोपस्थितिशाब्दबोधयोः समानप्रकारकत्वनियमभङ्गः स्यादित्याशङ्क्याह=वस्तुतस्त्विति, तत्र=" अस्तु वा पदादपि निर्विकल्पकम् " इत्यत्र । तदिति—आकाशपदोपस्थाप्यं यच्छब्दाश्रयत्वरूपं वस्तु तदविशेषितं यदाकाशरूपं धर्मि तद्विषयको यः शाब्दानुभवस्तज्जनकं यन्निर्विकल्पकस्मरणम्=उपस्थितिस्तत्परमित्यर्थः, तथा चाकाशपदादाकाशस्य स्वरूपत एवोपस्थितिशाब्दबोधौ भवत इति प्राप्तमिति नोपस्थितिशाब्दबोधयोः समानप्रकारकत्वनियमभङ्गापत्तिरित्यभिप्रायः । तत्र निर्विकल्पकपदं निर्विकल्पकोपस्थितिपरं न तु निर्विकल्पकशाब्दबोधपरमित्यत्र प्रमाणमाह— अत एवेति । अत एव=तत्र निर्विकल्पकपदस्य निर्विकल्पकस्मरणपरत्वादेव, निर्विकल्पकं स्मरणं न संभवति—स्मरणं ह्यनुभूतपदार्थविषयकं जायते तत्रानुभवो यत्प्रकारको भवति तत्प्रकारकमेव संस्कारमुत्पादयतीति तादृशसंस्कारोद्बोधेन जायमानं स्मरणं सप्रकारकमेव जायते न तु निष्प्रकारकं स्वजन्यसंस्कारद्वाराऽनुभवस्य स्वसमानप्रकारकमात्रस्मृतिजनकत्वादिति शङ्कार्थः । प्रकारान्तरेणेति— स्मरणमनुभूतस्यैव भवतीति नियमे सत्यप्यनुभूतस्य स्मरणं भवत्येवेति नियमो नास्ति— संस्कारप्रमोषेण स्मरणाभावस्यापि संभवादिति यथा घटकादिविशिष्टदेवदत्तदर्शने जाते कालान्तरे

अत्र च मते जात्यतिरिक्तस्य तस्य स्वरूपतः पदार्थान्तरे प्रकारत्वाऽसंभवात् 'आकाशवासी' इत्यादौ शाब्दबोधानुपपत्तिः, 'अन्वयितावच्छेदकावच्छिन्न एव पदार्थान्तरान्वयः' इतिनियमानुपपत्तिश्चेति पदार्थे इव पदार्थप्रकारीभूतधर्मांशेऽपि शक्तिग्रहापेक्षायां गोत्वादेर्गवादिपदवाच्यत्ववच्छब्दाश्रयत्वस्याप्याकाशपदवाच्यत्वमावश्यकम् । अत एव दीधितिकृता गुणटिप्पण्यां रूपग्रन्थे "अत्रेदं तत्त्वम्" इत्यादिना गोत्वादिना शब्दाश्रयत्वस्याऽविशेषं व्युत्पाद्य प्रकाशस्यप्रवृ-

घटकादिविषयकसंस्कारप्रबोधेन केवलं तदसत्यनिमात्रविषयकं स्मरणं जायते न तु घटकादिविषयकमपि तथा शब्दाश्रयत्वप्रकारकशक्तिज्ञाने जातेप्याकाशपदान्निष्प्रकारकस्मरण ( उपस्थिति ) समभवति- शब्दाश्रयत्वविषयकसंस्कारप्रबोधस्वीकारादित्येव तादृशस्मरणम्=निर्विकल्पकस्मरणमुपपादित मुरारिमिश्रैरित्यर्थः ।

उक्तप्राचीनमतमालोचयति- अत्र चेत्यादिना । तस्य=आकाशस्य । पदार्थान्तरे=आकाशे वासादौ । जात्यखण्डोपाधिनिष्ठैव प्रकारताऽनवच्छिन्ना भवति न तु तदतिरिक्तपदार्थनिष्ठापि आकाशस्तु न जातिर्नाऽखण्डोपाधिरिति यद्याकाशपदादाकाशस्य स्वरूपत एव भानं स्यात्तदाऽऽकाशस्याकाशवासिनि स्वरूपतः प्रकारत्वासंभवात् 'आकाशवासी' इत्यत्राकाशप्रकारकाकाशवासिविशेष्यकबोधो न स्यादित्यर्थः । 'नीलमाकाशम्' इत्यादावाकाशविशेष्यकोपि बोधो न स्यात्- अन्वयितावच्छेदकावच्छिन्न एव पदार्थान्तरान्वयस्य स्वीकाराद् यथा 'नीलो घट' इत्यत्रान्वयितावच्छेदकेन घटत्वेनावच्छिन्ने एव नीलपदार्थान्वयो भवति- घटपदाद् घटत्वेन रूपेण घटस्य भानस्वीकारात्, आकाशपदाच्चाकाशस्य स्वरूपत एव भानस्वीकाराद् । यदि स्वरूपेणाप्युपस्थिते आकाशे नीलादिपदार्थान्तरान्वयः क्रियते तदा 'अन्वयितावच्छेदकावच्छिन्न एव पदार्थान्तरान्वय' इतिनियमभङ्ग स्यादित्याह- अन्वयितेति । यदि गोत्वादेर्गवादिपदवाच्यत्वमिष्टं तदा शब्दाश्रयत्वस्याप्याकाशपदवाच्यत्वं स्वीकार्यमेवेत्याह- पदार्थे इति । तथा चाकाशपदाच्छब्दाश्रयत्वरूपेणाकाशभानसंभवात् 'आकाशवासी' इत्यत्राकाशस्य शब्दाश्रयत्वेन प्रकारतया भानं पदार्थान्तरे प्रकारत्वं च संभवति, 'नीलमाकाशम्' इत्यादावप्याकाशस्यान्वयितावच्छेदकेन शब्दाश्रयत्वेनावच्छिन्नत्वात्तत्र नीलपदार्थान्वयः संभवतीति न कोपि दोष इत्यर्थः । शब्दाश्रयत्वस्याकाशपदवाच्यत्वे मानमाह- अत एवेति । अत एव=शब्दाश्रयत्वस्याकाशपदवाच्यत्वादेव । गुणटिप्पण्याम्=तत्त्वचिन्तामणिनामकन्यायग्रन्थे गुणपदार्थनिरूपणटिप्पण्यां यत्र रूपात्मकगुणनिरूपणं तत्रेत्यर्थः । यदि गोत्वादीनां गवादिपदवाच्यत्वं स्वीक्रियते तदा गोत्वाद्यऽविशेषाच्छब्दाश्रयत्वस्याप्याकाशपदवाच्यत्वमवश्यं स्वीकार्यमेव तथा चोक्तप्रवृत्तिनिमित्तलक्षणे "वाच्यत्वे सति" इति विशेषणं नोपादेयं तस्य शब्दाश्रयत्वे आकाशपदवाच्यत्ववारणार्थमेवोपादेयत्वात्. शब्दाश्रयत्वे चाकाशपदवाच्यत्वस्यावश्यकत्वेन स्वीकारादित्याह- प्रत्यक्षेति । उक्तरूपग्रन्थे तु दीधितिकृतो यदिनेति । दीधितिग्रन्थे पूर्वापरविरोधमुद्घाटयति-

त्तिनिमित्तलक्षणे वाच्यत्वविशेषणस्योपादानं दूषितमेव । प्रत्यक्षमणिदीधितौ च पदार्थांशे गोत्वादेः प्रकारताया शक्यतावच्छेदकत्वस्य प्रयोजकत्वमुपगम्य शक्यतावच्छेदके शक्तिर्दूषितैव तत्रोक्तानुपपत्तिश्चिन्त्या ।

यत्तु शक्त्याऽऽकाशपदादष्टद्रव्यातिरिक्तद्रव्यत्वादिनाप्याकाशबोधो भवति न तु नियमतः शब्दाश्रयत्वेनैव तथा सति 'आकाशः शब्दाश्रयः' इति सहप्रयोगस्य

---

क्तना गोत्वादीनां गवादिपदवाच्यत्वं शब्दाश्रयत्वस्याप्याकाशपदवाच्यत्वं व्यवस्थापितं चिन्तामणिप्रत्यक्षखण्डे च दीधितिकृता गोत्वादेरपि गवादिपदवाच्यत्वं दूषितं सुतरां शब्दाश्रयत्वस्याप्याकाशपदवाच्यत्वं प्राप्तमिति पूर्वापरविरोधः । यदि च गोत्वादौ गवादिपदशक्तिर्नास्ति तदा गवादिपदजन्यबोधे गोत्वादेः पदार्थांशे=गवादौ प्रकारतया भानवद् द्रव्यत्वादेरपि प्रकारतया भानं स्यादविशेषादित्याशङ्क्य गोत्वादेः प्रकारताया शक्यतावच्छेदकत्वस्यैव प्रयोजकत्वं स्वीकृतं शक्यतावच्छेदकत्वं च गोत्वादेरेव न द्रव्यत्वादेः—'गोपदं गोत्वावच्छिन्नवाचकम्' इत्येव भगवत्सङ्केतस्वीकारात् 'गोपदं द्रव्यत्वावच्छिन्नवाचकम्' इत्येवं भगवत्सङ्केतास्वीकाराच्च, तथा च गोत्वादेः प्रकारताया शक्यतावच्छेदकत्वमेव प्रयोजकं न तु गवादिपदवाच्यत्वं येन गोत्वादौ गवादिपदशक्तिस्वीकारावश्यकता स्यादिति शक्यतावच्छेदकं गोत्वादिकं गवादिपदवाच्यमेवेत्यर्थः, एतच्च पूर्वमपि ( ५६ पृ ) प्रतिपादितम् । गोत्वादेर्गवादिपदवाच्यत्वे दोषमाह— तत्रेति । उक्तानुपपत्तिः=( ५६ पृ ) "तन्न शोभनम्" इत्यादिनोक्तानुपपत्तिः । शाब्दबोधे शक्यतावच्छेदकस्यैव प्रकारतया भानस्वीकारे 'द्रव्यपदाद् गुणवत्त्वेन द्रव्यं बोद्धव्यम्' इत्याकारकाधुनिकसङ्केतग्रहेण द्रव्यपदाद् द्रव्यत्वप्रकारक एव बोधः स्याद् गुणवत्त्वप्रकारकबोधश्च न स्याद् द्रव्यत्वस्यैव द्रव्यपदशक्यतावच्छेदकत्वादित्यर्थः । गोत्वादेर्वाच्यत्वपक्षे तु यथात्र गुणवत्त्वप्रकारको बोधो भवति तत्सर्वं पूर्वमेव ( ५७ पृ ) प्रतिपादितं तत्रैव द्रष्टव्यमिति पक्षम् ।

परिहाराय मतान्तरमनुवदति—यत्त्विति, आकाश पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्यमस्तीत्याकाशपदादाकाशस्याष्टद्रव्यातिरिक्तद्रव्यत्वेन रूपेणापि बोधः सम्भवति । तथा सति=यद्याकाशपदादाकाशस्य शक्त्या नियमतः शब्दाश्रयत्वेनैव रूपेण बोधः स्यात्तदा 'आकाशः शब्दाश्रयः' इति सहप्रयोगस्य=आकाशपदशब्दाश्रयपदयोः सहप्रयोगवाक्यस्य मुख्यता न स्याद् यत आकाशपदेनापि शब्दाश्रयत्वेनोपस्थितिः स्यात् शब्दाश्रयपदेनापि शब्दाश्रयत्वेनोपस्थितिः स्यादिति 'घटो घटः' इत्यादिवाक्यवदनन्वयापत्तिः स्यात्—भिन्नरूपोपस्थितयोरेवाऽभेदान्वयस्वीकाराद् न च 'घटो घटः' इत्यादिवाक्यतुल्यत्वमिष्टमिति यत आकाशपदेनाष्टद्रव्यातिरिक्तद्रव्यत्वेन रूपेणाकाशोपस्थितिः स्वीकार्या तथा चान्वयबोधोपपत्तौ सत्यामपि वाक्यस्य मुख्यता न स्यात्—शक्यार्थप्रतिपादने एव मुख्यतायाः सत्त्वाद् यदा चाकाशपदेन शक्त्याऽष्टद्रव्यातिरिक्तत्वेनापि बोधः स्वीक्रियते तदा त्वाकाशपदेन शक्त्यैवाष्टद्रव्यातिरिक्तद्रव्यत्वेन बोधे जाते वाक्यस्य मुख्यता सम्भवति—शक्यैवार्थप्रतिपादनात् । एवं चेदम्भिन्नेष्वाकाशो प्रत्येकं शब्दाश्रय-

मुख्यतानुपपत्तिः । प्रत्येकं नानाधर्मविशिष्टे एवाकाशे तत्पदस्य नानाशक्तिक-ल्पनं तु न संभवति—नानाधर्मावच्छिन्ने एकधर्मिण्येकपदवाच्यताया क्वाप्यदृष्ट-त्वादिति शब्दाश्रयत्वोपलक्षिते एवाकाशपदशक्तिरिति प्राचीनमतमेव साधु, उपल-क्षणस्यापि विशिष्टाऽवाचकपदजन्यशाब्दबोधप्रकारत्वे न किंचिद् बाधकम् ।

न च शब्दाश्रयत्वस्योपलक्षणत्वे तस्येवाविशेषात् प्रमेयत्वादेरप्याकाशपद-जन्याऽनुभवप्रकारतापत्तिरिति वाच्यम्, तत्प्रकारकशाब्दबोधे तदंशेऽनतिप्रसक्तत्व-रूपशक्यतावच्छेदकत्वावगाहित्वेनोपलक्षिते शक्तिज्ञानस्य हेतुत्वादिति ।

---

नादिनानाधर्मविशिष्टे तत्पदस्य=आकाशपदस्य नानाशक्तिकल्पन कर्तव्य येनैकशक्तया क्वचि-द्द्रव्यत्वेन क्वचिदपरशक्तया चाष्टद्रव्यातिरिक्तद्रव्यत्वेनाकाशबोध स्यात्, न चैतदपि युक्तम्—नानाधर्मावच्छिन्ने एकधर्मिण्येकपदवाच्यताया नाम नानाधर्मविशिष्टे एकपदस्य नानाशक्तीना क्वचिदप्यदर्शनात् नानाशक्तिकल्पनाऽभावे उक्तमहप्रयोगस्य मुख्यतानुपपत्तिरित्युभयत पाशा-रज्जुरिति चेतो प्राचीनमतमेव साधु नाम विनिगमनाविरहेणाकाशे कस्यापि धर्मस्य विशेषणत्वा-सम्भवादुपलक्षणत्वमेव स्वीक्रियते इति शब्दाश्रयत्वोपलक्षिते एवाकाशे आकाशपदशक्तिरस्तीति प्राचीनमतमेव साधु तथा चोपलक्षणत्वाविशेषात् क्वचिच्छब्दाश्रयत्वेन क्वचिदष्टद्रव्यातिरिक्तद्रव्य-त्वेन चाकाशपदाच्छक्तयैवाकाशबोध सम्भवतीति 'आकाश शब्दाश्रय ' इत्यत्राकाशपदेन शक्तयाऽष्टद्रव्यातिरिक्तद्रव्यत्वेन शब्दाश्रयपदेन च शक्तया शब्दाश्रयत्वेनाकाशोपस्थितौ जातायाम-भेदान्वय सम्भवतीति नोक्तमहप्रयोगस्य मुख्यत्वानुपपत्ति—शक्यार्थप्रतिपादने मुख्यत्वा-धाभावादित्यर्थ । ननूपलक्षणस्य तु प्रकारतया भान क्वचिदपि न दृष्टमिति शब्दाश्रयत्वादीनामु-पलक्षणत्वे तेषा बोधे प्रकारतया भान कथ स्यादित्याशङ्क्याह—उपलक्षणस्येति, द्विविध पद भवति—विशिष्टवाचक विशिष्टावाचक च तत्र विशिष्टवाचक गवादिपद गोत्वादिविशिष्टव्यक्तिवाचकत्वाद् गवादौ गोत्वादेर्विशेषणत्वस्वीकाराद्, विशिष्टावाचक चाकाशादिपद शब्दाश्रयत्वाद्युपलक्षितवा-चकत्वादाकाशे कस्यापि धर्मस्य विशेषणत्वाभावात् तत्र विशिष्टवाचकपदजन्यबोधे तूपलक्षणस्य प्रकारत्व न सम्भवति विशेषणीभूतधर्मस्यैव प्रकारत्वाधिकारित्वात् विशिष्टावाचकपदजन्यबोधे तूप-लक्षणस्यैवागत्या प्रकारत्व भवति कस्यचिद्विशेषणत्वाभावाद् निष्प्रकारकशाब्दबोधासम्भवाच्चेत्यर्थ ।

ननूपलक्षणीभूतस्यापि शब्दाश्रयत्वस्याकाशपदजन्यबोधे प्रकारतया भाने उपलक्षणत्वाविशे-षात् प्रमेयत्वादेरपि तत्र प्रकारतया भान स्यादित्याशङ्क्याह—न चेति । परिहारहेतुमाह—तत्प्र-कारकेति, तदंशे=प्रकारतया भासमानधर्मे । उपलक्षितविषयकं शक्तिज्ञान य धर्ममनतिप्रसक्तरूप शक्यतावच्छेदकत्वेनावगाहते तस्यैव धर्मस्य तत्पदजन्यबोधे प्रकारतया भान भवति नान्यस्य तथा चाकाशपदशक्तिज्ञानेन शब्दाश्रयत्वादीनामेवाऽनतिप्रसक्तशक्यतावच्छेदकत्वेनावगाहनात्तेषा-मेव प्रकारतया भान भवति 'आकाशपदाच्छब्दाश्रयो बोद्धव्य ' इत्येव भगवत्संकेतस्वीकारात्

तत्र–' आकाशः शब्दाश्रयः ' इतिसहप्रयोगस्य मुख्यत्वाऽसिद्ध्याऽष्टद्रव्याति-रिक्तद्रव्यत्वाकाशपदवाच्यत्वायेकतररूपेण लक्षणाया एव तत्रोपगमादिति ।

यदि च ' आकाशः शब्दाश्रयः ' इत्यादिवाक्यस्थमाकाशपदं मुख्यमेव निर्धर्मितावच्छेदककश्चान्वयबोधो न कुत्रापि ? तदाऽऽकाशादिपदादऽष्टद्रव्यातिरि-क्तद्रव्यत्वादिना बोधनिर्वाहाय विशिष्टाऽवाचकाऽऽकाशादिपदस्य प्रकारांशे वा-च्यत्वानवगाहिशक्तिग्रहस्यैव ( अपि ) तद्धर्मावच्छिन्नविशेष्यकतद्धर्मप्रकारकान्व-

प्रमेयत्वादौ त्वनतिप्रसक्ता शक्यतावच्छेदकतैव नास्ति तेषां घटादावपि सत्त्वादिति नाकाशपद-जन्यबोधे प्रमेयत्वादीनां प्रकारतया भानापत्तिरित्यर्थः ।

उक्तं परिहरति–तत्रेति, 'आकाशः शब्दाश्रयः ' इतिप्रयोगस्य प्रमाणाभावाद् मुख्यत्वमेव सिद्धं नास्ति येन तादृशमुख्यत्वस्योपपत्त्यर्थं प्राचीनमतस्योक्तस्य साधुत्वं स्वीकार्यमेव च स्यात्, तथा च तत्र='आकाशःशब्दाश्रयः'इतिप्रयोगे आकाशपदस्याकाशे अष्टद्रव्यातिरिक्तद्रव्यत्वेन वाऽऽ-काशपदवाच्यत्वेन वा रूपेण लक्षणैवास्तीति स्वीकार्यं तत्राकाशपदेनोक्तान्यतररूपेण लक्षणयाकाशो-पस्थितौ जातायां शब्दाश्रयपदेन च शक्त्या शब्दाश्रयत्वरूपेणोपस्थितौ जातायामभेदान्वयः संभव-त्येव, शक्तिस्त्वाकाशपदस्य शब्दाश्रयत्वविशिष्टे एवाकाशे इति शक्त्याऽऽकाशपदाच्छब्दाश्रयत्वेने-वाकाशबोधः संभवति शब्दाश्रयत्वस्य चाकाशपदवाच्यत्वं सिद्धमिति न काचिदनुपपत्तिरित्यर्थः ।

'आकाशः शब्दाश्रयः' इतिप्रयोगस्य मुख्यत्वोपपादनप्रकारमपि पक्षान्तरेणाह–यदि चेति, मुख्यम्=शक्त्याऽर्थप्रतिपादकम् । निर्धर्मितावच्छेदककः=यस्मिन् शाब्दबोधे धर्मितावच्छेदकतया कस्यापि धर्मस्य भानं न स्यात् स निर्धर्मितावच्छेदकक एतादृशशाब्दबोधः क्वचिदपि नेष्टः–कस्यापि धर्मस्य धर्मितावच्छेदकतयाऽवश्यं भानादित्यर्थः । तदेति–'आकाशः शब्दाश्रयः'इतिप्रयोगस्याकाश-पदेनाकाशस्याष्टद्रव्यातिरिक्तद्रव्यत्वादिरूपेण शक्त्यैव बोधसंभवे मुख्यत्वं सम्भवति–शक्त्यार्थप्रतिपा-दने एव मुख्यत्वस्वीकारादिति तादृशबोधनिर्वाहायाऽऽकाशपदस्य विशिष्टावाचकत्वमभ्युपगन्तव्यम्, अर्थादाकाशे कस्यापि धर्मस्य विशेषणत्वं न स्वीकार्यं किं तूपलक्षणत्वमेव तथा च शब्दाश्रयत्वाद्युप-लक्षिते एवाकाशे आकाशपदस्य शक्तिरित्युपलक्षणत्वाविशेषादष्टद्रव्यातिरिक्तद्रव्यत्वादिनाप्याका-शस्य शक्त्या बोधः सम्भवतीति 'आकाशः शब्दाश्रयः' इतिप्रयोगस्य मुख्यत्वमुपपन्नम्– शक्त्यैवाकाशपदादाकाशस्याष्टद्रव्यातिरिक्तद्रव्यत्वादिना रूपेण बोधस्वीकारात्, आकाशपदस्य विशिष्टवाचकत्वे तु शब्दाश्रयत्वविशिष्टे शक्त्या शब्दाश्रयत्वरूपेणैव शक्त्या बोधः स्यादष्टद्रव्यातिरिक्त-द्रव्यत्वादिना च बोधो लक्षणयैव स्यादित्युक्तवाक्यस्य मुख्यत्वं न स्यात् शब्दाश्रयत्वरूपेण च बोधे 'घटो घटः' इतिवाक्यतुल्यत्वं स्यादिति । अत्र शक्तिज्ञानस्वरूपमाह–विशिष्टेति विशिष्टावाचका-काशादिपदस्य तद्धर्मावच्छिन्नविशेष्यकतद्धर्मप्रकारकशाब्दबोधं प्रति प्रकारांशे=प्रकारतया भासमा-नधर्मांशे वाच्यत्वानवगाहि यच्छक्तिज्ञानं तस्यैव हेतुत्वमगत्या स्वीकार्यं नाम शक्तिज्ञानेन प्रकारीभू-तधर्मस्य वाच्यत्वावगाहनं न कर्तव्यं तथा सति यादृशधर्मे वाच्यत्वावगाहनं स्यात् शक्त्या तादृशध-र्मप्रकारक एव बोधः स्यादिति शब्दाश्रयत्वस्य वाच्यत्वे प्राप्तेऽष्टद्रव्यातिरिक्तद्रव्यत्वादिप्रकारको

यद्बोधहेतुत्वमगत्या स्वीकार्यम् । विशिष्टवाचकगवादिपदस्य च प्रकारांशे वाच्य-
त्वावगाहि शक्तिज्ञानमेव तद्धर्मप्रकारकशाब्दबोधहेतुरिति न शक्तिभ्रमलक्षणाग्रह-
मन्तरेण गवादिपदाद् गोपदवाच्यत्वाद्यवाच्यधर्मप्रकारको बोधः ।

आकाशादिपदमिव गवादिपदमपि विशिष्टवाचकमितिभ्रमवतो गवादिपदा
वाच्यधर्मप्रकारकबोधनिर्वाहाय तद्धर्मप्रकारकशाब्दबोधे तद्धर्मसामानाधिकरण्य-

---

बोधे आकाशपदाद्बन्वयेन स्यादिति वाक्यस्य मुख्यत्वं न स्यादिति भावः, तथा च तद्धर्म-
प्रकारकशाब्दबोधे धर्मसामान्यावच्छिन्नत्वानवच्छिन्ना या बोधविषयत्वनिष्ठा प्रकारता तादृशप्रका-
रतानिरूपितविशेष्यतासंसर्गक पदप्रकारक तद्धर्मावच्छिन्नविशेष्यताक विशिष्टवाचकाकाशादिपदस्य
शक्तिज्ञानं कारणमिति प्रमातम्, कस्यापि धर्मस्याकाशपदवाच्यत्वं नास्तीति स्वनिष्ठावच्छेदकतानि-
रूपितावच्छेद्यत्वसम्बन्धेन कस्यापि धर्मस्याकाशपदजन्यबोधविषयतायामन्वयाभावात् तादृशवि-
षयतानिष्ठा प्रकारता धर्मसामान्यावच्छिन्नत्वानवच्छिन्ना जाता, तच्च शक्तिज्ञानम्—'धर्मसामान्या-
वच्छिन्नत्वानवच्छिन्ना याऽऽकाशपदजन्यबोधविषयत्वनिष्ठा प्रकारता तादृशप्रकारतानिरूपितभ-
गवत्सङ्केतीयविशेष्यतासम्बन्धेनाकाशपदविशिष्टमाकाशम्' इत्याकारकम् । विशिष्टवाचकगवादि-
पदशक्तिज्ञानस्य व्यतिरेकमाह—विशिष्टवाचकेति, सर्वं चैतत्पूर्वं प्रतिपादितम् । गवादौ गोत्वादे-
र्विशेषणत्वमेवेति गवादिपदं विशिष्टवाचकं गोत्वादिकं गवादिपदवाच्यमेवेति तादृशवाच्यत्वावगा-
हिन एव गवादिपदशक्तिज्ञानस्य गवादिबोधहेतुत्वम् । तद्धर्मावच्छिन्नत्वानवच्छिन्ना या तत्पदजन्य-
बोधविषयत्वनिष्ठा प्रकारता तादृशप्रकारतानिरूपितभगवत्सङ्केतीयविशेष्यतासंसर्गक तत्पदप्रकारक
शक्तिज्ञानं कारणमिति यावत् । तथा च शक्तिभ्रमं विना लक्षणाग्रहं विना वा गवादिपदाऽवाच्यो
यो गवादिपदवाच्यत्वादिरूपो धर्मस्तत्प्रकारको बोधो गवादिपदान्न जायते शक्तिभ्रमेण लक्षणा-
ग्रहेण त्वेतादृशबोध इष्ट एव, गवादिपदादभ्रान्तस्य शक्त्या तत्पदवाच्यगोत्वादिधर्मप्रकारकस्यैव
बोधस्येष्टत्वादित्यर्थः ।

यस्य पुरुषस्य 'आकाशादिपदमिव गवादिपदमपि विशिष्टवाचकम् ( उपलक्षितवाचकम् )'
इति भ्रमो भवति तस्य गवादिपदाद् गोपदवाच्यत्वाद्यवाच्यधर्मप्रकारको बोधो भवतीति
तादृशबोधोपपत्तिमुपपादयति—आकाशादिपदमिवेति, तद्धर्मप्रकारकशाब्दबोधे=गोपदवाच्यत्वा
द्यवाच्यधर्मप्रकारकशाब्दबोधं प्रति, गोपदवाच्यत्वमपि गोव्यक्तावस्ति गोपदजन्यबोधविषयता-
प्यस्तीति तयोः सामानाधिकरण्यं प्राप्तमिति गोपदजन्यबोधविषयताया यद् गोपदवाच्यवाचका
च्यधर्मसामानाधिकरण्यं तन्मात्रावगाहि यत् तत्पदवाच्यताग्रहः=गोपदशक्तिज्ञानं तस्यैव
हेतुत्वं वक्तव्यं तथा च गोपदवाच्यत्वाद्यवाच्यधर्मेऽपि गोपदजन्यबोधविषयतासामानाधिकरण्यभ्र-
मस्त्येवेति तादृशभ्रान्तपुरुषस्य गोपदवाच्यत्वाद्यवाच्यधर्मप्रकारकबोधो गवादिपदात् सम्भवत्येवे-
त्यर्थः, तथा च 'अवाच्यधर्मप्रकारकशाब्दबोधं प्रति तादृशधर्मसमानाधिकरणबोधविषयत्वनिष्ठ-
प्रकारतानिरूपितविशेष्यतासम्बन्धेन पदप्रकारक तद्धर्मावच्छिन्नविशेष्यताक शक्तिज्ञानं कारणम् ।

-मात्रावगाहितत्पदवाच्यताग्रहस्य हेतुत्वेपि तद्धेतुतायां वाच्यतांशे विशेषणानन्तर्भावित्वावगाहित्वमप्यवच्छेदकमुपेयम्- अतोऽवाच्यधर्मप्रकारकबोधहेतुगवादिपदशक्तिग्रहस्य भ्रमत्वनियमः अतो नाऽभ्रान्तपुरुषस्य ततस्तादृशबोध इति ध्येयम् ॥

एवं यत्र सुवर्णहलवहनयोग्यगवादिरूपविशेषपरं सामान्यवाचकपदघटितम् ' द्रव्यं नास्ति ' ' गौर्नास्ति ' इत्यादिकं वाक्यं प्रयुज्यते तत्र विशेषधर्मावच्छिन्ने लक्षणैव– विशेषधर्मस्य सामान्यशब्दाऽवाच्यतया शक्त्या तद्रूपप्रकारकबोधाऽनिर्वाहात् ।

---

गवादिपदं विशिष्टवाचकमिति प्रमात्मकज्ञाने सति तु 'गोपदं गोत्वावच्छिन्नवाचकम्'इति भगवत्संकेते गोर्गोत्वविशिष्टत्वेन भानाद् गोत्वप्रकारक एव गोपदाद् बोधः सम्भवति न तु गोपदवाच्यत्वाश्रयाच्यधर्मप्रकारक इत्यवधेयम् । ननु गोपदजन्यबोधीयविषयतायां गोपदवाच्यत्वाद्यवाच्यधर्मसामानाधिकरण्यं तु यथार्थमेवेत्यऽभ्रान्तस्यापि गोपदाद् गोपदवाच्यत्व यवाच्यधर्मप्रकारको बोधः किं न स्यादित्याशङ्क्याह– तद्धेतुतायामिति, उक्तशक्तिज्ञानेऽवाच्यधर्मप्रकारकबोधहेतुताप्यस्ति विशेषणानन्तर्भावित्वावगाहित्वमप्यस्तीति विशेषणानन्तर्भावित्वावगाहित्वं तादृशहेतुतावच्छेदकं जातम् । वाच्यतांशे=गवादिपदजन्यबोधविषयत्वनिष्ठप्रकारतायां तद्धर्मावच्छिन्नत्वावच्छिन्नत्वं यद् विशेषणमुक्तं तादृशविशेषणानन्तर्भावित्वावगाहित्वम्=तादृशविशेषणाभावावगाहित्वमिति यावत्, अर्थादुक्तशक्तिज्ञाने गोपदजन्यबोधविषयतानिष्ठप्रकारतायां गोत्वावच्छिन्नत्वावच्छिन्नत्वस्यावगाहित्वं नास्ति किं तु तदभावावगाहित्वमेव स्वीक्रियते तथा च गोपदजन्यबोधविषयतानिष्ठप्रकारतायां गोत्वावच्छिन्नत्वावच्छिन्नत्वस्य सत्त्वेपि तदभावावगाहित्वाद् उक्तस्यावाच्यधर्मप्रकारकबोधहेतुभूतगवादिपदशक्तिग्रहस्य भ्रमत्वं प्राप्तम्, एतादृशभ्रमात्मकशक्तिज्ञानं च भ्रान्तस्यैव सम्भवति नाऽभ्रान्तस्य तस्य तु यत्प्रमात्मकं गोपदजन्यबोधविषयतानिष्ठप्रकारतायां गोत्वावच्छिन्नत्वावच्छिन्नत्वावगाहि शक्तिज्ञानं तदेव सम्भवति तादृशशक्तिज्ञानाच्च गोत्वादिवाच्यधर्मप्रकारक एव बोधः संभवति नाऽवाच्यधर्मप्रकारकोपि-तत्पदजन्यबोधविषयतानिष्ठप्रकारता यद्धर्मावच्छिन्नत्वावच्छिन्ना भवति तद्धर्मप्रकारकस्यैव बोधस्य स्वीकारादिति नाऽभ्रान्तपुरुषस्य ततः=गवादिपदात् तादृशबोधः=अवाच्यधर्मप्रकारको बोध इत्यर्थः । एवमेव गगनादिपदं द्रष्टव्यम् । इत्याकाशपदम् ॥

सामान्यवाचकशब्दानां विशेषधर्मावच्छिन्ने लक्षणैवेत्याह– एवमिति, ' द्रव्यं नास्ति ' इत्याकारकं सामान्यवाचकद्रव्यपदघटितं वाक्यं यत्र सुवर्णरूपविशेषपरम्=सुवर्णरूपविशेषार्थबोधनाय प्रयुज्यते तत्र द्रव्यादिपदस्य विशेषधर्मावच्छिन्ने=सुवर्णत्वावच्छिन्ने सुवर्णे लक्षणैव, एवम् ' गौर्नास्ति ' इत्याकारकं सामान्यवाचकगोपदघटितं वाक्यं यत्र हलवहनयोग्यगोरूपविशेषार्थबोधनाय प्रयुज्यते तत्र गवादिपदस्य विशेषधर्मावच्छिन्ने=हलवहनयोग्यगोरूपार्थे लक्षणैव विज्ञेयेत्यन्वयः । उक्ते हेतुमाह– विशेषेति, सुवर्णत्वादिविशेषधर्मस्य सामान्यवाचकद्रव्यादिशब्दाऽवाच्यतया शक्त्या तद्रूपप्रकारकस्य=सुवर्णत्वादिविशेषधर्मप्रकारकस्य बोधस्य द्रव्यादिपदादऽनि-

गाहिशक्तिज्ञानस्य कारणत्वमुपगन्तव्यम् । शक्यतावच्छेदके शक्यत्वानभ्युपगन्तृमते तादृशबोधे तद्रूपांशे संकेतविशेष्यतावच्छेदकतापर्याप्त्यवगाहिज्ञानत्वेन हेतुत्वान्नोक्तातिप्रसङ्ग इतित्वुक्तानुपपत्त्या हेयम् ।

प्राभाकरास्तु धेनुपदस्य धानकर्मताविशिष्ट एव शक्तिर्न तु गोत्वविशिष्टे, गोत्वस्य शक्त्युपाधित्वेन शक्तिनियन्त्रकत्वाद् धानकर्मत्वस्य महिष्यादिसाधारणत्वेपि न धेनुपदात् तद्बोधः ।

न च धेनुपदाद् गोत्वप्रकारकबोधस्यानुभविकतया धानकर्ममहिष्यादिमति देशे 'धेनुर्नास्ति' इति विशेषदर्शिनां प्रयोगस्य मुख्यतया च धेनुपदजन्यबोधे

---

दीधितिकारमतमालोचयति– शक्यतावच्छेदके इति, किं वा ननु शुद्धतद्धर्मप्रकारकबोधे संकेतविशेष्यतावच्छेदकतापर्याप्त्यवगाहिज्ञानत्वेन शक्तिज्ञानस्य हेतुत्वेपि स्वर्गादिपदादेकधर्मप्रकारकबोधस्य शक्यापत्तिर्नास्तीति किमर्थं तदितरधर्मानवच्छिन्नत्वानवच्छिन्नप्रकारतात्वेन प्रकारताघटितसंबन्धावगाहिशक्तिज्ञानस्य कारणत्वमभ्युपगम्यते इत्याशङ्क्याह– शक्यतावच्छेदके इति, तादृशबोधे=शुद्धतद्धर्मप्रकारकबोधे तद्रूपांशे=प्रकारीभूतधर्मे घटत्वगोत्वादौ, घटादिपदस्थले घटादौ या संकेतविशेष्यता तादृशविशेष्यताया या घटत्वाद्यवच्छेदकता तादृशावच्छेदकताया घटत्वादौ पर्याप्तिरस्ति– घटत्वमात्रस्य तादृशविशेष्यतावच्छेदकत्वादिति तादृशपर्याप्त्यवगाहिशक्तिज्ञानेनैकधर्मप्रकारको बोधः संभवति, स्वर्गादिपदशक्तिज्ञानं तु नैकस्मिन् धर्मे संकेतविशेष्यतावच्छेदकतापर्याप्तिमवगाहते किं तु दुःखासंभिन्नत्वसुखत्वेतदुभयपर्याप्तामेव संकेतविशेष्यतावच्छेदकतामवगाहते इति स्वर्गादिपदाच्छक्तया नैकधर्मप्रकारताकबोधस्यापत्तिरित्यर्थः । उक्तातिप्रसङ्गः=स्वर्गादिपदादेकधर्मप्रकारबोधातिप्रसङ्गः । अस्मिन् मते दोषमाह– उक्तेति, उक्तानुपपत्त्या=' गुणवत्त्वेन द्रव्यं द्रव्यपदाद् बोद्धव्यम् ' इत्याकारकाधुनिकसंकेतेनेष्टो गुणवत्त्वप्रकारकबोधो न स्याद् द्रव्यत्वप्रकारक एव स्यात्– द्रव्यत्वस्यैव द्रव्यपदसंकेतविशेष्यतावच्छेदकत्वादित्यर्थः । सर्वं चैतत्पूर्वमेव प्रतिपादितम् ।

धेनुपदे प्राभाकरमतमाह–प्राभाकरा इति । "न तु गोत्वविशिष्टे" इत्यत्र " न तु गोत्वमपि विशेषणम्" इत्यपि पाठः, अर्थस्तु स एव । ननु यदि धेनुपदस्य धानकर्मताविशिष्टे शक्तिस्तदा धेनुपदाद् महिष्यादिबोधः किं न स्यात्–महिष्यादीनामपि धानकर्मत्वादित्याशङ्क्याह–गोत्वस्येति, धेनुपदस्थले गोत्वस्य शक्त्युपाधित्वेन शक्तिनियामकत्वं स्वीक्रियते महिष्यादौ च धानकर्मत्वस्य सत्त्वेपि गोत्वस्याभावान्न धेनुपदात् तद्बोधः=महिष्यादिबोध इत्यर्थः ।

न चेति–धेनुपदाद् गोत्वप्रकारको बोधोपि भवति धानकर्ममहिष्यादिमति देशे च 'धेनुर्नास्ति' इति विशेषदर्शिनां विदुषां मुख्यतया प्रयोगोपि भवतीति धेनुपदजन्यबोधे गोत्वस्य भानमङ्गीकरणीयं न वा च=धेनुपदजन्यबोधे गोत्वभाने स्वीकृते च धानकर्मत्वे इव गोत्वेपि धेनुपदशक्तिः स्वीकार्या

गोत्वभानमङ्गीकरणीयं तथा च धानकर्मत्ववद् गोत्वेपि शक्तेरावश्यकता अथ यस्यापि शाब्दबोधे भानोपगमे द्रव्यत्वप्रमेयत्वादेरपि प्रकारतया शाब्दबुद्धौ भानापत्तिरिति वाच्यम्, शाब्दबोधेऽशक्यस्य गोत्वादेः प्रकारतया भाने शक्यतावच्छेदकत्वस्य नियामकत्वात्, गोत्वस्य चाशक्यत्वेपि शक्यतायामवच्छेदकत्वात्मकसंबन्धविशेषोपगमाद् द्रव्यत्वादेश्चाऽतथात्वेनाऽतिप्रसङ्गविरहात् ।

न च गोत्वस्य वृषभादिसाधारणस्यातिप्रसक्ततया शक्तौ नावच्छेदकत्वसंभव इति वाच्यम्, अवच्छेदकत्वस्य प्रकृतेऽनतिप्रसक्तत्वाऽनियतत्वात्, नियतत्वे वा धानकर्मत्वसहितस्यैव तस्यावच्छेदकत्वोपगमात् ।

---

यदि च धेनुत्वाभावकर्मत्व एव धेनुपदशक्तिः स्यात्तदा धेनुपदाद् गोत्वप्रकारकबोधो न स्यात्तथा धानकर्मत्वविशिष्टमहिष्यादिमति देशे 'धेनुर्नास्ति' इति प्रयोगोपि मुख्यो न स्यादेव–तत्र धानकर्मताविशिष्टमहिष्यादिव्यक्तेः सत्त्वादेव न चैवमस्तीत्यर्थः । ननु धेनुपदाशक्यस्यापि गोत्वस्य धेनुपदजन्यबोधे भानमस्तु भानमि याशङ्क्याह–अशक्यस्यापीति । अशक्यत्वाविशेषादितिशेषः । परिहारहेतुमाह–शाब्दबोध इति । शक्यतावच्छेदकस्य त्वशक्यस्यापि तत्पदजन्यशाब्दबोधे प्रकारतया भानं स्वीक्रियते अस्ति च गो त्व धेनुपदशक्यतावच्छेदकत्वम्='धेनुपदाद् धानकर्मताविशिष्टगौर्बोद्धव्या' इत्येव संकेतस्वीकारात् । द्रव्यत्वादेश्चाऽतथात्वेन=धेनुपदशक्यतावच्छेदकत्वेनाऽतिप्रसङ्गविरहात्=धेनुपदजन्यबोधे द्रव्यत्वादेः प्रकारतया भानातिप्रसङ्गविरहादित्यर्थः । यथा दण्डत्वस्याकारणत्वामावेपि कारणतावच्छेदकत्वं तथात्र गोत्वस्य शक्यत्वाभावेपि शक्यतावच्छेदकत्वं विशेयम् ।

द्रव्यत्वादिकं चातिप्रसक्तत्वात् शक्यतावच्छेदकं न भवतीति ध्येयम् ।

ननु यदि गोत्वं धानकर्मतातिप्रसक्तं न स्यात्तदा स्यादपि शक्यतावच्छेदकं न चैवमस्ति धानकर्मत्वाभाववति वृषभादावपि गोत्वस्य सत्त्वेनातिप्रसक्तत्वाद् धेनुपदशक्यतावच्छेदकत्वं न सम्भवति–अनतिप्रसक्तधर्मस्यैवावच्छेदकत्वस्वीकारादित्याशङ्क्याह–न चेति । गोव्यक्तौ निरूपकत्वसम्बन्धेन शक्तिरप्यस्ति गोत्वमप्यस्तीत्यभिप्रेत्य शक्यतावच्छेदकत्वमाशङ्कितम् । परिहारमाह–अवच्छेदकत्वस्येति, अनतिप्रसक्तस्यैव धर्मस्यावच्छेदकत्वं भवतीतिनियमः प्रकृते नास्तीत्यतिप्रसक्तस्यापि गोत्वस्य शक्यतावच्छेदकत्वं युक्तमेव । ननु यद्यतिप्रसक्तस्यापि गोत्वस्य शक्यतावच्छेदकत्वं तदा द्रव्यत्वादेरपि धेनुपदशक्यतावच्छेदकत्वं स्यात् तेन च धेनुपदजन्यबोधे प्रकारतया भानमपि स्यादित्याशङ्क्याह–नियतत्वे चेति, अनतिप्रसक्तस्यैव धर्मस्यावच्छेदकत्वं भवतीति नियमस्वीक्रियते तथा च केवलगोत्वस्य वृषभादौ सत्त्वेनातिप्रसक्तत्वेपि धानकर्मत्वसहितस्य तु गोत्वस्य धानकर्मत्वसहितस्य=धानकर्मत्वसमानाधिकरणस्यैव तस्य=गोत्वस्य शक्यतावच्छेदकत्वं स्वीक्रियते धानकर्मगोमात्रवृत्तित्वेनातिप्रसक्तत्वं नास्येति युक्तं तस्य शक्यतावच्छेदकत्वमित्यर्थः ।

अथ गोत्वमेव शक्यं धानकर्मत्वमेव शक्त्युपाधिरिति वैपरीत्यमेव कुतो न स्यात्? वस्तुतो धानकर्मत्वापेक्षया लाघवेन गोत्वस्यैव शक्यत्वमुचितम्।

न च गोत्वमतिप्रसक्तं धानकर्मत्वं तु धानकर्मव्यक्तिभेदेन भिन्नं भिन्नमिति गोनिष्ठं तदनतिप्रसक्तमिति न वैपरीत्यमिति वाच्यम्, तस्यातिप्रसक्तत्वेपि शक्यत्वोपगमे क्षतिविरहात्, वृषभादिबोधस्य शक्त्युपाधिधानकर्मत्वस्यापि प्रकारतया वारणात्।

न च गोत्वस्यैव शक्यत्वे जातिशक्त्यैव व्यक्तिभानसंभवेनाऽन्यलभ्यतया गवादिपदवद् व्यक्तिशक्त्युच्छेदप्रसङ्गः तथा च धानकर्मत्वस्य जातिनिष्ठशक्यताव्यधिकरणत्वेन शक्यतावच्छेदकत्वानुपपत्त्या वृषभादिबोधो दुर्वार एवेति वाच्यम्, एतदनुरोधेनान्यलभ्यत्वेपि व्यक्तौ शक्तिस्वीकारादिति चेत्?

---

तार्किक प्रभाकरमतापेक्षया विपरीतमाशङ्कते—अथेति। अत्रापि मते महिष्यादौ गोत्वाभावाद् वृषभादौ च धानकर्मत्वाभावात्तत्र धेनुपदप्रयोगापत्तिर्नास्त्येव। तार्किकः स्वमते लाघवमाह—वस्तुत इति, गोत्वं सकलगोष्वेकमेव धानकर्मत्वं च स्वाधारव्यक्तिभेदेन भिन्नं भिन्नमेवेत्यनन्तधानकर्मत्वेषु धेनुपदशक्तिमपेक्ष्य गौरवमिति लाघवेन गोत्वस्यैव धेनुपदशक्यत्वमुचितमित्यर्थः।

ननु गोत्वं त्वेकमेवेति वृषभादावपि तस्य सत्त्वादतिप्रसक्तमेव धानकर्मत्वं च स्वाधारव्यक्तिभेदेन भिन्नं भिन्नमेवेति गोनिष्ठं धानकर्मत्वं महिष्यादौ न सम्भवतीति नातिप्रसक्तमिति तस्यैव धेनुपदशक्यत्वमुचितं न गोत्वस्यातिप्रसक्तत्वादिति नोक्तवैपरीत्यं युक्तमिति मीमांसक आशङ्कते—न चेति। विनिगमनाविरहेण तार्किकः परिहरति—तस्येति, तस्य=गोत्वस्य। शक्यत्वोपगमे=धेनुपदशक्यत्वोपगमे। क्षतीति—गोत्वस्य शक्यत्वे धेनुपदाद् वृषभादिबोधापत्तिरेव क्षतिरस्ति सा च नास्त्येव— धानकर्मत्वस्य शक्त्युपाधित्वस्वीकाराद् वृषभादौ च धानकर्मत्वस्याभावान्न धेनुपदाद् वृषभादिबोधापत्तिरित्यर्थः। स्वयमपि विशदयति—वृषभादीति, शक्त्युपाधिधानकर्मत्वस्यापि प्रकारतया=प्रकारतास्वीकारेण धेनुपदाद् वृषभादिबोधस्य वारणादित्यन्वयः।

तार्किकेण "गोत्वमेव शक्यम्" इति यदुक्तं तदाश्रित्य मीमांसक आशङ्कते—न चेति, यदि गोत्वमेव धेनुपदशक्यं तदा यथा गवादिपदानां जातिशक्त्यैव व्यक्तिभानं सम्भवति—व्यक्तिं विना जातेरनुपपत्तेरानयनादियोग्यतायाश्च जातावऽभावादन्यलभ्यतया=व्यक्तेराक्षेपादिलभ्यतया व्यक्तौ गवादिपदानां शक्तिर्नास्ति तथा धेनुपदस्यापि व्यक्तौ शक्तिर्न स्यात् तथा च धेनुपदशक्यत्वं जातौ धानकर्मत्वं च व्यक्ताविति धानकर्मत्वस्य जातिनिष्ठशक्यताव्यधिकरणत्वेन शक्यतावच्छेदकत्वं न स्यात् तथा च गोत्वस्य वृषभादावपि सत्त्वेन गोत्ववाचकधेनुपदाद् वृषभादिबोधः स्यादेव, यदि धानकर्मत्वं शक्यतावच्छेदकं स्यात्तदा तेन धेनुपदाद् वृषभादिबोधवारणं स्यादपि न चैव सम्भवतीत्यर्थः। तार्किकः परिहरति—एतदिति, एतदनुरोधेन=केवलगोत्वस्य शक्यत्वे

कथमप्यसंभवात् तथापि गोनिष्ठधानकर्मताव्यक्तीनामनतिप्रसक्तानुगतरूपाभावान्न शक्यत्वसंभवः ।

न च सामानाधिकरण्यसंबन्धेन गोत्वमेव धानकर्मत्वसहितं धानकर्मत्वविशेषाणामनुगमकमिति वाच्यम्, अशक्येन शक्यानुगमे सर्वत्रैव विशेषणे शक्त्युच्छेदप्रसङ्गात् । अतिप्रसक्तेनापि धानकर्मतात्वेन विशिष्टे धानकर्मताविशेषे शक्तिग्रहोपगमे लाघवाद् गोत्वविशिष्टे एव गोविशेषे शक्तिर्धानकर्मत्वमेव शक्त्युपाधिरित्येवोचितम् । अननुगतेन तत्तद्धानकर्मतात्वेन शक्तिग्रहोपगमे चाऽपूर्वव्यक्त्यऽलाभप्रसङ्ग इत्यनुपपत्तिश्चिन्त्या ॥

---

मपि संभवाभावात् तादृशं गौरवं च मीमांसकैरीश्वरस्वीकारगौरवभयेनेष्टापत्त्या स्वीकृतमिति-न बाधकम्=बाधकत्वेन दोषत्वेन वा प्रदर्शयितुं युक्तं तथापि गोनिष्ठधानकर्मताव्यक्तीनामनतिप्रसक्तानुगतरूपाभावाच्छक्यत्वं न संभवति-अनतिप्रसक्तानुगतरूपे सत्येव शक्यत्वसंभवाद् यथा गोव्यक्तीनां गोत्वं गोत्वस्य च गोत्वत्वमनतिप्रसक्तानुगतरूपमस्तीति गोव्यक्तीनां गोत्वस्य च गोपदशक्यत्वम् । धानकर्मतात्वं च महिष्यादिवृत्तिधानकर्मताव्यक्तिष्वप्यस्तीत्यऽतिप्रसक्तमेवेति न धानकर्मतात्वेनापि गोनिष्ठधानकर्मतानामनुगमः संभवति येन धेनुपदशक्यत्वं स्यादित्यर्थः ।

ननु सामानाधिकरण्यसंबन्धेन धानकर्मत्वसहितं नाम धानकर्मत्वसमानाधिकरणं गोत्वमेव धानकर्मत्वविशेषाणाम्=गोनिष्ठधानकर्मताव्यक्तीनामनुगमकं भविष्यति- धानकर्मत्वसमानाधिकरणगोत्वस्यानुगतत्वादनतिप्रसक्तत्वाच्च तथा च गोनिष्ठधानकर्मताव्यक्तीनां न धेनुपदशक्यत्वानुपपत्तिरित्याशङ्क्याह- न चेति, तन्न मते धेनुपदशक्यत्वं गोत्वे नास्ति तत्र यदि धेनुपदाशक्येनापि गोत्वेन धेनुपदशक्यानां धानकर्मत्वानामनुगमः स्यात्तदा सर्वत्रैवाशक्येनापि घटत्वादिना घटादिपदशक्यघटादिव्यक्तीनामनुगमः स्यादिति विशेषणे=घटत्वादौ घटादिपदशक्तिस्वीकारो व्यर्थ एव स्यात्. न चैवमस्तीति न धानकर्मत्वसमानाधिकरणगोत्वेनापि गोनिष्ठधानकर्मत्वानामनुगमः संभवति येन धेनुपदशक्यत्वं स्यादित्यर्थः । धानकर्मतात्वं च महिष्यादिवृत्तिधानकर्मतासु वृत्तित्वादतिप्रसक्तमेव तत्र यद्यतिप्रसक्तेनापि धानकर्मतात्वेनानुगमाद् धानकर्मतात्वविशिष्टे धानकर्मताविशेषे=गोनिष्ठधानकर्मतासु धेनुपदशक्तिग्रहः स्वीक्रियते तदा लाघवाद् गोत्वविशिष्टे एव गोविशेषे=धानकर्मत्वोपलक्षितगोव्यक्तिषु धेनुपदशक्तिर्धानकर्मत्वमेव शक्त्युपाधिरित्येवोचितमित्याह- अतिप्रसक्तेनेति । लाघवं च गोत्वस्यैकत्वप्रयुक्तम् । धानकर्मत्वस्य शक्त्युपाधित्वेन न धेनुपदाद् वृषभादिबोधापत्तिरपि । ननु धानकर्मतात्वमपि स्वाश्रयतत्तद्धानकर्मताव्यक्तिभेदेन भिन्नं भिन्नमेव न सकलधानकर्मताव्यक्तिवृत्त्येकं येनातिप्रसक्तं स्यादित्याशङ्क्याह- अननुगतेनेति, एवं हि तत्तद्धानकर्मतात्वमननुगतमेव स्याद्. अननुगतेन च तत्तद्धानकर्मतात्वेन तत्तद्धानकर्मतासु धेनुपदशक्तिग्रहोपगमे त्वऽपूर्वव्यक्तेः=यस्यां धानकर्मताव्यक्तौ शक्तिग्रहो न

न— यद्धर्मविशिष्टे शक्तिस्तद्धर्माश्रयस्य यावत एव शक्यत्वनियमेन गोत्वस्य शक्यत्वे वृषभादेरपि तथात्वापत्तेः। धानकर्मताविशिष्टाया गोः शक्यत्वे च गोनिष्ठधानकर्मताव्यक्तीनामेव विशेषणतया तासां च महिष्यादिव्यावृत्ततया महिष्यादेः शक्यतापत्तिविरहात्, इतिवदन्ति।

तन्मते यद्यपि शक्तिज्ञानाधुनिकसंकेतज्ञानयोः कारणताभेदेन गौरवं न बाधकमू— भगवद्विद्वेषिणां मीमांसकानां शक्तेः संकेतानात्मकतया तयोरेककारणतायाः,

धेनुपदाद् वृषभादिबोधवारण न सम्भवतीत्यनुरोधेन व्यक्तेरन्यलभ्यत्वेपि व्यक्तौ धेनुपदशक्तिः स्वीक्रियते तथा च गोत्वविशिष्टव्यक्तौ धेनुपदशक्तिर्धानकर्मत्व च शक्यभूतव्यक्तौ वर्तत इति शक्यतावच्छेदक तत्र धानकर्मभूतमहिष्यादौ गोत्व नास्ति गोत्वाधारभूतवृषभादौ च धानकर्मत्व नास्तीति न धेनुपदाद् महिष्यादेर्वा वृषभादेर्वा बोधापत्तिरिति सर्वं सुस्थमित्यर्थः।

अथेत्यादिनाशङ्कित प्राभाकरः परिहरति—नेति, यदि गोत्वविशिष्टव्यक्तेर्धेनुपदशक्यत्वं तदा गोत्वविशिष्टत्वाद् वृषभादेरपि धेनुपदशक्यत्व स्यादेव यद्धर्मविशिष्टे शक्तिस्तद्धर्माश्रयस्य यावतः= सकलस्यैव शक्यत्वनियमात् तथा च धेनु पदाद् वृषभादिबोधापत्तिर्दुर्निवारेति तार्किकमते दोषः। तथात्वापत्तेः=शक्यत्वापत्तेः। प्राभाकरः स्वमते उपपत्तिमाह—धानकर्मतेति, धानकर्मताविशिष्टाया गोः शक्यत्व तत्र गोनिष्ठधानकर्मताव्यक्तीनामेव विशेषणत्व तासाम्=गोनिष्ठधानकर्मताव्यक्तीना च गोव्यक्तिमात्रवृत्तित्वाद् महिष्यादिव्यावृत्ततया महिष्यादेर्धेनुपदशक्यतापत्तिर्नास्ति धानकर्मत्वस्य वृषभादावभावाच्च वृषभादेरपि धेनुपदशक्यतापत्तिर्नास्तीति न धेनुपदाद् वृषभादेर्वा महिष्यादेर्वा बोधापत्तिरिति सर्वं सुस्थमित्यर्थः। अन्यत्र मीमांसकमते जातावेव शक्तिरस्ति धेनुपदस्य धानकर्मत्वमात्रे शक्तौ धेनुपदाद् महिष्यादिबोधापत्तिः स्यादितिहेतोर्धेनुपदस्य धानकर्मतानिशिष्टगोव्यक्तौ शक्तिः स्वीक्रियत इत्यवधेयम्। वदन्तीत्यस्य प्राभाकरा इति पूर्वेणान्वयः

इत्येवं प्राभाकरमतमुपपाद्य विवेचयति— तन्मते इत्यादिना। तर्कमते यथा घटादिपदानां घटाद्यर्थेषु या शक्तिः सेश्वरेच्छारूपा तथा देवदत्तादिपदानां यो देवदत्तादिपिण्डेषु सङ्केतः सोपीश्वरेच्छारूप एव तस्य "द्वादशेऽहनि पिता नाम कुर्यात्" इतिश्रुत्या सम्प्रदादिति शक्तिज्ञानाधुनिकसंकेतज्ञानयोः कारणताभेद=कारणतास्वरूपभेदो नास्ति, किं वा शक्तावीश्वरीयत्वानुपादानेनेच्छामात्रं तर्कमते शक्तिरस्ति. आधुनिकसंकेतोपि कर्तुरिच्छैवेति शक्तिज्ञानाधुनिकसंकेतज्ञानयोः कारणतास्वरूपभेदाभावाद् द्वैविध्य नास्ति तेन च गौरवमपि नास्ति, मीमांसकमते चेश्वराभावानेश्वरेच्छारूपा शक्तिः किं तु वाच्यवाचकभावसम्बन्धरूपा सा च घटादिपदानामेव घटाद्यर्थेषु. देवदत्तादिपिण्डेषु देवदत्तादिपदानां चाधुनिकसंकेत एव स च न वाच्यवाचकभावरूप इति यद्यपि मीमांसकमते शक्तिज्ञानाऽऽधुनिकसंकेतज्ञानयोः कारणतास्वरूपभेदेन गौरवमस्ति— भगवद्विद्वेषिणाम्=परमेश्वरानङ्गीकर्तॄणां मीमांसकानां मते शक्तेः संकेतानात्मकतया=इच्छारूपत्वाभावेन तयोः=शक्तिज्ञानाधुनिकसंकेतज्ञानयोरेककारणतायाः=एकरूपेण कारणतायाः कथ-

कथमप्यऽसंभवात् तथापि गोनिष्ठधानकर्मताव्यक्तीनामनतिप्रसक्तानुगतरूपाभावान्न शक्यत्वसंभवः ।

न च सामानाधिकरण्यसंबन्धेन गोत्वमेव धानकर्मत्वसहितं धानकर्मत्वविशेषाणामनुगमकमिति वाच्यम्, अशक्येन शक्यानुगमे सर्वत्रैव विशेषणे शक्त्युच्छेदप्रसङ्गात् । अतिप्रसक्तेनापि धानकर्मतात्वेन विशिष्टे धानकर्मताविशेषे शक्तिग्रहोपगमे लाघवाद् गोत्वविशिष्टे एव गोविशेषे शक्तिर्धानकर्मत्वमेव शक्त्युपाधिरित्येवोचितम् । अननुगतेन तत्तद्धानकर्मतात्वेन शक्तिग्रहोपगमे चाऽपूर्वव्यक्त्यऽलाभप्रसङ्ग इत्यनुपपत्तिश्चिन्त्या ॥

---

मपि संभवाभावात्, तादृशं गौरवं च मीमांसकैरीश्वरस्वीकारगौरवभयेनेष्टापत्त्या स्वीकृतमिति—न बाधकम्=बाधकत्वेन दोषत्वेन वा प्रदर्शयितुं युक्तं तथापि गोनिष्ठधानकर्मताव्यक्तीनामनतिप्रसक्तानुगतरूपाभावाच्छक्यत्वं न संभवति— अनतिप्रसक्तानुगतरूपे सत्येव शक्यत्वसंभवाद् यथा गोव्यक्तीनां गोत्वं गोत्वस्य च गोत्वत्वमनतिप्रसक्तानुगतरूपमस्तीति गोव्यक्तीनां गोत्वस्य च गोपदशक्यत्वम् । धानकर्मतात्वं च महिष्यादिवृत्तिधानकर्मताव्यक्तिष्वप्यस्तीत्यऽतिप्रसक्तमेवेति न धानकर्मतात्वेनापि गोनिष्ठधानकर्मतानामनुगमः संभवति येन धेनुपदशक्यत्वं स्यादित्यर्थः ।

ननु सामानाधिकरण्यसबन्धेन धानकर्मत्वसहितं नाम धानकर्मत्वसमानाधिकरणं गोत्वमेव धानकर्मत्वविशेषाणाम्=गोनिष्ठधानकर्मताव्यक्तीनामनुगमकं भविष्यति— धानकर्मत्वसमानाधिकरणगोत्वस्यानुगतत्वादनतिप्रसक्तत्वाच्च तथा च गोनिष्ठधानकर्मताव्यक्तीनां न धेनुपदशक्यत्वानुपपत्तिरित्याशङ्क्याह— न चेति, तत्र मते धेनुपदशक्यत्वं गोत्वे नास्ति तत्र यदि धेनुपदाशक्येनापि गोत्वेन धेनुपदशक्यानां धानकर्मत्वानामनुगमः स्यात्तदा सर्वत्रैवाशक्येनापि घटत्वादिना घटादिपदशक्यघटादिव्यक्तीनामनुगमः स्यादिति विशेषणे=घटत्वादौ घटादिपदशक्तिस्वीकारो व्यर्थ एव स्यात्. न चैवमस्तीति न धानकर्मत्वसमानाधिकरणगोत्वेनापि गोनिष्ठधानकर्मत्वानामनुगमः संभवति येन धेनुपदशक्यत्वं स्यादित्यर्थः । धानकर्मतात्वं च महिष्यादिवृत्तिधानकर्मतासु वृत्तित्वादतिप्रसक्तमेव तत्र यद्यतिप्रसक्तेनापि धानकर्मतात्वेनानुगमाद् धानकर्मतात्वविशिष्टे धानकर्मताविशेषे=गोनिष्ठधानकर्मतासु धेनुपदशक्तिग्रहः स्वीक्रियते तदा लाघवाद् गोत्वविशिष्टे एव गोविशेषे=धानकर्मत्वोपलक्षितगोव्यक्तिषु धेनुपदशक्तिर्धानकर्मत्वमेव शक्त्युपाधिरित्येवोचितमित्याह— अतिप्रसक्तेनेति । लाघवं च गोत्वस्यैकत्वप्रयुक्तम् । धानकर्मत्वस्य शक्त्युपाधित्वेन न धेनुपदाद् वृषभादिबोधापत्तिरपि । ननु धानकर्मतात्वमपि स्वाश्रयतत्तद्धानकर्मताव्यक्तिभेदेन भिन्नं भिन्नमेव न सकलधानकर्मताव्यक्तिष्वेकं येनातिप्रसक्तं स्यादित्याशङ्क्याह— अननुगतेनेति, एवं हि तत्तद्धानकर्मतात्वमननुगतमेव स्याद्. अननुगतेन च तत्तद्धानकर्मतात्वेन तत्तद्धानकर्मतासु धेनुपदशक्तिग्रहोपगमे ह्यऽपूर्वव्यक्तेः=यस्यां धानकर्मताव्यक्तौ शक्तिग्रहो न

यथा नानाधर्मविशिष्टैकधर्मिवाचकाच्छक्तिभ्रमातो नैकधर्मं परित्यज्य धर्मी प्रतीयते तथा चन्द्रत्वसूर्यत्वादिनानाधर्मविशिष्टनानाधर्मिवाचकपुष्पवन्तादिपदाच्चन्द्रत्वादिकं परित्यज्य न सूर्यत्वादिप्रकारको बोधः ।

अथात्र हरिपदादिशक्तिज्ञानादिव 'दिवाकरः पुष्पवन्तपदवाच्य,' इत्याकारकशक्तिज्ञानात् केवलसूर्यत्वप्रकारको बोधो दुर्वारः ।

न च पुष्पवन्तपदशक्तिज्ञानेन सूर्यत्वादिप्रकारकशाब्दबोधजनने चन्द्रत्वादिप्रकारकशक्तिज्ञानस्यापि सहकारितोपगमान्नातिप्रसङ्ग इति वाच्यम् , तस्य हर्यादि-

---

जातस्तादृशधानकर्मताव्यक्तेरलाभप्रसङ्ग = धेनुपदात् बोधानुपपत्तिरेव दोष स च व्यक्तौ शक्तिपक्षे इव विज्ञेय इत्युक्ततर्कमतमेव श्रेय इत्यर्थ । एवमेव सुखासभिन्नदु खादौ नरकादिपदानां शक्ति केवलदु खादौ च लक्षणैव विज्ञेया ॥

॥ इति धेनुपदम् ॥

अथ

## ॥ पुष्पवन्तपदम् ॥

नानाधर्मिविशेषणतापक्षेषु नानार्थैकशक्तिमत्पुष्पवन्तपदमुदाहरति— यथेत्यादिना । नानाधर्मविशिष्टैकधर्मिवाचक धेन्वादिपद तत्र यद्यपि तर्कमते गोत्वस्यैव विशेषणत्व प्राभाकरमते च धानकर्मत्वस्यैव विशेषणत्व तथापि गोत्व धानकर्मत्व चोभयमेव धेनुत्वमित्येवमभिप्रायेण नानाधर्मविशिष्टत्वमुक्त किं वा कस्यचिन्मतेन धानकर्मत्वगोत्वोभयधर्मविशिष्टत्वमुक्तमिति विज्ञेयम् । तथेति— चन्द्रत्वविशिष्टश्चन्द्र सूर्यत्वविशिष्ट सूर्यस्तदुभयवाचक पुष्पवन्तपद तत्र पुष्पवन्तपदाच्चन्द्रसूर्ययोरुभयोरेव देव प्रतीतिर्भवति— तदुभयो पुष्पवन्तपदस्यैकशक्तिस्वीकारादिति नैक चन्द्रत्वादिधर्म परित्यज्य केवलसूर्यत्वादिप्रकारको बोध शक्तिभ्रमातो भवतीत्यर्थ ।

ननु यथा हरिपदस्य विष्णुसूर्याद्यनेकपदार्थवाचकत्वेपि ' हरिपद विष्णुवाचकम् ' इत्यादिहरिपदशक्तिज्ञानात् केवलविष्ण्वादिविषयको बोधो भवति तथा ' दिवाकर पुष्पवन्तपदवाच्य ' इत्याकारकशक्तिज्ञानस्यापि प्रमात्वेन तत केवलसूर्यत्वादिप्रकारकबोधो दुर्वार एव—पुष्पवन्तपदस्य चन्द्रसूर्योभयवाचकत्वेन सूर्यवाचकत्वादेवेत्याशङ्कते— अथेति । विशेषत स्पष्टार्थोऽय ग्रन्थ ।

ननु पुष्पवन्तपदशक्तिज्ञानेन सूर्यत्वादिप्रकारकबोधजनने चन्द्रत्वादिप्रकारकशक्तिज्ञानस्य सहकारित्व स्वीक्रियते सहकारिण विना च कार्यं न भवतीति पुष्पवन्तपदविषयकचन्द्रत्वादिप्रकारकशक्तिज्ञाने विद्यमाने चन्द्रत्वसूर्यत्वोभयप्रकारक एव बोध समवतीत्यतिप्रसङ्ग =केवलसूर्यत्वादिप्रकारकबोधातिप्रसङ्गो नास्तीत्याशङ्क्याह— न चेति । परिहारमाह— तस्येति, तस्य=पुष्पवन्तपदस्य नानार्थत्वग्रहदशाया यथा हर्यादिपदात् केवलविष्ण्वादिविषयकबोधो भवति तथा

पदवत्त्वनानार्थत्वग्रहदशायां भ्रान्तस्य केवलसूर्यत्वादिप्रकारकबोधस्याप्युत्पत्तेः। एवं तत्पदस्य हर्यादिपदवन्नानाधर्मावच्छिन्नवाचकतया नानार्थत्वप्रसङ्गोपि दुर्वारः ।

न चार्थद्वये तस्यैकस्या एव शक्तेरुपगमान्न नानार्थता— नानाशक्तिमत एव नानार्थत्वोपगमादिति वाच्यम्, शक्यतावच्छेदकभेदेन शक्तिभेदस्यावश्यकत्वाद् अवच्छेदकभेदस्यावच्छेद्यभेदनियतत्वात्,अन्यथा हर्यादिपदेष्वपि शक्त्यैक्यापत्तेः।

अत्र शक्त्याख्यपदपदार्थसंबन्धान्तरवादिमीमांसकानुयायिनः—यथा धानकर्मत्वगोत्वादिरूपशक्यतावच्छेदकभेदेपि धेन्वादिपदानां न शक्तिभेदः—अवच्छेदकताया व्यासज्यवृत्तित्वात् तथा प्रकृतेपि चन्द्रत्वसूर्यत्वयोर्व्यासज्यवृत्तिशक्यतावच्छेदकतास्वीकारान्न शक्तिभेदो न वैकं परित्यज्यान्यप्रतीतिः । केवलसूर्यत्वा-

पुष्पवन्तपदात् केवलसूर्यादिविषयकबोधो भ्रान्तस्य स्यादेवेत्यर्थः । यद्यपि भ्रान्तस्यात्र केवलसूर्यत्वादिप्रकारकबोधो नेष्टस्तथापि पूर्वपक्षग्रन्थोयमित्यनुसंधेयम् । एवमिति— तत्पदस्य= पुष्पवन्तपदस्य ।

ननु हर्यादिपदानां तु प्रत्येकस्मिन् विष्ण्वाद्यर्थे पृथक् पृथगेव शक्तिरस्तीति युक्तं तेषां नानार्थत्वं तस्य=पुष्पवन्तपदस्य तदर्थद्वये=चन्द्रसूर्ययोरेकैव शक्तिरिति कथं नानार्थत्वं स्यादित्याशङ्क्याह—न चेति । परिहारहेतुमाह—शक्यतेति, चन्द्रत्वसूर्यत्वयोः शक्यतावच्छेदकयोर्यदा भेदोस्ति तदा शक्तिभेदोप्यावश्यक एव । ननु शक्यतावच्छेदभेदेपि शक्त्यैक्ये को दोष इत्याशङ्क्याह—अवच्छेदकेति— अवच्छेद्यायाः शक्तेर्भेदे सत्येव शक्यतावच्छेदकभेदः संभवति अस्ति चात्र चन्द्रत्व-सूर्यत्वयोः शक्यतावच्छेदकयोर्भेद इति शक्तिभेदोप्यावश्यक एव तथा च नानार्थत्वप्रसङ्गो दुर्वार एवेत्यर्थः । विपक्षे बाधकमाह—अन्यथेति, यदि शक्यतावच्छेदकभेदेपि शक्तिभेदो न स्यात्तदा विष्णुत्वादिरूपशक्यतावच्छेदकानां भेदेपि हर्यादिपदशक्तेर्भेदो न स्यात् तेन च हर्यादिपदानां नानार्थत्वमपि न स्यादित्यर्थः ।

अथेत्यादिना प्रदर्शिताशङ्का मीमांसकमतेन प्रथमं समाधत्ते—अत्रेत्यादिना " शक्त्याख्यपद-पदार्थसंबन्धान्तर " इत्यत्र 'पदपदार्थसंबन्धाख्यपदार्थान्तरशक्ति' इत्येव पाठो युक्तः, मीमांसक-मते वाच्यवाचकभावसंबन्धस्यैव शक्तित्वस्वीकारात् शक्तिमात्रस्य पदार्थान्तरत्वस्वीकारादिति । यथेति—अत्र धानकर्मत्वगोत्वयोरुभयोरेव धेनुपदशक्यतावच्छेदकत्वं प्राप्तं पूर्वं च प्राभाकरमतेन धान-कर्मत्वस्यैव तर्कमतेन च गोत्वस्यैव शक्यतावच्छेदकत्वमुक्तं न तूभयोरपीति पूर्वापरविरोधः प्राप्त इत्यत्रैकशक्तिज्ञानजन्योपस्थितिविषयत्वरूपमेव शक्यतावच्छेदकत्वं विज्ञेयम् अस्ति च धेनुपद-जन्योपस्थितौ धानकर्मत्वगोत्वयोरुभयोर्भासमानत्वम्, एकस्यावच्छेदकतयाऽपरस्योपाधित्वेन भानं भवतीत्यन्यदेतत् । व्यासज्यवृत्तित्वादिति—धानकर्मत्वगोत्वोभयव्यासक्तत्वादित्यर्थः । प्रकृते=पुष्प-वन्तपदस्थलेपि चन्द्रत्वसूर्यत्वयोरुभयोरेव व्यासक्तैवैका शक्यतावच्छेदकता स्वीक्रियते न तु प्रत्ये-कपर्याप्तेति न शक्तिभेदो येन नानार्थत्वं वा स्यात् केवलसूर्यत्वादिप्रकारकबोधो वा स्यादित्यर्थः ।

दिप्रकारकबोधे केवलतद्धर्मे शक्यतावच्छेदकतापर्याप्त्यवगाहिज्ञानस्य हेतुत्वात्, चन्द्रत्वसूर्यत्वोभयांशे शक्यतावच्छेदकतापर्याप्त्यवगाहिज्ञानस्य चोभयप्रकारकबुद्धित्वं कार्यतावच्छेदकम् अतस्तादृशशक्तिज्ञानाच्चन्द्रत्वाद्यवच्छिन्नाऽन्वयबोधौपयिकयोग्यताज्ञानाद्यऽसत्त्वे न सूर्यत्वाद्यवच्छिन्नान्वयबोधप्रसङ्गः । नानार्थपदाच्च प्रत्येकधर्मावच्छिन्नस्यापि प्रतीत्या तत्र प्रत्येकमेवाऽवच्छेदकतापर्याप्त्यऽभ्युपगन्तव्यतया शक्यतावच्छेदकताभेदेन शक्तिभेदः ।

अथाऽवच्छेदकताग्राहकमानेनैकधर्मिनिष्ठकाविशेष्यतानिरूपितविशेषणताप्रन्नेष्वेव नानाधर्मेष्ववच्छेदकत्वपर्याप्तिर्गृह्यतेऽतो 'महानसीयो नास्ति' 'वह्निर्नास्ति' इत्याकारक महानसीयत्ववह्नित्वादिविशेषणपुरस्कारेण पृथक् पृथक् प्रतियोगि-

केवलसूर्यत्वादिप्रकारकबोधहेतुभूतस्य शक्तिज्ञानस्य स्वरूपमाह—केवलेति, केवलसूर्यत्वादिप्रकारकबोधं प्रति केवलतद्धर्मे=एकस्मिन्नेव सूर्यत्वादिधर्मे शक्यतावच्छेदकतापर्याप्त्यवगाहि यच्छक्तिज्ञानं तस्यैव हेतुत्वमस्ति यथा सूर्यपदशक्तिज्ञानं केवलसूर्यत्व एव शक्यतावच्छेदकतापर्याप्तिमवगाहते इति तादृशशक्तिज्ञानेन सूर्यपदात् केवलसूर्यत्वप्रकारको बोधो जायते इत्यर्थः । केवलसूर्यत्वादिप्रकारकबोधहेतुभूतोक्तशक्तिज्ञानापेक्षया पुष्पवन्तपदशक्तिज्ञानस्य विशेषमाह—चन्द्रत्वेति, पुष्पवन्तपदशक्तिज्ञानं च चन्द्रत्वसूर्यत्वयोरुभयोरेवैका शक्यतावच्छेदकतापर्याप्तिमवगाहते इति चन्द्रत्वसूर्यत्वोभयप्रकारक एव बोधस्तस्य कार्यमस्तीति तादृशशक्तिज्ञानात्=चन्द्रत्वसूर्यत्वोभयांशे शक्यतावच्छेदकतापर्याप्त्यवगाहिशक्तिज्ञानात् चन्द्रत्वाद्यवच्छिन्नान्वयबोधौपयिकयोग्यताज्ञानाद्यसत्त्वे=चन्द्रादिविषयकशाब्दबोधहेतुभूतयोग्यताज्ञानाद्यसत्त्वे न केवलसूर्यादिविषयकशाब्दबोधप्रसङ्गोऽस्तीत्यर्थः । पुष्पवन्तपदान्नानार्थपदानां विशेषमाह—नानार्थेति, नानार्थाद् हर्यादिपदाच्च प्रत्येकधर्मावच्छिन्नस्यापि=केवलविष्ण्वादेरपि प्रतीत्या=बोधात् तत्र=नानार्थपदस्थले प्रत्येकमेव=केवलविष्णुत्वादावेव शक्यतावच्छेदकतापर्याप्तिरभ्युपगन्तव्यतया विष्णुत्वादिशक्यतावच्छेदकभिन्नशक्यतावच्छेदकताभेदेन शक्तिभेदः शक्तिमदाच्च नानार्थत्वं सिद्धमित्यर्थः ।

ननु चन्द्रत्वसूर्यत्वयोरुभयोरेकशक्यतावच्छेदकतापर्याप्तिरुक्ता न सम्भवति येन पुष्पवन्तपदस्थले शक्तिभेदो न स्यात् यतोऽवच्छेदकताग्राहकमानम्=अवच्छेदकतासाधकमानमभावादिप्रतीतिरेव तथा ह्येकधर्मिनिष्ठा यैका विशेष्यता तादृशविशेष्यतानिरूपितविशेषणता प्राप्तेष्वेव नानाधर्मेष्ववच्छेदकत्वपर्याप्तिर्गृह्यते यथा 'महानसीयवह्निर्नास्ति' इत्यत्र महानसीयवह्निरूपो य एको धर्मी=विशेष्यस्तन्निष्ठ विशेष्यताप्येकैवेति तादृशैकविशेष्यतानिरूपितविशेषणतां प्राप्तयोर्महानसीयत्ववह्नित्वयोरभावीयप्रतियोगितावच्छेदकत्वस्य पर्याप्तिर्गृह्यते न तु नानाधर्मिनिष्ठनानाविशेष्यतानिरूपितविशेषणताप्रन्नेष्वपि नानाधर्मेषु अत एव 'महानसीयो नास्ति' 'वह्निर्नास्ति' इत्याकारक समूहालम्बनात्मक महानसीयत्वविशेषणपुरस्कारेण पृथग् जायमान वह्नित्वविशेषणपुरस्कारेण च पृथग् जायमान प्रतियोगिविषयक ज्ञानं महानसीयत्ववह्नित्वयोरुभयो पर्याप्ता

विषयकं ज्ञानं महानसीयत्ववह्नित्वादिपर्याप्तप्रतियोगितावच्छेदकताकं विशेषाभावं नाऽवगाहते अपि तु शुद्धवह्नित्वावच्छिन्नाभावमेवेति कथम् 'दिवाकरनिशाकर-शक्तं पुष्पवन्तपदम्' इत्यादिशक्तिग्रहे चन्द्रत्वसूर्यत्वोभयस्मिन् शक्यतावच्छेदकत्वपर्याप्तिभानम्– तत्र धर्मिणोश्चन्द्रसूर्ययोर्भेदेन तन्निष्ठविशेष्यताया ऐक्यासंभवादिति चेत् ?

न– यतो यत्रावच्छेदकीभूतव्यासज्यवृत्तिधर्मान्तरधर्मितावच्छेदकतया धर्मद्वयादेर्भानं तत्र विभिन्नधर्मिविशेषणतापन्नेष्वपि तावद्धर्मेष्वेकावच्छेद्यतानिरूपितावच्छेदकतापर्याप्तिः प्रतीयते कथमन्यथा 'घटपटौ न स्तः' इत्याकारको-

---

प्रतियोगितावच्छेदकता यस्य तादृश विशेषाभावम्='महानसीयवह्निर्नास्ति' इत्याकारकमभावं नाव-गाहते=न विषयीकरोति किं तु शुद्धवह्नित्वावच्छिन्नाभावमेव नाम 'वह्निर्नास्ति' इतिज्ञान केवलवह्नि-त्वावच्छिन्नप्रतियोगिताकाभावमवगाहते 'महानसीयो नास्ति' इति च ज्ञानं केवलमहानसीयत्वाव-च्छिन्नप्रतियोगिताकाभावमेवावगाहते यदि च नानाधर्मिनिष्ठनानाविशेष्यतानिरूपितविशेषणतापन्ने-ष्वपि नानाधर्मेष्वेकावच्छेदकत्वपर्याप्तिर्गृह्येत तदा महानसीयरूपधर्मिनिष्ठविशेष्यतानिरूपितविशे-षणतां प्राप्त यद महानसीयत्व वह्निरूपधर्मिनिष्ठविशेष्यतानिरूपितविशेषणतां प्राप्त यद् वह्नित्वं तयोरुभयोरप्येकाभावीयप्रतियोगितावच्छेदकत्वपर्याप्तिर्गृह्येत तथा च 'महानसीयो नास्ति' 'वह्निर्नास्ति' इतिसमूहालम्बनात्मक ज्ञानम् 'महानसीयवह्निर्नास्ति' इत्याकारक विशेषाभावमप्यव-गाहेत तथा च वह्निमति पर्वते वह्निशून्ये च महानसे 'महानसीयवह्निर्नास्ति' इतिविशिष्टाभावप्र-तीतेर्जायमानत्वात् 'महानसीयो नास्ति' 'वह्निर्नास्ति' इतिसमूहालम्बनात्मकाभावप्रतीतिरपि जायेत न चैवमिष्टमिति तदुपपत्त्यर्थमेकधर्मिनिष्ठैकविशेष्यतानिरूपितविशेषणतापन्नेष्वेव नानाधर्मे-ष्ववच्छेदकत्वपर्याप्तिः स्वीकार्या तथा च पुष्पवन्तपदस्थलेपि धर्मिणोश्चन्द्रसूर्ययोर्भेदेन तन्निष्ठवि-शेष्यताया ऐक्यासंभवात् तादृशविभिन्नविशेष्यतानिरूपितविशेषणतां प्राप्तयोश्चन्द्रत्वसूर्यत्वयो-रपि कथं शक्यतावच्छेदकत्वस्य पर्याप्तिः स्यात् तदभावे च पुष्पवन्तपदात् केवलसूर्यत्वादिप्रकार-कबोधो दुर्वार एवेत्याशङ्कते– अथेति ।

परिहरन्ति– नेति, प्रकृतेऽवच्छेदकीभूत व्यासज्यवृत्ति=चन्द्रसूर्योभयव्यासक्त यद् द्वित्व वोभ-यत्वं वा धर्मान्तर तादृशधर्मान्तरनिरूपिता या चन्द्रसूर्योभयनिष्ठा धर्मिता तादृशधर्मितावच्छेद-कतया धर्मद्वयादेः=चन्द्रत्वसूर्यत्वादिनानाधर्माणा प्रतीतिर्भवतीति चन्द्रसूर्यरूपविभिन्नधर्मिणोरपि विशेषणतापन्नयोश्चन्द्रत्वसूर्यत्वरूपधर्मयोरेका या शक्यतानिष्ठाऽवच्छेद्यता तादृशावच्छेद्यतानिरू-पितावच्छेदकतायाः पर्याप्तिः प्रतीयते इत्यन्वयः, 'महानसीयो नास्ति' 'वह्निर्नास्ति' इत्यत्र त्ववच्छेदकीभूतव्यासज्यवृत्तिधर्मान्तरधर्मितावच्छेदकतया महानसीयत्ववह्नित्वयोर्भान न भवति– द्वित्वादेरवच्छेदकत्वाभावादिति न तत्र महानसीयत्ववह्नित्वयोरभावीयप्रतियोगितावच्छेदकत्वपर्याप्तिः संभवति । विपक्षे बाधकमाह–कथमिति । अन्यथा=यदि यत्रावच्छेदकीभूतव्यासज्यवृत्तिधर्मा-

भयत्वावच्छिन्नाभावप्रतीतौ घटपटादिरूपप्रतियोगिविषयताया भेदेऽप्यभावीयविषयताया ऐक्येन समूहालम्बनविलक्षणायामुभयत्वादिधर्मितावच्छेदकतया भासमानघटत्वपटत्वादिषु तादृशाभावप्रतियोगितावच्छेदकत्वपर्याप्तिभानम् ? ।

एवं च ' दिवाकरनिशाकरयोः शक्तमेतत्पदम् ' इत्याकारकशक्तिग्रहे शक्तिविषयताया ऐक्येन समूहालम्बनविलक्षणे उभयत्वधर्मितावच्छेदकतापन्नचन्द्रत्वसूर्यत्वयोः शक्यतावच्छेदकत्वपर्याप्तिभानमविरुद्धमिति न दोषः ।

न चैवमुभयाभावप्रतियोगितायामुभयत्वस्यैव प्रकृते उभयत्वस्याप्यवच्छेदकत्वधर्मितावच्छेदकतया धर्मद्वयादेर्भान तत्रापि विभिन्नधर्मिविशेषणतापन्नेषु तावद्धर्मेष्वेकावच्छेद्यतानिरूपितावच्छेदकतापर्याप्तिर्न प्रतीयेत तदा 'घटपटौ न स्त ' इत्यत्र घटपटरूपप्रतियोगिनोर्विषयताया भेदेऽप्यभावीयविषयताया ऐक्येन 'घटो नास्ति' 'पटो नास्ति' इत्याकारकसमूहालम्बनात्मकप्रतीत्यपेक्षया वैलक्षण्यमस्ति—उक्तसमूहालम्बनात्मकप्रतीतावभावीयविषयताया अप्यैक्याभावात् तथा च समूहालम्बनविलक्षणायाम् 'घटपटौ न स्त ' इत्याकारकोभयत्वावच्छिन्नाभावप्रतीतौ नाम घटत्वपटत्वोभयधर्मावच्छिन्नप्रतियोगिताकाभावप्रतीतौ उभयत्वरूपधर्मनिरूपिता या घटपटोभयनिष्ठा धर्मिता तादृशधर्मितावच्छेदकतया भासमानयोर्घटत्वपटत्वयोस्तादृशाभावप्रतियोगितावच्छेदकत्वस्य=उभयत्वावच्छिन्नाभावप्रतियोगितावच्छेदकत्वस्य पर्याप्तिर्भासेत न चैवमस्ति तथा च यथा 'घटपटौ न स्त ' इत्यत्र घटत्वपटत्वयोर्घटपटरूपविभिन्नधर्मिविशेषणतापन्नयोरप्यभावीयप्रतियोगितावच्छेदकत्वस्य पर्याप्तिर्भासते तयोरुभयत्वधर्मितावच्छेदकतया भासमानत्वात् तथा 'दिवाकरनिशाकरशक्तं पुष्पवन्तपदम्' इत्याकारकशक्तिग्रहेऽपि चन्द्रसूर्यरूपविभिन्नधर्मिविशेषणतापन्नयोरपि चन्द्रत्वसूर्यत्वयोः शक्यतावच्छेदकतापर्याप्तिभानं युक्तमेव— अत्र चन्द्रत्वसूर्यत्वयोरप्युभयत्वधर्मितावच्छेदकतया भासमानत्वादिति न शक्तिभेदापत्तिर्न चैकधर्मप्रकारकशाब्दबोधापत्तिरित्यर्थः ।

उपसंहरति—एवं चेति । एतत्पदम्=पुष्पवन्तपदम् । ' दिवाकरशक्तं तत्पदम् ' ' निशाकरशक्तं तत्पदम् ' इत्याकारकसमूहालम्बनात्मकशक्तिग्रहे तु शक्तिविषयताया ऐक्यं न भवति दिवाकरनिरूपितशक्तिविषयताया भिन्नत्वान्निशाकरनिरूपितशक्तिविषयतायाश्च पदनिष्ठाया भिन्नत्वात्, ' दिवाकरनिशाकरयोः शक्तं पुष्पवन्तपदम् ' इत्याकारकविशिष्टशक्तिग्रहे दिवाकरनिशाकरोभयनिरूपितैकैव शक्तिविषयता पुष्पवन्तपदे भासेत समूहालम्बनविलक्षणे विशिष्टशक्तिग्रहे उभयत्वधर्मनिरूपिता या चन्द्रसूर्योभयनिष्ठा धर्मिता तादृशधर्मिताया अवच्छेदकतापन्नयोश्चन्द्रत्वसूर्यत्वयोः शक्यतावच्छेदकत्वपर्याप्तिभानं न विरुद्धमित्यर्थः ।

ननु यदि चन्द्रत्वसूर्यत्वयोरत्रोभयत्वधर्मितावच्छेदकत्वं स्वीक्रियते तदा यथा ' घटपटौ न स्त ' इत्यत्रोभयत्वस्याप्युभयाभावप्रतियोगितावच्छेदकत्वमस्ति तथा प्रकृतेऽपि=पुष्पवन्तपदस्थलेऽप्युभयत्वस्यावच्छेदककोटिप्रवेशप्रसङ्ग =शक्यतावच्छेदकत्वं स्यादित्याशङ्क्याह— न चैवमिति ।

कोटिप्रवेशप्रसङ्ग इति वाच्यम्, अभावबुद्धौ प्रतियोग्यंशे उपलक्षणस्याऽप्रकारत्व-नियमादुभयत्वस्य प्रतियोगितावच्छेदकत्वध्रौव्यात्. शक्तिग्रहे च शक्यांशे उपलक्षणस्योभयत्वस्य प्रकारत्वोपगमेन तस्य शक्यतानवच्छेदकत्वात् ।

अस्तु वा प्रकृते उभयत्वसहितमेव चन्द्रत्वसूर्यत्वोभयं शक्यतावच्छेदकम् 'द्वौ' इत्यत्रेव 'पुष्पवन्तौ' इत्यत्रापि प्रकृतिविभक्तिभ्यामुपस्थापितस्य द्वित्वस्य सकृदेव भानम् । विरुद्धयोरेकावच्छेदकत्वपर्याप्तिरपि घटत्वपटत्वोद्यारुभयाभावप्रतियोगितावच्छेदकत्वपर्याप्तिवत् प्रकृते न विरुध्यते ।

---

परिहारहेतुमाह– अभावेति, अभावबुद्धौ=' घटपटौ न स्तः ' इत्याद्यभावज्ञाने । " प्रतियोगि-विशेषिताऽभावबुद्धिर्विशिष्टवैशिष्ट्यमर्यादा नातिशेते " इतिन्युत्पत्त्याऽभावज्ञाने भासमानानां सर्वेषामपि धर्माणा प्रतियोगितावच्छेदकत्व भवत्येव उपलक्षणस्य चाभावज्ञाने प्रकारत्व न भवतीति यदि ' घटपटौ न स्त ' इत्यत्रोभयत्वमुपलक्षण भवेत्तदा प्रतियोगितावच्छेदक न स्याद् भवति च प्रतियोगितावच्छेदक तस्मादुक्ताभावज्ञाने उभयत्वस्य प्रतियोग्यंशे उपलक्षणत्व नास्ति किं तु विशेषणत्वमेव तथा चोभयत्वस्य प्रतियोग्यंशे प्रकारत्वमवच्छेदकत्व च प्राप्त न चैव नियम शक्तिग्रहेऽस्ति येन ' दिवाकरनिशाकरयो शक्त पुष्पवन्तपदम् ' इत्याकारक-शक्तिग्रहे भासमानमुभयत्व शक्यांशे विशेषणम्=शक्यतावच्छेदक स्यात् तथा च शक्तिग्रहे उपलक्षण यदुभयत्व तस्य प्रकारत्व सभवति शक्तिग्रहे उपलक्षणस्यापि प्रकारत्वस्वीकारादिति तस्य=उभयत्वस्य शक्यतावच्छेदकत्व न भवति– उपलक्षणीभूतस्यैव तस्य प्रकारत्वस्वीकाराद् विशेषणीभूतप्रकारस्यैवावच्छेदकत्वनियमादिति नोभयत्वस्य शक्यतावच्छेदककोटिप्रवेशप्रसङ्ग इत्यर्थः । विशेषणस्यापि क्वचित् प्रकारत्व भवति यथा अभावज्ञाने, उपलक्षणस्यापि प्रकारत्व भवति यथा शक्तिग्रहे प्रदर्शितम्, किं चाऽवच्छेदकत्वसबन्धेनापि प्रकारत्व भवति यथाऽभावज्ञाने, सामानाधिकरण्यसबन्धेनापि प्रकारत्व भवति यथा शक्तिग्रहे तत्र ययोश्चन्द्रसूर्ययो शक्यतास्ति तत्रैवोभयत्वमप्यस्तीति सामानाधिकरण्येन प्रकारत्वम् ।

अभ्युपगम्याह– अस्तु वेति, एव चोभयत्व चन्द्रत्व सूर्यत्वमिति त्रितयमेव शक्यतावच्छेदक जातम् । नन्वेव पुष्पवन्तपदस्योभयत्वावच्छिन्ने शक्त्या ' पुष्पवन्तौ ' इत्यत्र प्रकृत्याप्युभयत्व-भान स्यात् विभक्त्यापि च स्यादित्युभयत्वस्य द्विधा भानप्रसङ्ग इत्याशङ्क्याह– द्वाविति, यथा ' द्वौ ' इत्यत्र प्रकृत्याप्युभयत्वस्योपस्थितिर्भवति विभक्त्यापि च शाब्दबोधे सकृदेव भान भवति तथैव ' पुष्पवन्तौ ' इत्यत्रापि ध्येयम् । ननु ' महानसीयवह्निर्नास्ति ' इत्यत्रैकस्मिन् वह्नौ महानसीयत्व वह्नित्व च सभवतीति तयो परस्पर विरोधाभावात् तयोरभावीयैकप्रतियोगितावच्छेदकत्वस्य पर्याप्तिः सभवति ' पुष्पवन्तौ स्त ' इत्यत्र चन्द्रत्वसूर्यत्वे तु परस्पराभाव व्याप्यत्वात् परस्पर विरुद्धे एवेति कथ तयोरेकशक्यतावच्छेदकत्वस्य पर्याप्ति स्यादित्याशङ्क्याह– विरुद्धयोरिति, यथा घटत्वपटत्वे अपि परस्पराभावव्याप्यत्वात् परस्पर विरुद्धे एवाऽथापि ' घट-

न च ' घटपटौ न स्तः ' इत्यत्रोभयत्वे एव प्रतियोगितावच्छेदकत्वं भासते
न तु विशिष्टघटत्वपटत्वादाविति वाच्यम्, केवलोभयत्वे तादृशाभावप्रतियोगिताव-
च्छेदकतायाः पर्याप्तौ यत्किंचिदुभयवति तादृशाभावप्रतीत्यनुपपत्तेः ।
न च सामानाधिकरण्यसंबन्धेन घटत्वपटत्वरूपावच्छेदकधर्मेण व्यावृत्तोभय-
त्वविशेषस्यैव तत्रावच्छेदकत्वं प्रतीयते इति वाच्यम्, तेन प्रकारेण तत्रोभयत्वस्या-
ऽभानात्, तत्तद्रूपाणां तत्तद्धर्मिविशेषणतयैव भानात्, अतिप्रसक्तधर्मप्रकारेण

पटौ न स्तः ' इत्यत्र परस्परविरुद्धयोर्घटत्वपटत्वयोः प्रतियोगितावच्छेदकत्वस्य पर्याप्तिः स्वीक्रि-
यते तथा प्रकृते चन्द्रत्वसूर्यत्वयोरपि शक्यतावच्छेदकत्वपर्याप्तिर्न विरुद्धेत्यर्थः ।
शङ्कते— न चेति । अनिरस्तः पूर्वपक्षः । परिहारमाह— केवलेति, यदि ' घटपटौ न स्तः '
इत्यत्र केवलोभयत्वे एवोभयाभावप्रतियोगितावच्छेदकताया पर्याप्तिः स्यात्तदा यत्र गवाश्वादि-
रूपमपि यत् किंचिदुभयं स्यात् तत्रोभयपदार्थसत्त्वेनोभयत्वावच्छिन्नप्रतियोगिताकाभावस्या-
सम्भवात् तादृशाभावप्रतीतिः=' घटपटौ न स्तः ' इत्याकारकाभावप्रतीतिर्नोपपद्येत भवति च
तत्र ' घटपटौ न स्तः ' इत्याकारकाभावप्रतीतिरिति तत्र घटत्वपटत्वयोरपि प्रतियोगि-
तावच्छेदकत्वपर्याप्तिः स्वीकार्या तथा च यत्किंचिदुभयवत्यपि देशे घटपटयोरभावात्
' घटपटौ न स्तः ' इत्याकारा घटत्वपटत्वोभयावच्छिन्नप्रतियोगिताकाभावस्य प्रतीतिः-
रुपपद्यते इत्यर्थः ।

ननु ' घटपटौ न स्तः ' इत्यत्र घटपटयोरुभयत्वमपि वर्तते घटत्वपटत्वे अपीति सामानाधिकर-
ण्यसम्बन्धेन घटत्वपटत्वे उभयत्वावच्छेदके जाते उभयत्वं च घटपटोभयावच्छेदकमेवेति घटत्व-
पटत्वे अवच्छेदकावच्छेदके जाते तथा च घटत्वपटत्वरूपेणावच्छेदकतावच्छेदकधर्मेण व्यावृ-
त्तस्य=अवच्छिन्नस्यैवोभयत्वविशेषस्यावच्छेदकत्वम्=प्रतियोगितावच्छेदकत्वं प्रतीयते न तु सा-
मान्यत एवोभयत्वस्य येन यत्किंचिदुभयवति देशे ' घटपटौ न स्तः ' इत्यभावप्रतीतिर्नोपप-
द्येत, उभयत्वविशेषस्य तत्र प्रतियोगितावच्छेदकत्वे तु यत् किंचिदुभयवति देशे उभयत्वसामान्याव-
च्छिन्नप्रतियोगिताकाभावप्रतीतेरनुपपत्तावप्युभयत्वविशेषावच्छिन्नप्रतियोगिताकाभावप्रतीतौ बाध-
काभावात् ' घटपटौ न स्तः ' इत्यभावप्रतीतिर्नाऽनुपपन्नेत्याशङ्क्याह— न चेति । परिहार-
माह—तेनेति, तत्र=' घटपटौ न स्तः ' इत्यत्रोभयत्वमुभयत्वेनैव रूपेण भासते न तु तेन प्रका-
रेण नाम घटत्वपटत्वावच्छिन्नत्वेन रूपेण येन तादृशोभयत्वविशेषस्य प्रतियोगितावच्छेदकत्वमुप-
पद्येतेत्यर्थः । उक्ते हेतुमाह— तत्तद्रूपाणामिति, ' घटपटौ न स्तः ' इत्यत्र तत्तद्रूपाणाम्=घटत्व-
पटत्वयोस्तत्तद्धर्मिविशेषणतयैव=घटपटलक्षणधर्मिविशेषणतयैव भानं भवति न तूभयत्वविशेषणतया
येन घटत्वपटत्वावच्छिन्नत्वेनोभयत्वस्य भानमुपपद्येतेत्यर्थः । ननूभयत्वत्वेनैव रूपेण भासमाने
उभयत्वे प्रतियोगितावच्छेदकतापर्याप्तिरस्तु को दोष इत्याशङ्क्याह—अतिप्रसक्तेति, उभयत्वं

भासमाने चाऽवच्छेदकतापर्याप्तिभानानुपगमात् । तत्रोभयत्वविशेषेऽभावप्रतियोगितावच्छेदकत्वपर्याप्त्युपगमे अत्राप्युभयत्वविशेषे शक्यतावच्छेदकत्वपर्याप्तिसंभवाच्चन्द्रत्वसूर्यत्वयोरवच्छेदकतावच्छेदकतयैव शाब्दबोधे भानोपपत्तिः ।

न च शक्यतावच्छेदकतावच्छेदकमऽवच्छेदकविशेषणतयैव भासते इति चन्द्रत्वसूर्यत्वयोस्तथात्वे चन्द्रसूर्यांशे प्रकारतया शाब्दबोधे भानानुपपत्तिरितिवाच्यम्, तयोः शक्यतावच्छेदकतावच्छेदकत्वेपि शक्तिग्रहेऽवच्छेदकाश्रयचन्द्रसूर्यविशेषणतयेव भानाच्छाब्दबोधेपि तद्विशेषणतया भानसंभवात् ।

अथ शक्तिग्रहे साक्षाच्छक्यतानवच्छेदकस्य तदुभयस्य शक्यचन्द्रसूर्योभयांशे साक्षात् प्रकारतया भानं न संभवतीति चेत् ? ' घटपटौ न स्तः ' इत्यादौ घट-

---

हि सकलोभयपर्य्यवृत्ति न तु केवलघटपटमात्रवृत्त्युभयत्वमात्रवृत्तीत्यऽतिप्रसक्तम्, अतिप्रसक्तधर्मप्रकारेण=उभयत्वत्वेन रूपेण भासमाने चोभयत्वे प्रतियोगितावच्छेदकतापर्याप्तिर्न स्वीक्रियते—अतिप्रसक्तधर्मरूपेण भासमानस्य व्यवच्छेदकत्वासंभवादित्यर्थः । अभ्युपगम्याह— तत्रेति, तत्र= ' घटपटौ न स्तः ' इत्यत्र, उभयत्वविशेषे=घटत्वपटत्वविशिष्टोभयत्वे । अत्र=' दिवाकरनिशाकरयोः शक पुष्पवन्तपदम् ' इतिशक्तिग्रहे उभयत्वविशेषे=सामानाधिकरण्येन चन्द्रत्वसूर्यत्वविशिष्टोभयत्वे । नन्वेव शाब्दबोध चन्द्रत्वसूर्यत्वयो. शक्यतावच्छेदकतावच्छेदकतयैव भान स्यान्न तु शक्यतावच्छेदकतयेत्याशङ्क्य तथैव स्वीकुर्वन्नाह—चन्द्रत्वेति । अत्र शक्यतावच्छेदकता उभयत्वविशेषे विज्ञेया चन्द्रत्वसूर्यत्वयोरुभयत्वावच्छेदकत्वात् शक्यतावच्छेदकतावच्छेदकत्वं प्राप्तमिति ।

पुनराशङ्कते— न चेति । अवच्छेदकविशेषणतया=शक्यतावच्छेदकविशेषणतया । तथात्वे= शक्यतावच्छेदकतावच्छेदकत्वे । चन्द्रत्वसूर्यत्वयोः शक्यतावच्छेदकतावच्छेदकत्वे उभयत्वविशेषविशेषणतयैव शाब्दबोधे भान संभवति न तु चन्द्रसूर्यविशेषणतयेत्यर्थः । परिहारमाह— तयोरिति, तयोः=चन्द्रत्वसूर्यत्वयोः । अवच्छेदकमुभयत्वम् । तद्विशेषणतया=चन्द्रसूर्यविशेषणतया । एवं च चन्द्रत्वसूर्यत्वयोः शक्यतावच्छेदकत्वं शक्यतावच्छेदकतावच्छेदकत्वं च भातम् । शाब्दबोधेपीति— शक्तिज्ञानशाब्दबोधयोः समानप्रकारकत्वनियमादिति विज्ञेयम् ।

ननु यदि शक्तिग्रहे चन्द्रत्वसूर्यत्वयोः साक्षाच्छक्यतावच्छेदकत्वं स्यात्तदा शक्यभूतचन्द्रसूर्ययोः साक्षात् प्रकारतया भानं स्यादपि न चैवमस्ति शक्तिग्रहे उक्तोभयत्वविशेषस्यैव साक्षाच्छक्यतावच्छेदकत्वस्वीकारात् चन्द्रत्वसूर्यत्वयोश्च तादृशोभयत्वे एव प्रकारत्वस्वीकारादित्याशङ्कते—अथेति । तदुभयस्य=चन्द्रत्वसूर्यत्वयोः । प्रतिवन्द्युत्तरमाह— घटपटाविति, ' घटपटौ न स्तः ' इत्यत्र साक्षात् प्रतियोगितावच्छेदकत्वमुभयत्वविशेषस्यैव स्वीकृतं घटत्वपटत्वयोश्च तादृशोभयत्वावच्छेदकत्वेन प्रतियोगितावच्छेदकतावच्छेदकत्वमेवेति घटत्वपटत्वयोरपि प्रतियोगितावच्छेदकत्वेन

त्वपदत्वयोः साक्षात् प्रतियोगितावच्छेदकत्वमन्तरेण प्रतियोगिविशेषणतया भानासम्भवस्तुल्य एवेत्याहुः ।

ज्ञानशक्तिवादिनस्तु— चन्द्रत्वसूर्यत्वोभयप्रकारकज्ञानमेव पुष्पवन्तपदशक्यम्, 'पुष्पवन्तपदमुभयप्रकारकज्ञाने शक्तम्' इत्याकारकशक्तिग्रहस्य तादृशज्ञानत्वमेव कार्यतावच्छेदकमितिव्युत्पत्तिमतः पुरुषस्य नैकैकबोधापत्तिः, अतादृशस्य च भवत्येव तादृशो बोधः ।

न चैवमपि 'पुष्पवन्तपदं चन्द्रत्वप्रकारकज्ञाने शक्तम्' इत्यादिबोधस्य प्रमात्वात् शक्तिभ्रमं विना प्रत्येकशाब्दबोधानुदयः' इतिकथमुपपद्यत इति वाच्यम्, केवलचन्द्रत्वादिप्रकारकबोधे तत्तत्प्रकारकबोधत्वांशे शक्तिनिरूपकतावच्छेद-

---

( प्रतियोगिविशेषणत्वेन ) भानं न स्यादिति तुल्यो दोषः, यदि चात्र घटत्वपटत्वयोः प्रतियोगितान-
( प्रतियोगिविशेषणत्वेन ) भानं न विरुद्धं तदा
-वच्छेदकतावच्छेदकत्वेपि प्रतियोगिविशेषणतया ( प्रतियोगितावच्छेदकतया ) भानं न विरुद्धं तदा
पुष्पवन्तपदस्थलेपि चन्द्रत्वसूर्यत्वयोः शक्यतावच्छेदकतावच्छेदकत्वेपि शक्यचन्द्रसूर्यविशेषणतया
( शक्यतावच्छेदकतया ) भानं न विरुद्धमित्यर्थः । तथा च शक्यतावच्छेदकतावच्छेदकत्वेपि शक्य-
तावच्छेदकत्वमस्त्येव— शक्यवृत्तित्वादिति सारः । " इत्याहुः " इत्यस्य पूर्वोक्तेन " मीमांसका-
नुयायिनः " इत्यनेनान्वयः ।

पुष्पवन्तपदात् केवलसूर्यत्वादिप्रकारकबोधापत्तिमाशङ्किताः सम्प्रति ज्ञानशक्तिवादिमतेन
समाधत्ते—ज्ञानशक्तीति, पदार्थज्ञाने पदानां शक्तिर्न तु पदार्थेषु जनके ज्ञाने निरूपितशक्तेरेव
-युक्तत्वात् पदैश्च पदार्थज्ञानस्यैव जायमानत्वादिति ज्ञानशक्तिवादिनामभिप्रायः । तादृशज्ञानत्व-
मू=चन्द्रत्वसूर्यत्वोभयप्रकारकज्ञानत्वम् । नैकैकबोधापत्तिः=केवलसूर्यत्वादिप्रकारकबोधस्य पुष्प-
वन्तपदादापत्तिर्नास्तीत्यर्थः । अतादृशस्य=उक्तव्युत्पत्तिरहितस्य च पुरुषस्य। तादृशः =केवलसू-
र्यत्वादिप्रकारको बोधः पुष्पवन्तपदाद् भवत्येव । स्पष्टं सर्वम् ।

ननु 'पुष्पवन्तपदं चन्द्रत्वसूर्यत्वोभयप्रकारकज्ञाने शक्तम्' इत्याकारकशक्तिग्रहे जातेपि पुष्प-
वन्तपदस्योभयप्रकारकज्ञाने शक्तत्वे चन्द्रत्वप्रकारकज्ञाने शक्तत्वमपि यथार्थमथिति 'पुष्पवन्तपद-
चन्द्रत्वप्रकारकज्ञाने शक्तम्' इत्यादिबोधस्यापि प्रमात्वात् तादृशबोधबलादमुष्य तस्यापि पुष्पवन्त-
पदात् प्रत्येकशाब्दबोधः =केवलचन्द्रत्वादिप्रकारकबोधः स्यादेवेति 'शक्तिभ्रमं विना प्रत्येकशाब्द-
बोधो न भवति' इति कथमुपपद्येतेत्याशङ्क्याह— न चैवमिति । परिहारहेतुमाह—केवलेति, केव-
लचन्द्रत्वादिप्रकारकबोधे=केवलचन्द्रत्वादिप्रकारकबोधं प्रति तत्तत्प्रकारकबोधत्वांशे=चन्द्रत्वादि-
प्रकारकबोधत्वे यः शक्तिनिरूपकतावच्छेदकतापर्याप्तिग्रहस्तस्य हेतुत्वं स्वीक्रियते यथा च तर्क-
मते शक्तिनिरूपकः पदार्थस्तथा ज्ञानशक्तिवादिनां मते शक्तिनिरूपको बोधः ( ज्ञानम् ) एव—
येन पदेन यादृशबोधो भवति तस्य पदस्य तादृशबोधे शक्तिग्रहणात् तथा च बोधे बोधत्वं

कतापर्याप्तिग्रहस्य हेतुत्वात्, प्रकृते तूभयप्रकारकबोधत्वांशे शक्तिनिरूपकतावच्छेदकत्वपर्याप्त्यभ्युपगमात्, तादृशस्य 'चन्द्रत्वप्रकारकज्ञाने शक्तम्' इत्यादिज्ञानस्य भ्रमत्वनियमादित्याहुः ।

ईश्वरेच्छारूपस्य संकेतस्य शक्तित्वमङ्गीकर्तृसिद्धान्तिपक्षे– 'पुष्पवन्तपदाच्चन्द्रत्वावच्छिन्नविषयकसूर्यत्वावच्छिन्नविषयकशाब्दबोधो भवतु' इत्याकारक एव तादृशपदे भगवत्संकेतः केवलचन्द्रत्वाद्यवच्छिन्नविषयकबोधश्च न तत्पदजन्यत्वेन तद्विषय इति तादृशपदान्न तथाविधो बोधः ।

न च तादृशपदजन्यत्वेन केवलचन्द्रत्वाद्यवच्छिन्नविषयकबोधस्य संकेताविषयत्वेपि चन्द्रत्वाद्यवच्छिन्नविषयकबोधविषयकत्वेन संकेतविषयकग्रहस्य चन्द्र-

---

वर्तते शक्तिनिरूपकतापि वर्तत इति बोधत्वे शक्तिनिरूपकतावच्छेदकता प्राप्ता तत्र केवलचन्द्रत्वप्रकारबोधत्वे चन्द्रपदनिष्ठशक्तिनिरूपकतावच्छेदकताया एव पर्याप्तिरस्ति न पुष्पवन्तपदनिष्ठशक्तिनिरूपकतावच्छेदकताया अपीति केवलचन्द्रत्वप्रकारकबोधश्चन्द्रपदादेव सम्भवति न तु पुष्पवन्तपदादपि, प्रकृते=पुष्पवन्तपदस्थले तूभयप्रकारकबोधत्वांशे=चन्द्रत्वसूर्यत्वोभयप्रकारकबोधत्वे एव पुष्पवन्तपदनिष्ठशक्तिनिरूपकतावच्छेदकतापर्याप्तिरभ्युपगम्यते न तु केवलचन्द्रत्वादिप्रकारकबोधत्वेऽपीति न पुष्पवन्तपदात् केवलचन्द्रत्वादिप्रकारकबोधापत्तिः तादृशबोधत्वे उक्तपर्याप्तिग्रहस्तादृशबोधस्यैव तेन पदेन स्वीकारादिति । तादृशस्य=उक्तरूपस्य 'पुष्पवन्तपदं चन्द्रत्वप्रकारकज्ञाने शक्तम्' इत्यादिज्ञानस्य भ्रमत्वनियमादेतादृशभ्रमात्मकशक्तिज्ञानाच्च भ्रमात्मक एव केवलचन्द्रत्वप्रकारकबोधः सम्भवति न प्रमात्मक इत्यर्थः । ''इत्याहुः'' इत्यस्योक्तेन ''ज्ञानशक्तिवादिनः'' इत्यनेनान्वयः ।

पुष्पवन्तपदात् केवलचन्द्रत्वादिप्रकारकबोधापत्तिमाशङ्किता सम्प्रति तर्कमतेन समाधत्ते– ईश्वरेति । तादृशपदे=पुष्पवन्तपदे विषयत्वं सप्तम्यर्थः । तत्पदजन्यत्वेन=पुष्पवन्तपदजन्यत्वेन रूपेण । तद्विषयः=पुष्पवन्तपदविषयकभगवत्संकेतविषयः । तादृशपदात्=पुष्पवन्तपदात् । तथाविधः=केवलचन्द्रत्वाद्यवच्छिन्नविषयको बोधः । चन्द्रत्वसूर्यत्वोभयप्रकारकस्यैव बोधस्य पुष्पवन्तपदजन्यत्वेन भगवत्संकेतविषयत्वात् पुष्पवन्तपदादुभयप्रकारक एव बोधो जायते न तु केवलचन्द्रत्वादिप्रकारकोपि तस्य पुष्पवन्तपदजन्यत्वेन भगवत्संकेताऽविषयत्वादिति सारः ।

ननु केवलचन्द्रत्वाद्यवच्छिन्नविषयकबोधस्य तादृशपदजन्यत्वेन=पुष्पवन्तपदजन्यत्वेन रूपेण भगवत्संकेताऽविषयत्वेपि सूर्यत्वाद्यवच्छिन्नविषयको यो बोधस्तादृशबोधविषयको यः 'पुष्पवन्तपदात् सूर्यत्वाद्यवच्छिन्नविषयको बोधो भवतु' इत्याकारको भगवत्संकेतस्तादृशसंकेतग्रहादिघटिता या सूर्यत्वाद्यवच्छिन्नविषयकबोधसामग्री तस्यामसत्यामपि चन्द्रत्वादिप्रकारकबोधजनकस्य चन्द्रत्वाद्यवच्छिन्नविषयको यो बोधस्तादृशबोधविषयको यः 'पुष्पवन्तपदाच्चन्द्रत्वाद्यवच्छिन्नवि-

त्वादिप्रकारकबोधजनकस्य सूर्यत्वाद्यवच्छिन्नविषयकबोधविषयकत्वेन संकेतग्रहा-
दिघटितसूर्यत्वाद्यवच्छिन्नविषयकबोधसामग्र्यामसत्यामपि संभवेन तद्बलाद्-
भ्रान्तस्य केवलचन्द्रत्वाद्यवच्छिन्नविषयकबोधो दुर्वार एवेतिवाच्यम्, तत्पदजन्य-
केवलचन्द्रत्वादिप्रकारकबोधे तत्पदजन्यकेवलचन्द्रत्वाद्यवच्छिन्नविषयकबोधत्व-
पर्याप्तविषयतावच्छेदकताकत्वप्रकारकसंकेतविषयकज्ञानस्य हेतुत्वात्. पुष्पवन्त-
पदजन्यत्वघटितभगवत्संकेतविषयतावच्छेदकशरीरे च सूर्यत्वावच्छिन्नविषयकत्व-
चन्द्रत्वावच्छिन्नविषयकत्वयोर्द्वयोरेकत्र निवेशात्. तत्पदजन्यप्रत्येकधर्मावच्छिन्न;

---

न्यको बोधो भवतु ' इत्याकारकभगवत्संकेतस्तादृशसंकेतविषयकज्ञानस्य सम्भवेन तद्बलात्=एता-
दृशसंकेतविषयकज्ञानबलाद्भ्रान्तस्यापि केवलचन्द्रत्वाद्यवच्छिन्नविषयको बोध पुष्पवन्तपदाद्
दुर्वार एवेत्याशङ्क्याह– न चेति। यदा हि चन्द्रत्वसूर्यत्वोभयप्रकारकबोधः पुष्पवन्तपदजन्यत्वेन
भगवत्संकेतविषयस्तदा चन्द्रत्वादिप्रकारकबोधोपि सुतरां पुष्पवन्तपदजन्यत्वेन भगवत्संकेतविषय
एव तादृशसंकेतस्य ज्ञानं च न भ्रम इति तादृशसंकेतज्ञानबलात् पुष्पवन्तपदाद्भ्रान्तस्यापि
केवलचन्द्रत्वादिप्रकारकबोधः स्यादेवेति सारः।

परिहारहेतुमाह– तत्पदजन्येति, यथा– तत्पदजन्यकेवलचन्द्रत्वादिप्रकारकबोधे=चन्द्रादिपद-
जन्यकेवलचन्द्रत्वादिप्रकारकबोधं प्रति चन्द्रपदजन्यो यः केवलचन्द्रत्वाद्यवच्छिन्नविषयको
बोधस्तादृशबोधनिष्ठबोधत्वे पर्याप्ता या विषयतावच्छेदकता=भगवत्संकेतविषयतावच्छेदकता
तादृशविषयतावच्छेदकताकत्वप्रकारकं यत् संकेतविषयकं ज्ञानं तस्य हेतुत्वं स्वीक्रियते
अत्र ' चन्द्रपदाच्चन्द्रत्वावच्छिन्नविषयकबोधो भवतु ' इत्याकारको भगवत्संकेतः एतादृशसंकेते
बोध एव जन्यत्वेन विषय इति बोधे संकेतविषयता प्राप्ता बोधनिष्ठबोधत्वे च संकेतविषयता-
वच्छेदकता प्राप्ता तादृशसंकेतविषयतावच्छेदकताया. पर्याप्तिश्चन्द्रत्वावच्छिन्नविषयकबोधत्वेऽस्ति–
उक्तसंकेते केवलचन्द्रत्वावच्छिन्नविषयकबोधस्यैव विषयत्वात् केवलचन्द्रत्वावच्छिन्नविषयकबोधत्वस्यै-
कस्यैव ... ...च्छेदकत्वात्. तादृशबोधत्वपर्याप्तसंकेतविषयतावच्छेदकताक एव संकेतो प्राप्त ... ...च्छेदक-
इति ... ...च्छिन्नचन्द्र-
ताकत्व संकेतविषयकज्ञाने प्रकारतया भासते ...
त्वादिप्रकारकबोधश्चन्द्रादिपदादेव सम्भवति न तु पुष्पवन्तपदादपि पुष्पवन्तपदस्थले चन्द्रत्वसूर्यत्वो-
भयप्रकारकबोधत्वे एव भगवत्संकेतविषयतावच्छेदकतापर्याप्ति सम्भवादित्यर्थः। पुष्पवन्तपदस्य
विशेषमाह– पुष्पवन्तपदेति, भगवत्संकेतविषयतावच्छेदकं बोधत्वमियुक्तं बोधत्वशरीरे च
बोधोपि प्रविष्ट एव स च बोधः पुष्पवन्तपदजन्य एवेति बोधे पुष्पवन्तपदजन्यत्वमस्तीति
पुष्पवन्तपदजन्यत्वघटित भगवत्संकेतविषयतावच्छेदकं बोधत्वं तच्छरीरे=तद्घटकबोधे सूर्यत्वाव-
च्छिन्नविषयकत्वचन्द्रत्वावच्छिन्नविषयकत्वयोर्द्वयोरेव निवेशोऽस्ति तथा च पुष्पवन्तपदस्थले चन्द्र-

विषयकबोधत्वे संकेतविषयतावच्छेदकत्वपर्याप्तिविरहात् तदंशे तत्पर्याप्त्यवगाहि-ग्रहो भ्रम एवेति न शक्तिप्रमातः प्रत्येकधर्मप्रकारकबोधापत्तिः ।

तत्पदजन्यचन्द्रत्वावच्छिन्नविषयकसूर्यत्वावच्छिन्नविषयकबोधत्वपर्याप्तविषयतावच्छेदकताकत्वप्रकारकशक्तिग्रहस्य चोभयधर्मप्रकारकबुद्धित्वमेव कार्यतावच्छेदकमतो न तद्घटितसामग्रीबलादेकधर्मावच्छिन्नान्वयबोधस्य यत्किंचित्कारणविरहदशायामपरधर्मप्रकारकशाब्दबोधापत्तिः । उभयविषयकत्वावच्छिन्नाया बोधनिष्ठसंकेतविषयताया ऐक्यात्छक्तैरैक्यमिति न तत्पदस्य नानार्थतेति रमणीयः समाधिः ।

---

न्द्रत्वसूर्यत्वोभयावच्छिन्नविषयकबोधत्वे एव भगवत्संकेतविषयतावच्छेदकताया पर्याप्तिः स्वीक्रियते—'पुष्पवन्तपदाच्चन्द्रत्वावच्छिन्नविषयकसूर्यत्वावच्छिन्नविषयको बोधो भवतु' इत्याकारकभगवत्संकेतस्वीकारात् न तु केवलचन्द्रत्वाद्यवच्छिन्नविषयकबोधत्वे, केवलचन्द्रत्वादिप्रकारकबोधं प्रति च केवलचन्द्रत्वाद्यवच्छिन्नबोधत्वे एव भगवत्संकेतविषयतावच्छेदकतापर्याप्तिग्रहघटितसंकेतज्ञानस्य हेतुत्वमस्तीति न पुष्पवन्तपदात् केवलचन्द्रत्वादिप्रकारकबोधापत्तिरित्यर्थः । तत्पदजन्येति—पुष्पवन्तपदजन्यकेवलचन्द्रत्वाद्यवच्छिन्नविषयकबोधत्वे च संकेतविषयतावच्छेदकतापर्याप्तिर्नास्तीति तदंशे=तादृशपुष्पवन्तपदजन्यकेवलचन्द्रत्वाद्यवच्छिन्नविषयकबोधत्वे तत्पर्याप्त्यवगाहिग्रहः=संकेतविषयतावच्छेदकत्वपर्याप्तिविषयकज्ञानं भ्रम एवेति तादृशभ्रमात्मकशक्तिज्ञानाद् भ्रमात्मक एव केवलचन्द्रत्वादिप्रकारको बोधः सम्भवति न तु प्रमात्मकः, भ्रमात्मकशक्तिज्ञानादुक्तभ्रमात्मकबोधोत्पत्तौ चानिष्टाभावात् तथा च पुष्पवन्तपदविषयकशक्तिप्रमातः प्रत्येकधर्मप्रकारकस्य=केवलचन्द्रत्वादिप्रकारकस्य बोधस्यापत्तिर्नास्त्येवेत्यर्थः ।

पुष्पवन्तपदात् केवलचन्द्रत्वादिप्रकारकबोधाऽनापत्तिमेव प्रदर्शितां विशदयति— तत्पदजन्येति, पुष्पवन्तपदजन्यो यश्चन्द्रत्वावच्छिन्नविषयकत्वे सति सूर्यत्वावच्छिन्नविषयको बोधस्तादृशबोधनिष्ठबोधत्वे पर्याप्ता या विषयतावच्छेदकता=भगवत्संकेतविषयतावच्छेदकता तादृशविषयतावच्छेदकताकत्वप्रकारकस्य पुष्पवन्तपदशक्तिग्रहस्य चोभयधर्मप्रकारकबुद्धित्वम्=चन्द्रत्वसूर्यत्वोभयधर्मप्रकारकबोधत्वमेव कार्यतावच्छेदकमस्तीति तादृशपुष्पवन्तपदशक्तिज्ञानात् तादृशोभयधर्मप्रकारक एव बोधो जायते तद्घटितसामग्रीबलात्=चन्द्रत्वसूर्यत्वोभयधर्मप्रकारकबोधघटितोक्तशक्तिज्ञानादिसामग्रीबलाद् एकधर्मावच्छिन्नान्वयबोधस्य=चन्द्रत्वाद्यवच्छिन्नविषयकशाब्दबोधस्य यद् यत्किंचित्कारणं तदभावदशायां नामैकधर्मावच्छिन्नविषयकबोधसामग्रीविरहदशायामपरधर्मप्रकारकस्य=सूर्यत्वादिधर्मप्रकारकस्य शाब्दबोधस्यापत्तिर्नास्तीत्यर्थः । नन्वेवं पुष्पवन्तपदस्य चन्द्रसूर्योभयविषयकबोधजनकत्वेन नानार्थत्वं स्यादित्याशङ्क्याह—उभयेति, पुष्पवन्तपदजन्यबोधनिष्ठा या चन्द्रसूर्योभयविषयकत्वावच्छिन्ना संकेतविषयता सैकैवास्ति न नानेति पुष्पवन्तपदनिष्ठशक्तेरप्यैक्यमेवेति न तत्पदस्य=पुष्पवन्तपदस्य नानार्थत्वापत्तिः— नानाशक्तिमत्पदस्यैव नानार्थत्वस्वी—

**पुष्पवन्तपदवत् सर्वनामपदानामपि शक्तेरैक्यान्न नानार्थता ।**

**अथ सर्वनामपदेन विशिष्य घटत्वपटत्वादिनैव बुद्धिस्था घटपटादयः प्रत्याय्यन्ते न तु बुद्धिस्थत्वेन- 'अत्र घटोस्ति तमानय' इत्यादिवाक्यजन्यघटकर्म-**

---

-बोधो न भवति-पदार्थभेदेन शक्तिभेदात् अत एव वृद्धा द्वितीयार्थप्रतिपादनाय नानार्थवाक्यं पुनरुच्चारयन्ति तथा प्रकृते=पुष्पवन्तपदे नास्ति. अत्र=पुष्पवन्तपदे उक्तरीत्या शक्तेरैक्येन पुष्पवन्तपदस्य " सकृदुच्चरितात् " इत्युक्तनियमाविषयत्वादिति पुष्पवन्तपदात् सकृदुच्चरितादेव चन्द्रसूर्ययोर्बोधो जायते इति सर्वं सुस्थम् । " सकृदर्थप्रत्यय एव " इत्यस्य ' सकृदेवार्थप्रत्ययः ' इत्यर्थः ॥ ॥ इति पुष्पवन्तपदम् ॥

अथ

## ॥ तत्पदम् ॥

संप्रति सर्वनाम्नां शक्तिनिरूपणमारभमाणो भट्टाचार्यः प्रथम तत्पदशक्तिं निरूपयति- पुष्पवन्तपदवदित्यादिना.। यथा पुष्पवन्तपदस्य चन्द्रसूर्यलक्षणानेकार्थबोधकत्वेप्युक्तरीत्या न नानार्थता पुष्पवन्तपदे चन्द्रसूर्योभयनिरूपितशक्तेरैक्यात् तथा सर्वनामयत्तदादिपदानामपि घटपटाद्यनेकतत्तत्पदार्थबोधकत्वेपि 'बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नस्तत्पदाद्बोद्धव्य:' 'तत्पदं बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नं बोधयतु' इत्याकारकस्य वा भगवत्संकेतस्य स्वीकारात् तदादिसर्वनामपदेषु बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ननिरूपितायाः शक्तेरैक्यान्न नानार्थता, बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मश्च क्वचिद् घटत्वादिकं क्वचित् पटत्वादिकमित्यन्यदेतत्. तेषां सर्वेषां बुद्धिविषयतावच्छेदकत्वोपलक्षितत्वेनाऽनुगमः । 'तत्र घटोस्ति तमानय' इत्यत्र बुद्धिविषयता घटे बुद्धिविषयतावच्छेदकं घटत्वं बुद्धिविषयतावच्छेदकत्वं घटत्वे बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मश्च घटत्वं तदवच्छिन्नो घटस्तद्बोधकत्व तत्पदे प्राप्तम्, बुद्धिविषयतावच्छेदकत्वं च घटत्वस्योपलक्षणमेव न तु विशेषणम् शाब्दबोधे घटत्वस्य स्वरूपेणैव भानात्, एवमेवान्यत्रापि बोध्यमिति तर्कशास्त्रसिद्धान्तः ।

शङ्कते- अथेति, अस्य वक्ष्यमाणेन "नैवम्" इत्यनेनान्वयः । बुद्धिस्थत्वं च बुद्धिविषयतावच्छेदकत्वम् । 'अत्र घटोस्ति तमानय' इत्यादौ घटादेर्बुद्धौ वर्तमानत्वेन तत्र घटादौ बुद्धिस्थत्वं प्राप्तम् । यदि तदादिसर्वनाम्ना घटादीनां बुद्धिस्थत्वेनैव रूपेण बोधः स्यान्न तु घटत्वादिरूपेण तदा यथा 'द्रव्यमानय' इत्युक्तेपि 'विशिष्टानयनं घटकर्मकं न वा' इतिसंदेहो भवति द्रव्यत्वस्य घटपटाद्यनेकपदार्थसाधारणत्वात् तथा 'अत्र घटोस्ति तमानय' इत्युक्तेपि ' विशिष्टानयनं घटकर्मक न वा ' इतिसंदेहः स्यादेव- बुद्धिस्थत्वस्य घटपटादिसकलपदार्थसाधारणत्वाद् न चैव श्रोतुः संदेहो भवतीति तदादिसर्वनाम्ना घटादीनां घटत्वादिरूपेणैव बोधो जन्यते इति प्राप्त घटत्वादीनां घटाद्यसाधारणत्वेनोक्तसंदेहावकाशाभावात् तथा च घटत्वादिनानाधर्मावच्छिन्नेषु घटपटादिषु सर्वनामतदादिपदानामेका शक्तिर्न

कानयनादिबोधानन्तरम् 'विशिष्टानयनं घटकर्मकं न वा' इतिसंशयानुत्पादस्य
सर्वानुभवसिद्धतया दुरपह्नवत्वात् तथा च वक्तृबुद्धिस्थत्वं न सर्वनामपदशक्य-
तावच्छेदकमपि तु घटत्वपटत्वादिकमेवेति तादृशनानाधर्मावच्छिन्नेषु पुष्पव
न्तादिपदवन्नैकशक्तिसम्भवः– एकैकधर्ममात्रप्रकारकतत्तदर्थबोधानुपपत्तेरिति
सर्वनाम्नां नानार्थत्वं दुर्वारमेव ।

न वा नानार्थतोपगमेपि निर्वाहः– यद्रूपावच्छिन्नविषयकव्यवहारजनकत्वं
येन पुंसा तदादिपदे न गृहीतं तदवच्छिन्ने तेन तच्छक्त्यग्रहेण प्रक्रान्तस्यापि
तदवच्छिन्नस्य तत्पुरुषीयतदादिपदजन्यबोधविषयताऽनुपपत्तेः ।

न च बुद्धिस्थत्वं प्रकारीभूतघटत्वादीनामनुगमकं तथा च 'बुद्धिस्थप्रकारवां
स्तत्पदशक्यः' इत्याकारकशक्तिग्रहः स च तद्धर्मप्रकारेण सामान्यप्रत्यासत्त्या

---

सम्भवति यदि चैकैव शक्तिः स्यात्तदा यथा पुष्पवन्तपदेन चन्द्रत्वसूर्यत्वोभयधर्मप्रकारक एव
बोधो भवति तथा तदादिपदेनाप्यनेकघटत्वपटत्वादिधर्मप्रकारक एव बोधः स्याद् घटत्वाद्येक-
मात्रधर्मप्रकारकश्च बोधो न स्याद् भवति च तदादिपदेन घटत्वाद्येकधर्मप्रकारकबोधोपीति घ-
टत्वपटत्वादिनानाधर्मावच्छिन्नेष्वेकशक्तेरसम्भवात् सर्वनाम्ना नानार्थत्वं प्राप्तमेवेत्यर्थः । स्पष्टम-
न्यद् । "विनिगम्य घटत्वपटत्वादिना" इत्यस्य 'घटत्वपटत्वादिविशेषरूपेण' इत्यर्थः । विशिष्टा-
नयनम्='अत्र घटोस्ति तमानय' इत्यादिवाक्यश्रवणानन्तरं जायमानमानयनम् । तत्तदर्थबो-
धानुपपत्ते =घटपटादिविषयकबोधानुपपत्ते ।

तदादिसर्वनाम्नां नानार्थत्वस्वीकारेप्यनुपपत्तिमुद्घाटयति– न वेति, यदि तदादिपदानां
नानार्थत्वं स्यात्तदा यथा हर्यादिनानार्थपदानां विष्ण्वादिपदार्थेषु मध्ये येषु येषु पदार्थेषु शक्तिग्रहो
भवति तेषामेव यथाकालं हर्यादिपदश्रवणाद् बोधो भवति न तु यस्मिन् शक्तिग्रहो न जातस्त
स्यापि तथा तदादिपदानामपि येषु घटादिषु शक्तिग्रहः स्यात्तेषामेव बोधः स्याद् येषु च श-
क्तिग्रहो न जातस्तेषां बोधो न स्यादेव. न चैवमस्तीति न नानार्थत्वसम्भव इत्यर्थः । तेनेति–
तेन पुंसा । तच्छक्त्यग्रहेण=तदादिपदशक्त्यग्रहेण । यस्मिन् पदे यद्धर्मावच्छिन्नविषयकव्यवहार-
जनकत्वं गृह्यते तस्य पदस्य तद्धर्मावच्छिन्ने शक्तिग्रहो जायते– आनयनादिव्यवहारस्यैव विशे-
षतः शक्तिग्राहकत्वादित्यभिप्रायेणोक्तम्– यद्रूपावच्छिन्नेति ।

ननु यथा सामान्यप्रत्यासत्त्या घटपदस्य घटत्वेन रूपेण सकलघटेषु शक्तिग्रहो भवति तथा
तत्पदजन्यबोधविषयीभूतघटादिषु प्रकारीभूतं यद् घटत्वादिकं तेषां सर्वेषां बुद्धिस्थत्वम्= बु-
द्धिविषयतावच्छेदकत्वमनुगमकं स्वीक्रियते इति 'बुद्धिस्थप्रकारवान्=बुद्धिविषयतावच्छेदकधर्मवां-
स्तत्पदशक्य' इत्याकारकः शक्तिग्रहो जायते स च=शक्तिग्रहश्च सामान्यप्रत्यासत्त्या तद्धर्मप्र-
कारेण=बुद्धिस्थत्वधर्मप्रकारेण=बुद्धिस्थत्वेन रूपेण घटत्वपटत्वादिसकलधर्मविषयक एव जायते

सकलधर्मविषयक एवेति नाऽपूर्वधर्मप्रकारेण बोधानुपपत्तिः, सामान्यप्रत्यासत्त्यऽनभ्युपगमे तु शक्तिग्रहविशेष्यतावच्छेदकप्रकाराश्रयस्याऽपूर्वधर्मिणः शक्तिग्रहाविषयत्वेपि शाब्दबोधे भानवत् शक्तिग्रहधर्मितावच्छेदकतावच्छेदकानुगतरूपाश्रयस्याऽपूर्वधर्मस्यापि शक्तिग्रहविषयता विना शाब्दबोधे न भानानुपपत्तिः—शक्तिधियः शाब्दज्ञानसमानविषयकत्वस्याऽतन्त्रत्वादिति वाच्यम्, बुद्धिस्थत्वस्य शक्यतावच्छेदकतानवच्छेदकत्वेन शक्यतावच्छेदकानुगमकत्वायोगात्, तदवच्छेदकत्वे च तस्यापि शाब्दबुद्धौ शक्यतावच्छेदकघटत्वादिविशेषणतया नियमतो

इति अपूर्वधर्मप्रकारेण=यादृशधर्मप्रकारकबोधजनकत्वं तदादिपदे न गृहीतं तादृशापूर्वधर्मप्रकारकबोधस्यानुपपत्तिर्नास्ति— बुद्धिस्थत्वेन रूपेण तादृशधर्मेपि शक्तिग्रहस्य जातत्वादेव, प्राभाकरादिभिः सामान्यप्रत्यासत्तेरस्वीकारे तु शक्तिग्रहकाले घटत्वेन रूपेण सकलघटानामुपस्थित्यभावेन शक्तिग्रहाविषयत्वेपि शक्तिज्ञानीया या घटे विशेष्यता तादृशविशेष्यताया योऽवच्छेदकप्रकारः=अवच्छेदको धर्मो घटत्वं तदाश्रयस्याऽपूर्वस्यापि धर्मिणो घटस्य यथा शाब्दबोधे भानं भवति तथा प्रकृते शक्तिग्रहाविषयत्वेपि शक्तिग्रहधर्मितावच्छेदकं यद् घटत्वादिकं तन्निष्ठा या शक्तिग्रहधर्मितावच्छेदकता तदवच्छेदकं यदनुगतरूपं बुद्धिविषयतावच्छेदकत्वं बुद्धिस्थत्वं वा तदाश्रयस्याऽपूर्वस्यापि=शक्तिग्रहाविषयस्यापि घटत्वादिधर्मस्य शाब्दबोधे भानं सम्भवतीति तादृशापूर्वधर्मप्रकारकशाब्दबोधानुपपत्तिर्नास्ति— शक्तिधियः शाब्दज्ञानसमानविषयकत्वस्याऽतन्त्रत्वात्=अनियमात् यदि शक्तिज्ञानशाब्दबोधयोः समानविषयकत्वनियमः स्यात्तदा शक्तिग्रहाविषयस्य धर्मस्य धर्मिणो वा शाब्दबोधविषयत्वं न स्यादपि न च समानविषयकत्वनियमोऽस्ति किं तु समानप्रकारकत्वस्यैव नियमस्तथा च यद्धर्मप्रकारकः शक्तिग्रहो भवति तद्धर्मप्रकारक एव शाब्दबोधो जायते इति घटत्वप्रकारकशक्तिग्रहे जाते यथा घटत्वप्रकारकोऽपूर्वघटविषयकः शाब्दबोधो जायते तथा प्रकृते बुद्धिस्थत्वप्रकारकतत्पदशक्तिग्रहे जाते बुद्धिस्थत्वप्रकारकेऽपूर्वघटत्वादिविषयकशाब्दबोधेपि न काचिदनुपपत्तिरित्याशङ्कयाह— न चेति ।

परिहारमाह— बुद्धिस्थत्वस्येति, शक्यतावच्छेदकं यद् घटत्वादिकं तदनुगमकत्वं बुद्धिस्थत्वस्य यदुक्तं तदेव न सम्भवति— शक्यतावच्छेदकताऽनवच्छेदकत्वात् शक्यतावच्छेदकतावच्छेदकस्यैव च शक्यतावच्छेदकघटत्वाद्यनुगमकत्वसम्भवादित्यर्थः । ननु बुद्धिस्थत्वस्य शक्यतावच्छेदकतावच्छेदकत्वे को दोषः ? इत्याशङ्कयाह— तदवच्छेदकत्वे चेति, बुद्धिस्थत्वस्य तदवच्छेदकत्वे=शक्यतावच्छेदकतावच्छेदकत्वे हि तस्य=बुद्धिस्थत्वस्यापि शक्यतावच्छेदकं यद् घटत्वादिकं तद्विशेषणतया तत्पदजन्यशाब्दबोधे नियमेन भानं स्यात् तथा च स्वरूपतो घटत्वादिप्रकारकशाब्दबोधो न स्याद् नाम तत्पदजन्यशाब्दबोधे प्रकारीभूतघटत्वादेः स्वरूपतो भानं न स्यात् किं तु बुद्धिस्थत्वविशिष्टत्वेनैव भानं स्यात् विशेषणस्य स्वाश्रयप्रकारतया भाननियमेन घटत्वादिविशेषणीभूतबुद्धिस्थत्वस्यापि स्वाश्रयघटत्वादिप्रकारतया भानप्रसङ्गादित्यर्थः । ननु बुद्धिस्थत्वे

भानमसङ्गात्, स्वरूपतो घटत्वादिप्रकारकशाब्दबोधानिर्वाहात्, उपलक्षणेनापि शक्यतावच्छेदकानुगमे शक्यस्याप्युपलक्षणेनैवाऽनुगमोऽस्तु किं विशिष्टे शक्त्या।

अथ द्रव्यादिपदाच्च घटत्वादिप्रकारकबोधप्रसङ्गभङ्गाय विशिष्टे शक्तिरुपेयते प्रकृते च बुद्धिस्थत्वस्योपलक्षणत्वेपि तेनाऽनुगमे न किंचिद्बाधकमिति चेत् ? अस्तु बुद्धिस्थत्वेनाऽनुगतधर्मेणाऽननुगतानां प्रकाराणां शक्तिधीविषयत्वं तथापि सर्वनाम्नां नानार्थत्वं दुष्परिहरमेव– साक्षात् परम्परया वा यदवच्छेदक

---

शक्यतावच्छेदकघटत्वादिविशेषणत्वं नोच्यते येनोक्तदोषः स्यात् किं तूपलक्षणत्वमेव उपलक्षणस्य च शाब्दबोधे स्वाश्रयप्रकारतया भाननियमाभावात्र स्वरूपतो घटत्वादिप्रकारकशाब्दबोधानुपपत्तिरित्याशङ्क्याह–उपलक्षणेनेति, उपलक्षणीभूतेनापि बुद्धिस्थत्वेन यदि शक्यतावच्छेदकघटत्वादीनामनुगमः स्याचदा शक्यस्य=घटादेरप्युपलक्षणेनैवानुगमोऽस्तु किं विशिष्टे शक्त्या नाम घटादिव्यक्त्यनुगमकघटत्वादीनामप्युपलक्षणत्वमेव स्वीकार्यं न विशेषणत्वम् यथा च तत्र नोपलक्षणस्य शक्यानुगमकत्वं तथा प्रकृतेपि नोपलक्षणीभूतबुद्धिस्थत्वस्य शक्यतावच्छेदकघटत्वाद्यनुगमकत्वं सम्भवतीत्यर्थः ।

ननु घटादिपदस्थले यदि घटत्वादेर्विशेषणत्वं न स्याद् घटत्वादिविशिष्टे च शक्तिर्न स्यात् किं तु घटत्वादेरुपलक्षणत्वं स्यात्तदोपलक्षणत्वाविशेषाद् घटपदेन घटत्वप्रकारकबोधवद् द्रव्यत्वप्रकारकबोधोपि स्यादेवं तथा द्रव्यपदाद् द्रव्यत्वप्रकारकबोधवद् घटत्वप्रकारकबोधोपि स्यादेव–न चैवमस्ति किं तु घटपदेन द्रव्यपदजन्यबोधविषयीभूतघटे घटत्वस्योपलक्षणत्वनियामद् न चैवमस्ति किं तु घटपदेन घटत्वप्रकारक एव द्रव्यपदेन च द्रव्यत्वप्रकारक एव बोधो भवतीति घटादिपदानां विशिष्टे शक्तिरुपेयते नाम घटत्वादेर्विशेषणत्वं स्वीक्रियते तथा च घटादिपदेनोपलक्षणीभूतद्रव्यत्वादिप्रकारकबोधस्यापत्तिर्नास्ति प्रकृते=तत्पदस्थले चोपलक्षणीभूतेनापि तेन=बुद्धिस्थत्वेन घटत्वपटत्वादीनामनुगमे न कोपि दोषः, यद्युपलक्षणीभूतस्य बुद्धिस्थत्वस्य शाब्दबोधे भानं स्याचदोपलक्षणत्वाविशेषात् ' अत्र घटोऽस्ति तमानय ' इत्यादौ तत्पदजन्यबोधे द्रव्यत्वादेरपि भानापत्तिदोषः स्यादपि न चैवमस्ति शाब्दबोधे बुद्धिस्थत्वस्य भानाऽस्वीकारात् तदादिपदेनापि स्वरूपत एव घटत्वादिप्रकारकबोधस्वीकारात्, घटादिपदजन्यबोधे तु घटत्वादेर्भाननियमाद् विशेषणत्वमेव युक्तं नोपलक्षणत्वमित्याशयेनाशङ्कते– अथेति । परिहरति– अस्त्विति । प्रकाराणाम्=घटत्वपटत्वादीनाम् । सर्वनाम्नां नानार्थत्वापत्तौ हेतुमाह–साक्षादिति, घटादिपदस्थले शक्यतावच्छेदकं घटत्वादिकं च घटादौ वर्तत एवेति साक्षादेव यद् घटत्वादिकं शक्यतावच्छेदकं तदैक्यादेवाऽवच्छेदाया शक्तेरैक्यं सम्भवति पश्वादिपदस्थले च ' पशुपदाल्लाङ्गूलविशिष्टो लोमवल्लाङ्गूलविशिष्टो वा बोद्धव्य ' इत्याकारकभगवत्सङ्केतस्वीकारात् पशुव्यक्तौ लाङ्गूलं विशेषणं तच्चानेकमेव तत्र लाङ्गूलत्वं विशेषणं तच्चैकमेव तत्र लाङ्गूलत्वं लाङ्गूलद्वारैव शक्यतावच्छेदकमिति परम्परया

तदैक्यादेवाऽवच्छेद्यैक्यात् - बुद्धिस्थत्वस्य चाऽतथात्वात्, उपलक्षणैक्येन शक्तेरैक्ये हर्यादिपदशक्यतावच्छेदकानामप्युपलक्षणीभूतेनाऽन्ततो बुद्धिविशेषविषयत्वादिनाऽनुगमसंभवेन नानार्थमात्रोच्छेदप्रसङ्गात् ।

एवम् 'बुद्धिस्थप्रकारवान् तत्पदशक्यः' इत्याकारकशक्तिज्ञानात् स्वरूपतो घटत्वादिप्रकारकस्मरणशाब्दबोधौ न संभवतः— 'जातिमान् हस्तिपकसम्बन्धी' इत्यादिज्ञानात् स्वरूपतो हस्तित्वादिप्रकारकस्मरणानुदयात्— स्वरूपतस्तद्धर्मप्रकारकस्मरणे स्वरूपतस्तद्धर्मप्रकारेण यस्य संबन्धो गृहीतस्तादृशसम्बन्धिज्ञानस्य कारणत्वात्, यथा 'याभ्यां रूपाभ्यां धर्मिणोः संबन्धो गृहीतस्त-

---

शक्यतावच्छेदकं जातमिति तदैक्यादेवावच्छेद्यैक्ये शक्तेरैक्यं संभवति, एवमत्र लोमत्वादेरपि परम्परया शक्यतावच्छेदकत्वम्, बुद्धिस्थत्वं च न साक्षात् न वा परम्परयापि शक्यतावच्छेदकम्— उपलक्षणत्वाद् विशेषणत्वास्वीकारेणाऽतथात्वात्=शक्यतानवच्छेदकत्वादिति बुद्धिस्थत्वस्यैक्यादपि तदादिपदनिष्ठशक्तेरैक्यं न संभवतीति नानाशक्तिमत्त्वाद् नानार्थत्वं दुष्परिहरमत्र, बुद्धिस्थत्वेन येषां घटत्वपटत्वादिधर्माणामनुगमः क्रियते तान्यपि नानैवेत्यर्थः । विपक्षे बाधकमाह— उपलक्षणेति, उपलक्षणीभूतस्य बुद्धिस्थत्वस्यैक्येन यदि तदादिपदनिष्ठशक्तेरैक्यं स्यात्तदा नानार्थहर्यादिपदशक्यतावच्छेदकानां विष्णुत्वसिंहत्वादीनामप्यऽन्ततः=अयधर्मोपलम्भाभावे उपलक्षणीभूतेन बुद्धिविशेषविषयत्वादिना=बुद्धिविशेषविषयतावच्छेदकत्वादिनाऽनुगमः संभवत्येवेति तादृशोपलक्षणीभूतस्य बुद्धिविशेषविषयत्वादेरैक्येन नानार्थहर्यादिपदनिष्ठशक्तेरप्यैक्यं स्यादिति नानार्थमात्रोच्छेदः स्यात् तथा च नोपलक्षणीभूतबुद्धिस्थत्वस्यैक्येन तदादिपदनिष्ठशक्तेरैक्यं संभवतीति नानार्थत्वं स्यादेवेत्यर्थः ।

दोषान्तरमाह— एवमिति, 'हस्ती हस्तिपकसम्बन्धी' इत्याकारकज्ञानेन स्वरूपतो हस्तित्वप्रकारकहस्तिविशेष्यकस्मरणे जायमानेपि यथा 'जातिमान् हस्तिपकसम्बन्धी' इत्याकारकज्ञानात् स्वरूपतो हस्तित्वप्रकारकहस्तिस्मरणं न जायते किं तु 'जातिमान्' इत्यस्य 'हस्तित्वरूपजातिमान्' इत्येवार्थ इत्यत्र हस्तित्वस्य जातित्वेनैव रूपेणोपस्थितिर्भवतीति जातित्वविशिष्टहस्तित्वप्रकारकमेव हस्तिस्मरणं जायते 'घटः' इत्यनेन घटत्वविशिष्टघटस्मरणवत् तथा 'बुद्धिस्थप्रकारवान् तत्पदशक्यः' इत्याकारकमेव त्वया शक्तिज्ञानं स्वीकार्यं तादृशशक्तिज्ञानाच्च स्वरूपतो घटत्वादिप्रकारकौ स्मरण ( उपस्थिति ) शाब्दबोधौ न संभवतः किं तु 'बुद्धिस्थप्रकारवान्' इत्यस्य 'बुद्धिस्थप्रकारभूतं यद् घटत्वादिकं तद्वान्' इत्येवार्थ इति घटत्वस्य बुद्धिस्थत्वेन रूपेणावगाहनाद् बुद्धिस्थत्वविशिष्टघटत्वप्रकारकावेव स्मरणशाब्दबोधौ संभवतः न चैतदिष्टमित्यर्थः । उक्ते हेतुमाह—स्वरूपत इति, स्वरूपतस्तद्धर्मप्रकारकस्मरणे=स्वरूपतस्तद्धर्मप्रकारकस्मरणं प्रति स्वरूपतस्तद्धर्मप्रकारेण यथा स्वरूपतो हस्तित्वप्रकारको यस्य हस्तिनो हस्तिपकेन सम्बन्धो गृहीतस्तादृशसम्बन्धिज्ञानस्य=स्वरूपतो हस्तित्वप्रकारकहस्तिज्ञानस्य कारणत्वमस्ति 'जातिमान्

देकतररूपप्रकारकसंबन्धिज्ञानाद् अपरतद्रूपेणैव संबन्ध्यन्तरस्मरणम् ' इत्यनुभवस्त-
था 'यादृशरूपाभ्यां धर्मिणोः संबन्धग्रहस्तादृशैकधर्मप्रकारकज्ञानात् तादृशापर-
धर्मप्रकारेणैव धर्मिस्मरणम्' इत्यपि तथा च यत्र किंचिद्विशेषितधर्मप्रकारकं
संबन्धिज्ञानं तत्राऽविशेषिततद्धर्मप्रकारकस्मरणस्याऽनुभवविरुद्धतया इष्टापत्तेरयो-
गात्, अन्यथा कदाचित् स्वरूपतस्तत्प्रकारिका कदाचिद् धर्मान्तरावच्छिन्नत-
त्प्रकारिका स्मृतिरित्यत्र नियामकाभावप्रसङ्गात् ।

हस्तिपकसम्बन्धी ' इत्यत्र च हस्तिपकेन सह हस्तिनः स्वरूपतो हस्तित्वप्रकारकसम्बन्धस्याग्रहणेन
स्वरूपतो हस्तित्वप्रकारकहस्तिज्ञानस्याभावात् कालान्तरे हस्तिपकदर्शनेन हस्तिन स्वरूपतो
हस्तित्वप्रकारकस्मरण न जायते किं तु जातित्वविशिष्टहस्तित्वप्रकारकमेव. एवम् ' बुद्धिस्थप्र-
कारवान् तत्पदशक्य ' इत्यत्र तत्पदेन सह घटस्य बुद्धिस्थत्वविशिष्टघटत्वप्रकारक सम्बन्धो
गृहीत इति ' अत्र घटोस्ति तमानय ' इत्यत्र तत्पदज्ञानेन घटस्य बुद्धिस्थत्वविशिष्टघटत्वप्रका-
रकावेव स्मरणशाब्दबोधौ सम्भवत न तु स्वरूपतो घटत्वप्रकारकावित्यर्थ । ननु बुद्धिस्थत्व-
विशिष्टघटत्वादिप्रकारकादपि 'बुद्धिस्थप्रकारवान् तत्पदशक्य ' इत्याकारकशक्तिज्ञानात् स्वरूपतो
घटत्वादिप्रकारकस्मरणशाब्दबोधौ स्याता तत्रेष्टापत्तिरेवेत्याशङ्क्यैतादृशेष्टापत्तेरसम्भवमाह—यथेति,
याभ्याम्=अनवच्छिन्नाभ्या रूपाभ्या=धर्माभ्या धर्मिणो परस्पर सम्बन्धो गृहीत स्यात् तदेक-
तररूपप्रकारकात्=तदेकतराऽनवच्छिन्नधर्मप्रकारकात् सम्बन्धिज्ञानाद् अपरतद्रूपेणैव=अनवच्छिन्ना-
पररूपेणैव सम्बन्ध्यन्तरस्मरण जायते इत्यनुभवो यथा ' हस्ती हस्तिपकसम्बन्धी ' इत्यत्र धर्मि-
णोर्हस्तिहस्तिपकयो स्वरूपत एव हस्तित्वहस्तिपकत्वाभ्या रूपाभ्या नाम स्वरूपतो हस्ति-
त्वेन हस्तिपकत्वेन च रूपेण परस्पर सम्बन्धो गृहीत इति हस्तिपकत्वप्रकारकहस्तिपकज्ञानेन
हस्तिन स्वरूपतो हस्तित्वप्रकारक स्मरण जायते न तु किंचिद्धर्मविशिष्टहस्तित्वप्रकारक तथा
यादृशरूपाभ्याम्=किंचिद्धर्मावच्छिन्नरूपाभ्या धर्मिणो परस्पर सम्बन्धग्रहस्तादृशैकधर्मप्रकारकज्ञा-
नात्=किंचिद्धर्मावच्छिन्नधर्मप्रकारकसम्बन्धिज्ञानात् तादृशापरधर्मप्रकारेणैव=किंचिद्धर्मावच्छिन्नधर्म-
प्रकारकमेव धर्मिस्मरण जायते इत्यप्यनुभवोस्ति यथा ' जातिमान् हस्तिपकसम्बन्धी ' इत्यत्र हस्तिप-
केन सह हस्तिनो जातित्वावच्छिन्नहस्तित्वप्रकारक सम्बन्धग्रहो जात इति हस्तिपकदर्शनेन हस्तिनो
जातित्वावच्छिन्नहस्तित्वप्रकारकमेव स्मरण जायते न तु स्वरूपतो हस्तित्वप्रकारकम् । उपस-
हरति— तथा चेति, तथा च ' बुद्धिस्थप्रकारवास्तत्पदशक्य. ' इत्यत्र बुद्धिस्थत्वविशिष्टघटत्वादि-
प्रकारकघटादिविशेष्यकशक्तिज्ञाने जाते तादृशशक्तिज्ञानाद् बुद्धिस्थत्वविशिष्टघटत्वादिप्रकारकमेव
घटादिस्मरण सम्भवति न तु अविशेषिततद्धर्मप्रकारकम्=स्वरूपतो घटत्वादिप्रकारकमपीति तत्रे-
ष्टापत्तेरप्यसम्भव एवेत्यर्थ । " याभ्या रूपाभ्याम् ", " यादृशरूपाभ्याम् " इत्याद्युक्तवाक्ययो
समानार्थकत्वसम्भवेऽयुक्त एवार्थो विज्ञेय समानार्थकत्वे एकवाक्यस्य वैयर्थ्यापत्ते । उक्तानुभवद्वया-
नङ्गीकारे बाधकमाह—अन्यथेति, यदि ' किंचिद्धर्मविशिष्टधर्मप्रकारकसम्बन्धिज्ञानात् किंचिद्धर्मवि-

सामान्यलक्षणप्रत्यासत्तिमनङ्गीकुर्वतां पुनरनिष्कृतिरेव–शक्तिग्रहाविषयस्याऽपूर्वधर्मस्य स्वरूपतः कथमपि भानासंभवात्, न हि बुद्धिविषयतावच्छेदकत्वेन धर्मान्तरविषयकज्ञानं स्वरूपतोऽपरधर्मप्रकारकं ज्ञानं जनयितुं प्रभवति. तथा सति समानप्रकारकत्वनियमस्यापि भङ्गप्रसङ्गादिति ।

मैवम्– भगवत्संकेतरूपायां शक्तौ शक्यतावच्छेदकीभूतघटत्वपटत्वादावुपलक्षणीभूतबुद्धिविषयतावच्छेदकत्वप्रकारेण भासमाने तदादिपदजन्यबोधविषयता-

---

शिष्टधर्मप्रकारकमेव स्मरणं जायते' 'स्वरूपतस्तद्धर्मप्रकारकसम्बन्धिज्ञानात् स्वरूपतस्तद्धर्मप्रकारकं स्मरणं जायते' इति च नियमो न स्यात्तदा यत् कदाचित् स्वरूपतस्तद्धर्मप्रकारकं स्मरणं जायते कदाचिच्च धर्मान्तरावच्छिन्नधर्मप्रकारकं स्मरणं जायते तत्र किमपि नियामकं न स्यात्, यदा चोक्त-नियमद्वयं स्वीक्रियते तदा तु किंचिद्धर्मविशिष्टधर्मप्रकारकसम्बन्धिज्ञाने जाते किंचिद्धर्मविशिष्टधर्म-प्रकारकमेव स्मरणं जायते स्वरूपतस्तद्धर्मप्रकारकसम्बन्धिज्ञाने जाते च स्वरूपतस्तद्धर्मप्रकारकमेव स्मरणं जायते इत्युपपद्यते इत्यर्थः ।

सामान्यलक्षणप्रत्यासत्तिस्वीकारपक्षे तदादिसर्वनाम्ना बुद्धिस्थत्वेन रूपेण सकलघटत्वपटत्वा-दिधर्मेषु शक्तिग्रहसम्भवेन तत्तत्स्थले तत्तदऽपूर्वधर्मप्रकारकोपस्थितिशाब्दबोधयोः सम्भवेऽपि स्वरूपत-स्तत्तद्धर्मप्रकारकोपस्थितिशाब्दबोधौ न सम्भवत इति "अस्तु बुद्धिस्थत्वेनानुगतधर्मेण" इत्यादिनो-पपाद्य सामान्यलक्षणप्रत्यासत्त्यऽस्वीकारपक्षे तु सर्वथाऽनुपपत्तिरेवेत्याह– सामान्येति । किं वा सामा-न्यलक्षणप्रत्यासत्तिस्वीकारपक्षे बुद्धिस्थत्वविषयकसंस्कारप्रमोषादिरूपेण येन केनाप्युपायेन शक्ति-ग्रहाविषयस्याप्यऽपूर्वधर्मस्य स्वरूपतो भानसम्भवेऽपि सामान्यलक्षणप्रत्यासत्त्यस्वीकारपक्षे तु कथमपि न तत्सम्भव इत्याह–सामान्येति, अनिष्कृतिः =अनुपपत्तिरिति यावत् । ननु बुद्धिविषयतावच्छेदकत्वेन रूपेण घटत्वे यत् तदादिपदशक्तिज्ञानं जातं तेन स्वरूपतः पटत्वादिधर्मप्रकारकं स्मरणं भविष्य-तीत्याशङ्कयाह– न हीति । विपक्षे बाधकमाह– तथा सतीति, यदि बुद्धिविषयतावच्छेदकत्वेन रूपेण धर्मान्तरविषयकं ज्ञानं स्वरूपतोऽपरधर्मप्रकारकं स्मरणं जनयेत्तदा शक्तिज्ञानोपस्थिति-शाब्दबोधानां यः समानप्रकारकत्वनियमस्तस्यापि भङ्गः स्यात् न चैतदिष्टमित्यर्थः ।

अथेत्यादिनोपपादितामाशङ्कां तार्किकः स्वमतेन सम्प्रति परिहरति– मैवमित्यादिना । भग-वत्संकेतरूपायां शक्तावुपलक्षणीभूतबुद्धिविषयतावच्छेदकत्वप्रकारेण भासमाने शक्यतावच्छेदकी-भूतघटत्वपटत्वादौ तदादिपदजन्यबोधविषयतावच्छेदकत्वं भासते इत्यन्वयः, तथा च घटत्वपट-त्वादेरेव तदादिपदजन्यबोधविषयतावच्छेदकत्वाद् बुद्धिविषयतावच्छेदकत्वस्य च घटत्वाद्युपल-क्षणत्वात् तदादिपदेन स्वरूपतो घटत्वादिप्रकारकस्मरणशाब्दबोधयोर्न काचिदनुपपत्तिः– उप-लक्षणीभूतधर्मस्य भानाऽनियमात्, बुद्धिविषयतावच्छेदकत्वेन रूपेण च सकलघटत्वपटत्वादिधर्मे तदादिपदशक्तिग्रहसम्भवेन नाऽपूर्वधर्मप्रकारकस्मरणशाब्दबोधयोरप्यनुपपत्तिरित्यभिप्रायः । तदादि-

वच्छेदकत्वं भासते. एवं च 'बुद्धिविषयतावच्छेदकधर्मावच्छिन्नस्तत्पदाद् बो
द्धव्यः' इत्याकारकस्य 'तत्पदं बुद्धिविषयतावच्छेदकरूपावच्छिन्नं बोधयतु' इ-
त्याकारकस्य वा संकेतस्य विषयताया अननुगतघटत्वपटत्वादिनिष्ठाया अप्य-
ऽनुगतस्वप्रयोगानुकूलवक्तृबुद्धिविषयतावच्छेदकत्वरूपावच्छिन्नतया शक्तैक्यम् ।
घटपटादिपदसंकेतविषयताना नानाघटादिव्यक्तिनिष्ठाना घटत्वाद्यनुगतधर्माव
च्छिन्नत्वेन पश्वादिपदसंकेतविषयताना प्रकारीभूतनानालोमादिव्यक्तिनिष्ठाना लो
मत्वाद्यनुगतधर्मावच्छिन्नत्वेन तत्तत्पदशक्त्यैक्यवत् ।

---

पदशक्तैक्यमुपपादयति— एवं चेति । अर्थविशेष्यकसंकेतमाह— बुद्धीति, तथा चात्र 'तदा
दिपदज यबुद्धिविषयतावच्छेदकधर्मावच्छिन्नविषयत्वेविषयतानिष्ठप्रकारतानिरूपितभगवदिच्छी-
यविशेष्यतासम्बन्धेन तदादिपदविशिष्टो बुद्धिविषयतावच्छेदकधर्मावच्छिन्नो भवति' इति शक्ति
ज्ञानस्वरूपमनुसन्धेयम् । पदविशेष्यकसंकेतमाह— तत्पदमिति, अत्र च 'तदादिपदजन्यबोधजन
कत्वनिष्ठप्रकारतानिरूपितभगवदिच्छीयविशेष्यतासम्बन्धेन बुद्धिविषयतावच्छेदकधर्मावच्छिन्नविशिष्ट
तदादिपदम्' इत्याकारकं शक्तिज्ञानस्वरूपमनुसन्धेयम् । उक्तसंकेतविषयता यद्यप्यननुगत
घटत्वपटत्वादिनिष्ठेन तथापि सा संकेतविषयता स्वप्रयोगानुकूला=तदादिपदप्रयोगकार-
णीभूता या वक्तृबुद्धिस्तद्विषयतावच्छेदकत्व यदनुगत रूप तदवच्छिन्नास्तीति संकेतविष
यतावच्छेदकताया बुद्धिविषयतावच्छेदकत्वरूपैकधर्मपर्याप्ततया तदादिपदशक्तैक्य शक्त्यैक्याद
न तदादिपदाना नानार्थत्वापत्ति — नानाशक्तिमत एव नानार्थत्वस्वीकारादित्यर्थ । तदा-
दिपदशक्तैक्ये दृष्टान्तमाह— घटादिपदेत्यादिना, यथा घटादिपदसंकेतविषयताना नाना-
घटादिव्यक्तिनिष्ठत्वेपि घटत्वाद्यनुगतधर्मावच्छिन्नत्वेन घटादिपदशक्तैक्य यथा च पश्वादिपदसंके-
तविषयताना प्रकारीभूतनानालोमादिव्यक्तिनिष्ठत्वेपि लोमत्वाद्यनुगतधर्मावच्छिन्नत्वेन पश्वादिपद-
शक्तैक्य तथा तदादिपदसंकेतविषयतानामपि नानाघटत्वपटत्वादिनिष्ठत्वेपि बुद्धिविषयतावच्छे-
दकत्वरूपानुगतधर्मावच्छिन्नत्वेन तदादिपदशक्तैक्य युक्तमवन्यथा । तत्तत्पदशक्त्यैक्यवत्=
घटादिपश्वादिपदशक्त्यैक्यवत् । अत्र च घटादिपदेन घटादिव्यक्तिविशेष्यकबोधो जायते तादृश-
घटादिव्यक्तिवृत्त्येन संकेतविषयतावच्छेदक घटत्वादिकम् तदादिपदेनापि घटादिव्यक्तिविशेष्यक
एव बोधो जायते संकेतविषयतावच्छेदक बुद्धिविषयतावच्छेदकत्व च न घटादिवृत्ति किं तु प्रका-
रीभूतघटत्वादिवृत्तीति वैषम्यमालोच्य पश्वादिपदशक्तिग्रहणमुक्त पशुपदेन पशुव्यक्तिविशेष्यक एव
बोधो जायते तादृशव्यक्तिविशेषणीभूतलोमवृत्तिलोमत्वेनानुगतधर्मेण पश्वादिपदसंकेतविषयताया
अवच्छिन्नत्वेन यथा पश्वादिपदशक्तैक्य तथा प्रकृतेपि तदादिपदजन्यबोधविषयीभूतघटादिव्य-
क्तिविशेषणीभूतघटत्वादिवृत्तिबुद्धिविषयतावच्छेदकत्वेनानुगतधर्मेण तदादिपदसंकेतविषयताया अ
वच्छिन्नत्वेन तदादिपदशक्तैक्यमित्यभिप्राय ।

इयांस्तु विशेषः— तत्र घटत्वलोमत्वादिषु तत्तत्पदजन्यबोधविषयतावच्छेदकत्वं भासते इति तानि विशेषणान्युच्यन्ते. प्रकृते च बुद्धिविषयतावच्छेदकत्वे सर्वनामपदजन्यबोधविषयतावच्छेदकत्वं संकेतेन नावगाह्यतेऽपि तु तादृशविषयतासामानाधिकरण्यमात्रमिति तदुपलक्षणमिति गीयते ।

अननुगतहरित्वसिंहत्वादिनिष्ठानां नानार्थहर्यादिपदसंकेतविषयतानामऽनुगतकिंचिद्धर्मावच्छिन्नत्वाभावान्न शक्तेरैक्यम्, तत्रोपलक्षणीभूतकिञ्चिद्धर्मप्रकारेणाऽभासमानस्यैव हरित्वादेर्भगवत्संकेतरूपायां शक्तौ हर्यादिपदजन्यबोधविषयतावच्छेदकत्वं भासते इति न नानार्थमात्रोच्छेद इति ।

---

घटत्वलोमत्वाद्यपेक्षया बुद्धिविषयतावच्छेदकत्वस्य व्यतिरेकमाह— इयांस्त्विति, तत्र=घटादिपश्वादिपदस्थले । तत्तत्पदजन्यबोधविषयतावच्छेदकत्वम्=घटादिपश्वादिपदजन्यबोधविषयतावच्छेदकत्वम् । तानि=घटत्वलोमत्वादीनि । प्रकृते=तदादिपदस्थले । तादृशविषयतासामानाधिकरण्यमात्रम्=तदादिसर्वनामपदजन्यबोधविषयतासामानाधिकरण्यमात्रम् । तत्=बुद्धिविषयतावच्छेदकत्वम् । घटत्वपटत्वादिषु तदादिसर्वनामपदजन्यबोधविषयताप्यस्ति बुद्धिविषयतावच्छेदकत्वमप्यस्तीति तयोः सामानाधिकरण्य तादृशसामानाधिकरण्यसत्त्वेप्यवच्छेद्यावच्छेदकभावो नास्तीति बुद्धिविषयतावच्छेदकत्वमुपलक्षणमेव न विशेषणमित्यन्वय ।

उपलक्षणैक्येन शक्त्यैक्ये प्रदर्शितम् ( पृ. ८९ । नानार्थमात्रोच्छेदप्रसङ्गं पराकरोति— अननुगतेति, तदादिपदस्थले यथाऽननुगतघटत्वपटत्वादिनिष्ठाया सङ्केतविषयताया अवच्छेदक बुद्धिविषयतावच्छेदकत्वमनुगतधर्म उपलभ्यते तथा नानार्थहर्यादिपदस्थलेऽननुगतहरित्वसिंहत्वादिनिष्ठायाः सङ्केतविषयताया अवच्छेदकोऽनुगतधर्म कोपि नोपलभ्यते इति न नानार्थपदशक्तेरैक्यं सम्भवति किं त्वर्थभेदेन शक्तिभेद एवेति नानाशक्तिमत्त्वान्नानार्थत्व युक्तमेव । तदादिपदजन्यबोधविषयीभूतघटत्वपटत्वाद्यपेक्षया नानार्थहर्यादिपदजन्यबोधविषयीभूतहरित्वादेर्व्यतिरेकमाह— तत्रेति, तत्र=नानार्थहर्यादिपदस्थले हर्यादिपदजन्यबोधविषयतावच्छेदकाना हरित्वसिंहत्वादीना नानात्वान्नानाशक्तिमत्त्व तेन च नानार्थत्वम् । किं वा हर्यादिपदजन्यबोधविषयतावच्छेदकत्वस्य नानाहरित्वसिंहत्वादिधर्मपर्याप्ततया नानाशक्तिमत्त्वम्, तादृशावच्छेदकत्वस्य नानाहरित्वादिधर्मव्यासक्तत्वाभावादेकमात्रधर्मपर्याप्तत्वाभावाच्च न शक्तेरैक्यमित्यर्थ. । हरित्वादेर्भगवत्सङ्केतरूपाया शक्तौ यद्युपलक्षणीभूतकिंचिद्धर्मप्रकारेण भासमानस्यैव हर्यादिपदजन्यबोधविषयतावच्छेदकत्व भासेत तदा तादृशोपलक्षणीभूतधर्मस्यैक्येनापि हर्यादिपदशक्तेरैक्य सम्भवेत् न चैवमस्तीत्युक्तम्— तत्रेत्यादिना ।

ननु यथा घटादिपदस्थले नानाघटादिव्यक्तिनिष्ठायाः सङ्केतविषयताया अवच्छेदकत्वेन घटत्वादेर्विशेषणत्व तथा तदादिपदस्थले नानाघटत्वपटत्वादिनिष्ठायाः सङ्केतविषयताया अवच्छेदकत्वेन बुद्धिविषयतावच्छेदकत्वस्यापि विशेषणत्वमेव युक्त नोपलक्षणत्वमित्याशङ्क्य बुद्धिविषय-

यद्यपि घटादिपदसंकेतस्य घटत्वादिविशिष्टविषयकत्ववत् सर्वनामसंकेतेन बुद्धि-विषयतावच्छेदकत्वे तत्पदजन्यबोधविषयतावच्छेदकत्वानवगाहनेऽपि संकेतस्य तद्विशिष्टविषयकत्वमक्षतमेवेति संकेतविषये तद् विशेषणमेव एवं शक्य-विशेषणघटत्वादिनिष्ठे बोधविषयतावच्छेदकत्वरूपबोधविषयतानिष्ठसंकेतीयविष-यतानिरूपितविषयतारूपशक्यत्वे तदवच्छेदकमपि तथापि बोधविषयतया संके-तविषयत्वरूपशक्यतायास्तत्राऽसत्त्वेन शक्ये न तद् विशेषणम्— शक्यत्वे सति

सावच्छेदकस्योक्तमुपलक्षणत्वमुपपादयति— यद्यपीत्यादिना । यद्यपि यथा 'घटपदेन घटत्वा-वच्छिन्नो बोद्धव्य' इत्याकारकस्वीकृतघटादिपदभगवत्संकेतो घटत्वादिविशिष्टविषयक एव न तु घटत्वाद्युपलक्षितविषयकस्तथा तदादिसर्वनामसंकेतेन बुद्धिविषयतावच्छेदकत्वेन तदादिसर्वनाम-जन्यबोधविषयतावच्छेदकत्वस्याऽनवगाहनेऽपि तदादिसर्वनामसंकेतोऽपि बुद्धिविषयतावच्छेदकत्व-विशिष्टविषयक एवेति संकेतविषये घटत्वपटत्वादौ तत्=बुद्धिविषयतावच्छेदकत्वं विशेषणमेव, एवं शक्यं यद् घटादि तद्विशेषणीभूतं यद् घटत्वादि तन्निष्ठं यच्छक्यत्वं तादृशं घटत्वादिनि-ष्ठशक्यत्वे तत्=बुद्धिविषयतावच्छेदकत्वमवच्छेदकमपि नाम घटत्वादिनिष्ठशक्यताया अवच्छेदक-मपीत्यन्वय, घटत्वादिनिष्ठशक्यत्वस्य स्वरूपमाह— बोधविषयतेति, बोधविषयतावच्छेदकत्व-रूपा या घटत्वादिनिष्ठा बोधविषयता तादृशबोधविषयतानिष्ठा या संकेतीयविषयता=संकेतीय-प्रकारताख्यविषयता तादृशप्रकारताख्यविषयतानिरूपिता या विषयता=विशेष्यताख्यविषयता तादृशविषयतारूपमत्र घटत्वादौ शक्यत्वमस्तीत्यन्वय, घटत्वादौ या बोधविषयतास्ति सा बोधविषयतावच्छेदकत्वरूपैव विज्ञेया सा च बोधविषयता भगवत्संकेते घटत्वादौ प्रकारतया भासते इति तस्यां संकेतीयप्रकारताख्यविषयता प्राप्ता तादृशप्रकारताख्यविषयतानिरूपिता विशेष्यताख्यविषयता घटत्वादौ प्राप्तेत्यर्थ । स्वाभिप्रायमाह— तथापीति, यथा 'घटो बोध-विषयो भवतु' 'घटत्वादिकं बोधविषयो भवतु' इत्यत्र भगवत्संकेतस्वीकाराद् घटघटत्वादौ बोधविषयत्वेन रूपेण संकेतविषयतारूपा शक्यतास्ति तथा तत्र=बुद्धिविषयतावच्छेदकत्वे बोधविषयतया=बोधविषयत्वेन रूपेण संकेतविषयत्वरूपा शक्यता नास्ति— 'बुद्धि-विषयतावच्छेदकत्वं तदादिपदजन्यबोधविषयो भवतु' इत्याकारकभगवत्संकेताभावादिति तत्=बुद्धिविषयतावच्छेदकत्वं शक्ये=घटत्वादौ न विशेषणं किं तूपलक्षणमेव । विशे-षणत्वाभावे हेतुमाह— शक्यत्वे इति, यच्छक्यं सच्छक्यव्यावर्तकं भवति तदेव शक्य-विशेषणं भवति यथा घटत्वादिकं बुद्धिविषयतावच्छेदकत्वे च बोधविषयतया संकेत-विषयत्वरूपशक्यत्वं नास्तीत्युक्तमेव, एवं घटत्वादौ यथा शक्यव्यावर्तकत्वमस्ति घटत्वादिरूपेण घटबोधस्य सम्भवात् तथा बुद्धिविषयतावच्छेदकत्वे शक्यव्यावर्तक-त्वमपि नास्ति बुद्धिविषयतावच्छेदकत्वेन रूपेण सकलघटपटत्वादीनां बोधसम्भवादिति न शक्ये विशेषणम्, तथा च यथोपलक्षणीभूतस्य शब्दाश्रयत्वस्याकाशादन्यबोधे

शक्यव्यावर्तकस्यैव शक्यविशेषणत्वादिति तस्य शक्योपलक्षणतयाऽऽकाशपदजन्यशाब्दबोधे शब्दाश्रयत्वभानाऽनियमवत् तदादिपदजन्यबोधे तदऽभाननिर्वाहः ।

एतद्बीजं तु– तदुपलक्षितघटत्वादिविषयकत्वेन तदविषयकघटत्वादिबोधस्यापि संकेतविषयत्वम् । घटादिपदसंकेतस्य च घटत्वादिविशिष्टविषयकबोध एव विषय इति तज्जन्यबोधे तादृशधर्मभाननियमः । यथा यद्विशिष्टविशेष्यकबोधविषयत्वं संकेतविषयस्तच्छक्यतावच्छेदकतया व्यवह्रियते तथा यद्विशिष्टप्रकारविशिष्टविषयकत्वं तथा तच्छक्यतावच्छेदकतावच्छेदकमित्युच्यते प्रकृते बुद्धिविषयतावच्छेदकत्वं न तथेति न तच्छक्यतावच्छेदकं न वा तत्त्वावच्छेदकमिति ।

---

भाननियमो नास्ति तथा तदादिसर्वनामपदजन्यबोधे बुद्धिविषयतावच्छेदकत्वस्य भाननियमो नास्ति– उपलक्षणत्वादित्याह– तस्येति । यदि केनचित्पुरुषेण बुद्धिविषयतावच्छेदकत्वे घटत्वादिविशेषणत्वं गृह्येत तदा तदादिपदजन्यबोधे तस्य भानमपि सम्भवति ।

तदादिपदजन्यबोधे बुद्धिविषयतावच्छेदकत्वस्य भाननियमाभावे कारणमाह– एतदिति, ' बुद्धिविषयतावच्छेदकत्वोपलक्षितघटत्वादिविषयकबोधस्तदादिपदजन्यो भवतु ' इत्याकारकबोधविशेष्यकभगवत्संकेते तदुपलक्षितघटत्वादिविषयकत्वेन=बुद्धिविषयतावच्छेदकत्वोपलक्षितघटत्वादिविषयकत्वेन रूपेण तदविषयकघटत्वादिबोध =बुद्धिविषयतावच्छेदकत्वाऽविषयकत्वे सति घटत्वादिविषयको बोधो विषयोऽस्तीति न तदादिपदजन्यबोधे बुद्धिविषयतावच्छेदकत्वस्य भाननियम, यदि घटत्वादिविषयकबोधो बुद्धिविषयतावच्छेदकत्वविषयक त्वेन संकेतविषयः स्यात्तदा तदादिपदजन्यबोधे बुद्धिविषयतावच्छेदकत्वस्य भाननियम स्यादपि न चैवमस्तीत्यर्थः । घटादिपदजन्यबोधे घटत्वादेर्भाननियमे हेतुमाह– घटादिपदेति, घटादिपदस्थले ' घटत्वादिविशिष्टविषयकबोधो घटादिपदजन्यो भवतु ' इत्याकारकभगवत्संकेते घटत्वादिविशिष्टविषयक एव बोधो विषयो भवति न तु घटत्वाद्युपलक्षितविषयक इति तज्जन्यबोधे=घटादिपदजन्यबोधे तादृशधर्मभाननियमः=घटत्वादिलक्षणधर्माणां भाननियम । बुद्धिविषयतावच्छेदकत्वं हि न शक्यतावच्छेदक न वा शक्यतावच्छेदकतावच्छेदकं येन तदादिपदजन्यबोधे नियमेन भासेतेत्याह– यथेति, ' घटत्वविशिष्टो घटपदजन्यबोधविषयो भवतु ' इत्याकारकसंकेते घटत्वविशिष्टो यो घटस्तद्विशेष्यको यो बोधस्तद्विषयत्वं विषयोऽस्तीति तत्=घटत्वादिकं शक्यतावच्छेदकमित्युच्यते एवं पश्वादिपदस्थले ' लोमत्वावच्छिन्नलोमविशिष्टविषयको बोधः पशुपदजन्यो भवतु ' इत्याकारकभगवत्संकेते लोमत्वविशिष्टं यत् प्रकारीभूतं लोम तद्विशिष्टो यः पशुस्तद्विषयकत्वं पशुपदजन्यबोधवृत्ति विषयोऽस्तीति तत्=लोमत्वं शक्यतावच्छेदकतावच्छेदकमित्युच्यते, अत्र शक्यता पशौ शक्यतावच्छेदकता लोमसु शक्यतावच्छेदकतावच्छेदकं लोमत्वमिति प्राप्तम्, तथा=संकेतविषय । प्रकृते=तदादिपदस्थले च बुद्धिविषयतावच्छेदकत्वं न तथा=घटत्वादितुल्यं शक्यविशेषणमिति न शक्यतावच्छेदक न वा लोमत्ववत् शक्यप्रकारविशेषणमिति न तत्त्वावच्छेदकम्=

जातित्वादिविशिष्टघटत्वाद्यवच्छिन्नस्य तदादिपदाद्यधीनबोधे तु बोधांशे बुद्धिविषयतावच्छेदकतावच्छेदकत्वोपलक्षितधर्मविशिष्टावच्छिन्नविषयकत्वावगाही संकेतः प्रयोजक इति तत्र जातित्वावच्छिन्नघटत्वादिनिष्ठप्रकारताक एव बोधो विषय इति न ' जातिमान् ' इत्याकारकबोधकाले ' घटः ' इत्याकारकबोधः ।

---

च्छेदकतावच्छेदकतावच्छेदक येन तदादिपदज यद्बोधे नियमेन भासतेत्यर्थ । यद्येत्यादि-पाठश्च क्वाचित्क एव ।

तदादिपदेन स्वरूपतो घटत्वादिप्रकारकबोधमुपपाद्य सम्प्रति किंचिद्धर्मविशिष्टघटत्वादिप्रका-रकबोधमुपपादयति—जातित्वादीति, ' अत्र जातिमानस्ति तमानय ' इत्यादिवाक्यश्रवणेन जाति-त्वादिविशिष्टघटत्वादिप्रकारको बोधो जायते इति जातित्वादिविशिष्ट यद् घटत्वादिकं तदव-च्छिन्नस्य घटादेस्तदादिपदाद्यधीनबोधे=तदादिपदेन बोधे जायमाने तादृशबोधांशे=तादृशबोधस्य बुद्धिविषयतावच्छेदकतावच्छेदकत्वोपलक्षितधर्मविशिष्टावच्छिन्नविषयकत्वावगाही य ' तदादिपदाद् बुद्धिविषयतावच्छेदकतावच्छेदकत्वोपलक्षितधर्मविशिष्टावच्छिन्नविषयको बोधो भवतु ' इत्याकारक-ईश्वरसंकेत स एव प्रयोजकस्तत्र=ना-किं वा ' जातिमान् तत्पदाद् बोद्धव्य ' इत्याकारको भगवत्संकेत स एव प्रयोजकस्तत्र=ना-दृशसंकेते च जातित्वावच्छिन्नघटत्वादिनिष्ठप्रकारताक एव बोधो विषयोऽस्तीति ' जातिमान् ' इत्याकारकबोधकाले=' अत्र जातिमानस्ति तमानय ' इत्याकारकवाक्यजन्यजातित्वविशिष्टघटत्वा-वच्छिन्नविषयकबोधकाले किं वा ' जातिमान् तत्पदाद् बोद्धव्य ' इत्याकारकोक्तसंकेतज्ञानकाले ' अत्र जातिमानस्ति तमानय ' इत्यादिवाक्यघटकतत्पदात् ' घट ' इत्याकारक =स्वरूपतो घटत्वप्रकारको बोधो न जायते किं तु जातित्वविशिष्टघटत्वप्रकारक एव बोधो जायते— संकेतेन यादृशबोधोऽवगाह्यते तादृशसंकेतज्ञानेन तादृशबोधस्यैव सम्भवादित्यर्थ । ' अत्र जातिमानस्ति तमानय ' इत्यत्र तत्पदेन घटबोधकाले घटे घटत्व घटत्वे च जातित्व विशेषण जातित्वे च बुद्धि-विषयतावच्छेदकतावच्छेदकत्वमुपलक्षणम्, बुद्धीति—बुद्धिविषयतावच्छेदक घटत्व तत्र जातिरेवेति घटत्वे यज्जातित्व तदेव घटत्वनिष्ठबुद्धिविषयतावच्छेदकताया अवच्छेदक जातित्वे यद् बुद्धिवि-षयतावच्छेदकतावच्छेदकत्व तदुपलक्षितो धर्मो जातित्वमेव तादृशजातित्वधर्मविशिष्ट घटत्व तादृशघटत्वावच्छिन्नो घटस्तादृशघटविषयकत्वावगाहीत्यन्वय ।

ननु ' किंचिद्धर्मप्रकारेण भासमाने धर्मे यदवच्छेदकत्व भासते तदा तद्विशिष्टे एव भासते न तु तदुपलक्षितेपि ' इति नियमोस्ति यथा पशुपदस्थले लोमत्वप्रकारेण भासमानेषु लोमसु यच्छक्यतावच्छेदकत्व भासत तल्लोमत्वविशिष्टेष्वेव लोमसु भासते न तु लोमत्वोपलक्षितेषु लोमसु तथा च लोमसु लोमत्व विशेषणमेव न तूपलक्षणमिति सिद्धम्, एव बुद्धिविषयतावच्छे-दकत्वप्रकारेण भासमाने घटत्वादौ यत् तदादिपदशक्यतावच्छेदकत्व भासते तदपि बुद्धिविषयता-वच्छेदकत्वेन विशिष्टे एव भासेत न तु तदुपलक्षिते तथा च घटत्वादौ बुद्धिविषयतावच्छेदकत्व

अथ 'किंचित्प्रकारेण भासमाने धर्मेऽवच्छेदकत्वभाने तद्विशिष्टे एव भासते न तदुपलक्षिते' इतिनियमः कथमन्यथा स्वरूपतो घटत्वावच्छिन्नाभावस्य न 'जातिमान्नास्ति' इत्याकारिका प्रतीतिः, एवं च बुद्धिविषयतावच्छेदकत्वोपलक्षिते कथं बोधविषयतावच्छेदकत्वं संकेतेनाऽवगाहनीयमितिचेत्?,

न–अवच्छेदकताया अवच्छेद्याश्रयविशेषणतापन्ने संसर्गविधया भाने एव तथाविधनियमात्. अन्यथा 'धूमव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताका-

विशेषणमेव स्यात् न तूपलक्षणं तेन च तदादिपदजन्यबोधे बुद्धिविषयतावच्छेदकत्वस्य घटत्वादिविशेषणतया नियमेन भानं प्राप्तमिति तदादिपदात् स्वरूपतो घटत्वादिप्रकारकबोधो न स्यादिति सिद्धं तथा च "मैवम्९१" इत्यादिना बुद्धिविषयतावच्छेदकत्वस्य यदुपलक्षणत्वमुक्तं तन्न युक्तमित्याशयेनाशङ्कते–अथेति। उक्तनियमानङ्गीकारे बाधकमाह– कथमन्यथेति, यद्युक्तनियमो न स्यात्तदा घटाभावमुद्दिश्य 'जातिमान्नास्ति' इत्युक्ते जातित्वोपलक्षिते एव घटत्वेऽभावीयप्रतियोगितावच्छेदकत्वं भासेत उपलक्षणस्य च शाब्दबोधे भानं न भवतीति 'जातिमान्नास्ति' इत्यत्र स्वरूपत एव घटत्वस्य प्रतियोगितावच्छेदकत्वं प्राप्तं तथा च 'जातिमान्नास्ति' इत्यत्र स्वरूपतो घटत्वावच्छिन्नाभावस्य=घटत्वावच्छिन्नप्रतियोगिताकाभावस्य प्रतीतिः स्यादिति स्वरूपतो घटत्वावच्छिन्नाभावस्य 'जातिमान्नास्ति' इत्याकारापि प्रतीतिः स्यादेव तथा च 'घटो नास्ति' इत्यत्रापि स्वरूपतो घटत्वावच्छिन्नाभावस्य प्रतीतिर्भवतीति 'घटो नास्ति' 'जातिमान्नास्ति' इतिवाक्ययोः समानार्थकत्वे प्राप्ते घटशून्यपटवति देशे काले च यथा 'घटो नास्ति' इत्याकारा प्रतीतिर्भवति तथा 'जातिमान्नास्ति' इत्याकारापि प्रतीतिः स्यादेव न चैव भवति तत्र विद्यमानस्य पटस्यापि जातिमत्त्वात्, उक्तनियमस्वीकारे तु 'जातिमान्नास्ति' इत्यत्र जातित्वविशिष्टे एव घटत्वे प्रतियोगितावच्छेदकत्वं भासते इति जातित्वविशिष्टघटत्वावच्छिन्नप्रतियोगिताकाभावस्यैव प्रतीतिसंभवात् स्वरूपतो घटत्वावच्छिन्नाभावस्य 'जातिमान्नास्ति' इत्याकारेण प्रतीतिर्न जायते 'घटो नास्ति' इत्यत्र च स्वरूपतो घटत्वावच्छिन्नाभावस्य प्रतीतिर्जायते तथा च 'घटो नास्ति' 'जातिमान्नास्ति' इतिवाक्ययोर्भिन्नार्थकत्वे प्राप्ते घटशून्ये पटवति देशे काले च 'घटो नास्ति' इतिप्रतीतिसम्भवेपि 'जातिमान्नास्ति' इतिप्रतीतिर्न सम्भवति। स्वाभिप्रायमुद्घाटयति–एवं चेति, 'घटत्वादौ' इतिशेषः। किं तु बुद्धिविषयतावच्छेदकत्वविशिष्टे एव घटत्वादौ बोधविषयतावच्छेदकत्वं संकेतेनावगाहनीयं तथा च घटत्वादौ बुद्धिविषयतावच्छेदकत्वस्य विशेषणत्वं प्राप्तं न तूपलक्षणत्वं विशेषणत्वाच्च तदादिपदजन्यबोधे बुद्धिविषयतावच्छेदकत्वस्य घटत्वादिप्रकारतया नियमेन भानं स्यादिति तदादिपदात् स्वरूपतो घटत्वादिप्रकारकबोधानुपपत्तिरित्यर्थः।

परिहरति–नेति, अवच्छेद्यं यत् प्रतियोगित्वादिकं तदाश्रयो यो घटादिस्तत्र विशेषणतापन्ने घटत्वादौ यत्रावच्छेदकता संसर्गविधयैव भासते तत्रैव तथाविधः="किंचित्प्रकारेण भासमाने

भाववान्' इत्याकारकव्यापकतावच्छेदकत्वोपलक्षितवह्नित्वाद्यवच्छिन्नाभावमती- त्यनुपपत्तेः। प्रकृते च 'तत्पदं बुद्धिस्थप्रकारावच्छिन्नविषयताकबोधं जन- यतु' इत्याकारकोऽवच्छेद्यावच्छेदकभावप्रकारक एव संकेतोऽङ्गीकार्य इत्यनु- पपत्तेरभावात्।

---

धर्मे" इत्याकारको नियमः स्वीक्रियते यथा 'जातिमान्नास्ति' इत्यत्रावच्छेद्यं यत् प्रतियोगित्वं तदाश्रयीभूतघटे विशेषणतापन्ने घटत्वे जातित्वप्रकारेण भासमाने प्रतियोगितावच्छेदकत्वं संसर्गविधयैव भासते पदेनानुपस्थितत्वादिति जातित्वप्रकारेण भासमाने घटत्वे यत् प्रतियोगितावच्छेदकत्वं भासते तज्जातित्वविशिष्टे एव भासते न तु जातित्वोपलक्षिते तथा च जातित्वस्य घटत्वे विशेषणत्वं प्राप्तं न तूपलक्षणत्वम्। विपक्षे बाधकमाह—अन्यथेति, यदि "किंचित्प्रकारेण भासमाने धर्मे" इति नियमः सर्वत्रैव प्रवर्तेत तदा 'ह्रदो धूमव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभाववान्' इत्याकारा या धूमव्यापकतावच्छेदकत्वोपलक्षितवह्नित्वावच्छिन्नाभावस्य प्रतीतिर्जायते सा नोपपद्येत यतोऽत्र धूमव्यापकतावच्छेदकत्वप्रकारेण भासमाने एव वह्नित्वे प्रतियोगितावच्छेदकत्वं भासते इत्युक्तनियमेन धूमव्यापकतावच्छेदकत्वविशिष्टे एव वह्नित्वे प्रतियोगितावच्छेदकत्वं भासेत न तु तदुपलक्षितेऽपि तथा चोक्तस्थले धूमव्यापकतावच्छेदकत्वविशिष्टवह्नित्वावच्छिन्नप्रतियोगिताकाभावस्यैव प्रतीतिः स्यान्न तु धूमव्यापकतावच्छेदकत्वोपलक्षितवह्नित्वावच्छिन्नप्रतियोगिताकाभावस्य तथा च धूमव्यापकतावच्छेदकत्वस्य वह्नित्वे विशेषणत्वप्राप्त्या शाब्दबोधे नियमेन भानं स्यादेव न चैवमस्ति किं तूक्तस्थले धूमव्यापकतावच्छेदकत्वोपलक्षितवह्नित्वावच्छिन्नप्रतियोगिताकाभावस्य प्रतीतिर्जायते एव तदुपपत्त्यर्थमुक्तनियमस्योक्तरीत्या संकोचः कर्तव्यस्तथा चावच्छेदकताया संसर्गविधया भानस्थले एवोक्तनियमस्वीकारे 'धूमव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभाववान्' इत्यत्र प्रतियोगितावच्छेदकता संसर्गविधया न भासते किं तु प्रकारतयैव— पदेनोपस्थितत्वादित्यत्रोक्तनियमस्याप्रवृत्त्यभावेन धूमव्यापकतावच्छेदकत्वोपलक्षिते एव वह्नित्वे प्रतियोगितावच्छेदकत्वं भासते न तु धूमव्यापकतावच्छेदकत्वविशिष्टे तथा चोक्तस्थले धूमव्यापकतावच्छेदकत्वोपलक्षितवह्नित्वावच्छिन्नप्रतियोगिताकाभावप्रतीतेरनुपपत्तिर्नास्तीत्यर्थः। धूमेति—धूमव्यापकता वह्नौ धूमव्यापकतावच्छेदकरूपं वह्नित्वं तादृशवह्नित्वावच्छिन्नप्रतियोगिताकाभाववानित्यन्वयः। धूमव्यापकतावच्छेदकत्वस्योपलक्षणत्वाच्छाब्दबोधे भानापत्तिरपि नास्ति। उपसंहरति—प्रकृते चेति, प्रकृते=तदादिपदस्थले च 'तत्पदं बुद्धिस्थप्रकारावच्छिन्नविषयताकबोधं जनयतु' इत्याकारकोऽवच्छेद्यावच्छेदकभावप्रकारक एव संकेतः स्वीकार्यस्तथा चात्र घटत्वादौ या बोधविषयतावच्छेदकता भासते सा संसर्गविधया न भासते किं तु प्रकारतयैव— पदेनोपस्थितत्वादित्यत्रोक्तनियमस्याप्रवृत्त्यभावेन बुद्धिविषयतावच्छेदकत्वोपलक्षिते एव घटत्वादौ तदादिपदजन्यबोधविषयतावच्छेदकत्वं भासते न तु बुद्धिविषयतावच्छेदकत्वविशिष्टे तथा च बुद्धिविषयतावच्छेदकत्वं घटत्वादावुपलक्षणमेव न विशेषणमिति न तदादिपदजन्यबोधे घटत्वादिप्रकारतया तद्भानापत्तिरिति न तदादि-

**स्वरूपतो घटत्वादिप्रकारकस्मरणशाब्दबोधाद्युपयोगी शक्तिग्रहः स्वरूपतो घटत्वादिप्रकारक एव, यदा स्वरूपतो यद्धर्मप्रकारकज्ञानसामग्री तदैव स्वरूपतस्तद्धर्मप्रकारेण शक्तिं गृहीत्वा स्वरूपतस्तत्प्रकारेण धर्मिणं स्मरत्यनन्तरमनुभवति च ।**

यदात् स्वरूपतो घटत्वादिप्रकारकबोधानुपपत्तिरित्यर्थः । बुद्धिस्थेति– बुद्धिस्थप्रकारो घटत्वादिस्तदवच्छिन्नविषयताकबोधमित्यन्वयः । अवच्छेद्येति– अवच्छेद्या बोधविषयता तदवच्छेदकत्वं घटत्वादौ विज्ञेयम् । अवच्छेद्यावच्छेदकभावप्रकारकोक्तसंकेते स्वीकृतेऽवच्छेदकतायाः प्रकारतयैव भानेन संसर्गविधया भानाभावात् तदादिपदस्थले उक्तनियमप्रवृत्त्यभावेन बुद्धिविषयतावच्छेदकत्वस्योपलक्षणत्वमुक्तमुपपन्नमिति भावः ।

तदादिपदशक्तिस्वरूपमुपपाद्य सम्प्रति तदादिपदशक्तिज्ञानमुपपादयति– स्वरूपत इति । स्पष्टोऽयं ग्रन्थः । ज्ञानसामग्री=शक्तिज्ञानसामग्री । धर्मिणं घटादिकम् । स्मरणमुपस्थितिः । अनुभवः शाब्दबोधः ।

ननु 'बुद्धिविषयतावच्छेदकप्रकारवान् तत्पदशक्यः' इत्येव बुद्धिविषयतावच्छेदकप्रकारकस्तु शक्तिग्रहो जायते तादृशशक्तिज्ञानादपि स्मरणशाब्दबोधौ तु घटत्वप्रकारकावेवेष्टौ न तु बुद्धिविषयतावच्छेदकप्रकारकौ तच्च न सम्भवति शक्तिज्ञानोपस्थितिशाब्दबोधानां समानप्रकारकत्वनियमादिति, अत्र तार्किकास्तु वदन्ति– यथानुमितिस्थले 'धूमो वह्निव्याप्यः' 'धूमवान् पर्वतः' इतिज्ञानद्वयात् पक्षधर्मताबलात् 'वह्निव्याप्यधूमवान् पर्वतः' इत्याकारकं तृतीयं परामर्शात्मकं ज्ञानमुत्पद्यते तथा प्रकृतेऽपि 'बुद्धिविषयतावच्छेदकप्रकारवांस्तत्पदशक्यः' 'घटश्च बुद्धिविषयतावच्छेदकप्रकारवान्' इत्याकारकज्ञानद्वयात् पक्षधर्मताबलात् 'घटस्तत्पदशक्यः' इत्याकारकं घटत्वप्रकारकं शक्तिज्ञानं जायते तादृशघटत्वप्रकारकशक्तिज्ञानाद् घटत्वप्रकारकौ स्मरणशाब्दबोधौ नानुपपन्नौ । मीमांसकास्त्वाहुः– यथा 'वह्निव्याप्यो धूमः' 'धूमवांश्च पर्वतः' इतिज्ञानद्वयादेवानुमितिर्जायते न तु मध्ये तार्किकसम्मतं 'वह्निव्याप्यधूमवान् पर्वतः' इतिपरामर्शात्मकं ज्ञानं जायते तथा प्रकृतेऽपि 'बुद्धिविषयतावच्छेदकधर्मवांस्तत्पदशक्यः' 'घटश्च बुद्धिविषयतावच्छेदकधर्मवान्' इत्याकारकज्ञानद्वयादेव घटत्वप्रकारकस्मरणशाब्दबोधौ सम्भवत इति मध्ये 'घटस्तत्पदशक्यः' इत्याकारकं तृतीयं ज्ञानं नैवोत्पद्यते किं तु 'बुद्धिविषयतावच्छेदकधर्मवांस्तत्पदशक्यः' 'घटत्वं च बुद्धिविषयतावच्छेदको धर्मः' किं वा 'घटश्च बुद्धिविषयतावच्छेदकधर्मवान्' इत्याकारकबुद्धिविशिष्टबुद्ध्या 'घटस्तत्पदशक्यो न वा' 'घटस्तत्पदशक्यो न' इत्याकारकसंशयविपर्ययोः प्रतिबन्धो भवतीत्यर्थादेव 'घटस्तत्पदशक्यः' इत्याकारकं घटत्वप्रकारकं मानसं शक्तिज्ञानं जायते तदनन्तरं घटत्वप्रकारकस्मरणशाब्दबोधयोर्न काचिदनुपपत्तिः ।

ननु शाब्दबोधं प्रति शक्तिज्ञानं कारणं शक्तिज्ञानं च व्यवहारदर्शनेन जायते तथा च तदादिपदघटितवाक्याद् घटादौ व्यवहारे दृष्टे तेन व्यवहारदर्शनेन शक्तिग्रहे जाते घटादिबोधसम्भवेऽपि

अथैवमपि तत्पदे चैत्रत्वविशिष्टवाचकतासंदेहस्य दुरुच्छेदतया तत्पदाद् व्य-
वहारदर्शनाद्विषयचैत्रत्वावच्छिन्नविषयकशाब्दबोधो दुरुपपाद एव- तद्धर्मप्रकार-
कशाब्दबोधे तद्धर्मविशिष्टवाचकतानिश्चयस्य हेतुत्वात्. अन्यथा गवादिपदाद्-
भ्रान्तस्यापि शक्त्या सास्नादिमत्त्वप्रकारेण शाब्दबोधापत्तेरिति चेत् ?, न- तत्पद-
प्रयोजकबुद्धिप्रकारतया गृहीतघटत्वपटत्वादिविशिष्टे व्यवहारदर्शनात् तत्पदस्य
शक्तिं गृहीत्वा ' यद् यत् पदं यादृशयादृशधर्मावच्छिन्नविषयकबुद्ध्या प्रयुज्यते
तत् तत् पदं तत्तद्धर्मविशिष्टशक्तम् ' इति सामान्यतो व्याप्तिमवधारयति तद-
नन्तरं च प्रत्यक्षगृहीतचैत्रत्वादिविशिष्टविषयकबुद्धिप्रयोज्यत्वं प्रकरणादिना यत्र
तत्पदे गृह्णाति तत्र पक्षे तादृशहेतुना चैत्रत्वविशिष्टवाचकत्वस्य प्रागसिद्धस्यापि
पक्षधर्मताबलादनुमित्यात्मकनिश्चयेनाऽवगाहनसंभवान्न काप्यनुपपत्तिः ।

केचित्तु बुद्धिविषयतावच्छेदकत्वेनाऽनुगतधर्मेण सकलधर्मविषयकसामान्य-

---

र्ऽतफोटे प्रतिबन्धेन ' चैत्रस्तत्पदशक्य ' इत्याकारक निश्चयात्मक मानसशक्तिज्ञान समनत्वेन
तत्र शक्तिज्ञान स्वरूपतश्चैत्रत्वप्रकारकमेवेति तेन स्वरूपतश्चैत्रप्रकारकस्मरणशाब्दबोधयोर्न
काचिदनुपपत्तिरिति सार ।

ननूक्तरीत्या तत्पदे बुद्धिविषयतावच्छेदकधर्मविशिष्टवाचकतानिश्चये जातेति चैत्रत्वविशिष्टवाच-
कतासंदेहस्य दुरुच्छेदतया तत्पदाद् व्यवहारदर्शनाद्विषयो यश्चैत्रत्वावच्छिन्नस्तद्विषयकश्चैत्रत्वप्रका-
रकशाब्दबोधो दुरुपपाद एवेत्याशङ्कते-अथैवमपीति । उक्ते हेतुमाह- तद्धर्मेति । तद्धर्मप्रकार-
कशाब्दबोधे तद्धर्मविशिष्टवाचकतानिश्चयस्य हेतुत्वाभावे बाधकमाह- अन्यथेति । न च गवा-
दिपदादभ्रान्तस्य शक्त्या सास्नादिमत्त्वप्रकारकशाब्दबोध इष्ट इति तन्निरासार्थं तद्धर्मप्रकारकशा-
ब्दबोधं प्रति तद्धर्मविशिष्टवाचकतानिश्चयस्य हेतुत्वं स्वीकार्यं तथा चाभ्रान्तस्य गवादिपदे गोत्वा-
दिविशिष्टवाचकतानिश्चयेन सास्नादिमत्त्वविशिष्टवाचकतानिश्चयस्याभावादेव गवादिपदाच्छक्त्या
सास्नादिमत्त्वप्रकारकबोधस्यापत्तिर्नास्ति एवं प्रकृतेपि तदादिपदे चैत्रत्वविशिष्टवाचकतानिश्चयस्या-
भावादेव तदादिपदाच्चैत्रत्वादिप्रकारकबोधो दुरुपपाद एवेत्यर्थः । सिद्धान्तेन परिहरति- नेति,
तत्पदप्रयोजकस्य तत्पदप्रयोजिका वा या बुद्धिरित्यन्वयः । विशेषशक्तिज्ञानस्य स्वरूपमुक्त्वा
सामान्यतः शक्तिज्ञानस्य स्वरूपमाह- यद् यदिति । तदनन्तरम्=सामान्यतो व्याप्तिघटितशक्ति-
ज्ञानादनन्तरम् । प्रत्यक्षगृहीतो यश्चैत्रत्वादिविशिष्टस्तद्विषयकबुद्धिप्रयोज्यत्वं प्रकरणादिना यदा
तत्पदे गृह्णाति तदा पक्षे तत्पदे तादृशहेतुना=प्रत्यक्षगृहीतचैत्रत्वादिविशिष्टविषयकबुद्धिप्रयोज्यत्वेन
हेतुना प्रागसिद्धस्यापि चैत्रत्वविशिष्टवाचकत्वस्य पक्षधर्मताबलादनुमित्यात्मकनिश्चयेनाऽवगाहनसं-
भवाच्चैत्रत्वादिविशिष्टविषयकशाब्दबोधे न काप्यनुपपत्तिरित्यर्थः ।

मुरारिमिश्रादीनां मतमाह- केचिदिति, बुद्धिविषयतावच्छेदकत्वेनानुगतधर्मेण रूपेण घट-

प्रत्यासत्त्यऽधीनशक्त्यऽनुभवे प्रमुष्टबुद्धिविषयतावच्छेदकत्वांशं स्वरूपतश्चैत्रत्वादिप्रकारकस्मरणं निराबाधमेवेति तन्मूलकमेव स्वरूपतोऽपूर्वचैत्रत्वादिप्रकारकं शाब्दज्ञानं भविष्यतीति किमनुपपन्नम् ? स्वरूपतस्तत्प्रकारकस्मरणे स्वरूपतस्तत्प्रकारकाऽनुभवसंस्कारयोरनपेक्षणात् । उद्बोधकवैचित्र्यादेव कदाचित् ' जातिमान् ' इत्याकारकं कदाचित् ' घटः ' इत्याकारकं विलक्षणं स्मरणमिति नियमोपपत्तेः ।

स्वरूपतो घटत्वादिप्रकारकानुभवजनितसंस्कारवतोपि जातित्वादिना घटत्वा-

त्वपटत्वादिसकलधर्मविषयके सामान्यप्रत्यासत्त्या शक्त्यनुभवे=' बुद्धिविषयतावच्छेदकत्वविशिष्टधर्मावच्छिन्नस्तत्पदशक्यः ' इत्याकारके शक्तिज्ञाने जाते तत्र बुद्धिविषयतावच्छेदकत्वांशस्य प्रमोषेण स्वरूपतश्चैत्रत्वादिप्रकारकं स्मरणं निराबाधमेवेति तन्मूलकमेव=स्वरूपतश्चैत्रत्वादिप्रकारकस्मरणेन स्वरूपतश्चैत्रत्वादिप्रकारकशाब्दबोधे न काचिदनुपपत्तिरित्यर्थः । अननुभूतस्य स्मरणं न भवतीति नियमसत्त्वेप्यनुभूतस्य स्मरणं भवत्येवेति नियमाभावाद् बुद्धिविषयतावच्छेदकत्वविशिष्टघटत्वाद्यवच्छिन्नेऽपि तदादिपदस्य शक्तिग्रहे जाते घटत्वादिविशेषणीभूतबुद्धिविषयतावच्छेदकत्वांशविषयकसंस्कारनाशेन बुद्धिविषयतावच्छेदकत्वांशस्य विस्मरणे जाते तदादिपदात् स्वरूपतो घटत्वादिप्रकारकस्मरणशाब्दबोधयोर्न काचिदनुपपत्तिः, शक्तिज्ञानस्मरणशाब्दबोधानां समानप्रकारकत्वनियमात् शक्तिज्ञानविषयीभूतबुद्धिविषयतावच्छेदकत्वांशस्य प्रमोषेण स्वरूपतो घटत्वादिप्रकारकस्यैव शक्तिज्ञानस्य परिशिष्टत्वादितिभावः । उक्तानुपपत्त्यभावे हेतुमाह– स्वरूपत इति, स्वरूपतस्तद्धर्मप्रकारकस्मरणं प्रति स्वरूपतस्तद्धर्मप्रकारकानुभवस्य तादृशानुभवजन्यस्य स्वरूपतस्तद्धर्मप्रकारकसंस्कारस्य च नियमेनापेक्षा नास्तीति बुद्धिविषयतावच्छेदकत्वविशिष्टघटत्वादिप्रकारकेऽप्यनुभवे तज्जन्यसंस्कारे च जाते बुद्धिविषयतावच्छेदकत्वांशप्रमोषेण स्वरूपतो घटत्वादिप्रकारकस्मरणशाब्दबोधयोर्न का चिदनुपपत्तिरित्यर्थः । ननु यदि स्वरूपतो घटत्वादिप्रकारकस्मरणं प्रति स्वरूपतो घटत्वादिप्रकारकानुभवसंस्कारयोर्नाऽपेक्षा किं तु बुद्धिविषयतावच्छेदकत्वांशप्रमोष एव कारणं तदा सर्वत्रैव घटत्वादिविशेषणीभूतजातित्वाद्यंशस्य प्रमोषसम्भवेन स्वरूपत एव घटत्वादिप्रकारकं स्मरणं तदादिपदात्स्यात् जातित्वादिविशिष्टघटत्वादिप्रकारकं च ' जातिमान् ' इत्याकारकं स्मरणं न स्यात्, अस्मन्मते च स्वरूपतो घटत्वप्रकारकानुभवसंस्काराभ्यां स्वरूपतः ' घटः ' इत्याकारकं जातित्वविशिष्टघटत्वादिप्रकारकानुभवसंस्काराभ्यां च ' जातिमान् ' इत्याकारकं स्मरणमुपपद्यते इत्याशङ्क्याह– उद्बोधकेति, जातित्वविशिष्टघटत्वप्रकारकसंस्कारस्योद्बोधके सति तदुद्बुद्धसंस्कारात् ' जातिमान् ' इत्याकारकं स्मरणं जायते तादृशोद्बोधकाभावे च सति ' घटः ' इत्याकारकं स्वरूपतो घटत्वप्रकारकं स्मरणं जायते इति नियम उद्बोधकवैचित्र्यात् संभवत्येवेति न काचिदनुपपत्तिरित्यर्थः ।

उद्बोधकवैचित्र्यस्य स्मरणविशेषं प्रति नियामकत्वमुपपादयति–स्वरूपत इति, स्वरूपतस्त

अथैवमपि तत्पदं चैत्रत्वविशिष्टवाचकतासंदेहस्य दुरुच्छेदतया तत्पदाद् व्यवहारदर्शनाविषयचैत्रत्वावच्छिन्नविषयकशाब्दबोधो दुरुपपाद एव– तद्धर्मप्रकारकशाब्दबोधे तद्धर्मविशिष्टवाचकतानिश्चयस्य हेतुत्वात्. अन्यथा गवादिपदाद्भ्रान्तस्यापि शक्त्या सास्नादिमत्त्वप्रकारेण शाब्दबोधापत्तेरिति चेत्?, न– तत्पदप्रयोजकबुद्धिप्रकारतया गृहीतघटत्वपटत्वादिविशिष्टे व्यवहारदर्शनात् तत्पदस्य शक्तिं गृहीत्वा 'यद् यत् पदं यादृशयादृशधर्मावच्छिन्नविषयकबुद्ध्या प्रयुज्यते तत् तत् पदं तत्तद्धर्मविशिष्टशक्तम्' इति सामान्यतो व्याप्तिमवधारयति तदनन्तरं च प्रत्यक्षगृहीतचैत्रत्वादिविशिष्टविषयकबुद्धिप्रयोज्यत्वं प्रकरणादिना यत्र तत्पदे गृह्णाति तत्र पक्षे तादृशहेतुना चैत्रत्वविशिष्टवाचकत्वस्य प्रागसिद्धस्यापि पक्षधर्मताबलादनुमित्यात्मकनिश्चयेनाऽवगाहनसंभवान्न काप्यनुपपत्तिः।

केचित्तु बुद्धिविषयतावच्छेदकत्वेनाऽनुगतधर्मेण सकलधर्मविषयकसामान्य-

---

रीतकोटि प्रतिबन्धेन 'चैत्रस्तत्पदशक्य' इत्याकारक निश्चयात्मक मानसशक्तिज्ञान सम्भवत्वेन तत्र शक्तिज्ञान स्वरूपतश्चैत्रत्वप्रकारकमेवेति तेन स्वरूपतश्चैत्रत्वप्रकारकस्मरणशाब्दबोधयोर्न काचिदनुपपत्तिरिति सारः।

ननूक्तरीत्या तत्पदे बुद्धिविषयतावच्छेदकधर्मविशिष्टवाचकतानिश्चये जातेऽपि चैत्रत्वविशिष्टवाचकतासंदेहस्य दुरुच्छेदतया तत्पदाद् व्यवहारदर्शनाविषयो यश्चैत्रत्वावच्छिन्नस्तद्विषयकश्चैत्रत्वप्रकारकशाब्दबोधो दुरुपपाद एवेत्याशङ्कते—अथैवमपीति। उक्ते हेतुमाह— तद्धर्मेति। तद्धर्मप्रकारकशाब्दबोधे तद्धर्मविशिष्टवाचकतानिश्चयस्य हेतुत्वाभावे बाधकमाह— अन्यथेति। न च गवादिपदादभ्रान्तस्य शक्त्या सास्नादिमत्त्वप्रकारकशाब्दबोध इष्ट इति तन्निरासार्थं तद्धर्मप्रकारकशाब्दबोधं प्रति तद्धर्मविशिष्टवाचकतानिश्चयस्य हेतुत्वं स्वीकार्यं तथा चाभ्रान्तस्य गवादिपदे गोत्वादिविशिष्टवाचकतानिश्चयेन सास्नादिमत्त्वविशिष्टवाचकतानिश्चयस्याभावादेव गवादिपदाच्छक्त्या सास्नादिमत्त्वप्रकारकबोधस्यापत्तिर्नास्ति. एवं प्रकृतेऽपि तदादिपदे चैत्रत्वविशिष्टवाचकतानिश्चयस्याभावादेव तदादिपदाच्चैत्रत्वादिप्रकारकबोधो दुरुपपाद एवेत्यर्थः। सिद्धान्तेन परिहरति— नेति, तत्पदप्रयोजकस्य तत्पदप्रयोजिका वा या बुद्धिरित्यन्वयः। विशेषशक्तिज्ञानस्य स्वरूपमुक्त्वा सामान्यतः शक्तिज्ञानस्य स्वरूपमाह— यद् यदिति। तदनन्तरम्=सामान्यतो व्याप्तिघटितशक्तिज्ञानादनन्तरम्। प्रत्यक्षगृहीतो यश्चैत्रत्वादिविशिष्टस्तद्विषयकबुद्धिप्रयोज्यत्वं प्रकरणादिना यदा तत्पदे गृह्णाति तदा पक्षे तत्पदे तादृशहेतुना=प्रत्यक्षगृहीतचैत्रत्वादिविशिष्टविषयकबुद्धिप्रयोज्यत्वेन हेतुना प्रागसिद्धस्यापि चैत्रत्वविशिष्टवाचकत्वस्य पक्षधर्मताबलादनुमित्यात्मकनिश्चयेनाऽवगाहनसंभवाच्चैत्रत्वादिविशिष्टविषयकशाब्दबोधे न काप्यनुपपत्तिरित्यर्थः।

मुरारिमिश्रादीनां मतमाह— केचिदिति, बुद्धिविषयतावच्छेदकत्वेनानुगतधर्मेण रूपेण घट-

प्रत्यासत्त्यऽधीनशक्त्यऽनुभवे प्रमुष्टबुद्धिविषयतावच्छेदकत्वांशं स्वरूपतश्चैत्रत्वादिप्रकारकस्मरणं निराबाधमेवेति तन्मूलकमेव स्वरूपतोऽपूर्वचैत्रत्वादिप्रकारकं शाब्दज्ञानं भविष्यतीति किमनुपपन्नम् ? स्वरूपतस्तत्प्रकारकस्मरणे स्वरूपतस्तत्प्रकारकाऽनुभवसंस्कारयोरनपेक्षणात् । उद्बोधकवैचित्र्यादेव कदाचित् 'जातिमान्' इत्याकारकं कदाचित् 'घटः' इत्याकारकं विलक्षणं स्मरणमिति नियमोपपत्तेः ।

स्वरूपतो घटत्वादिप्रकारकानुभवजनितसंस्कारवतोपि जातित्वादिना घटत्वास्वपटत्वादिसकलधर्मविषयके सामान्यप्रत्यासत्त्या शक्त्यनुभवे=' बुद्धिविषयतावच्छेदकत्वविशिष्टधर्मावच्छिन्नस्तत्पदशक्यः ' इत्याकारके शक्तिज्ञाने जाते तत्र बुद्धिविषयतावच्छेदकत्वांशस्य प्रमोषेण स्वरूपतश्चैत्रत्वादिप्रकारक स्मरणं निराबाधमेवेति तन्मूलकमेव=स्वरूपतश्चैत्रत्वादिप्रकारकस्मरणेन स्वरूपतश्चैत्रत्वादिप्रकारकशाब्दबोधे न काचिदनुपपत्तिरित्यर्थः । अननुभूतस्य स्मरणं न भवतीति नियमसत्त्वेप्यनुभूतस्य स्मरण भवत्येवेति नियमाभावाद् बुद्धिविषयतावच्छेदकत्वविशिष्टघटत्वाद्यवच्छिन्नेपि तदादिपदस्य शक्तिग्रहे जाते घटत्वादिविशेषणीभूतबुद्धिविषयतावच्छेदकत्वांशविषयकसंस्कारनाशेन बुद्धिविषयतावच्छेदकत्वांशस्य विस्मरणे जाते तदादिपदात् स्वरूपतो घटत्वादिप्रकारकस्मरणशाब्दबोधयोर्न काचिदनुपपत्तिः, शक्तिज्ञानस्मरणशाब्दबोधानां समानप्रकारकत्वनियमात् शक्तिज्ञानविषयीभूतबुद्धिविषयतावच्छेदकत्वांशस्य प्रमोषेण स्वरूपतो घटत्वादिप्रकारकस्यैव शक्तिज्ञानस्य परिशिष्टत्वादितिभावः । उक्तानुपपत्त्यभावे हेतुमाह— स्वरूपत इति, स्वरूपतस्तद्धर्मप्रकारकस्मरणं प्रति स्वरूपतस्तद्धर्मप्रकारकानुभवस्य तादृशानुभवजन्यस्य स्वरूपतस्तद्धर्मप्रकारकसंस्कारस्य च नियमेनापेक्षा नास्तीति बुद्धिविषयतावच्छेदकत्वविशिष्टघटत्वादिप्रकारकेप्यनुभवे तज्जन्यसंस्कारे च जाते बुद्धिविषयतावच्छेदकत्वांशप्रमोषेण स्वरूपतो घटत्वादिप्रकारकस्मरणशाब्दबोधयोर्न का चिदनुपपत्तिरित्यर्थ. । ननु यदि स्वरूपतो घटत्वादिप्रकारकस्मरण प्रति स्वरूपतो घटत्वादिप्रकारकानुभवसंस्कारयोर्नोऽपेक्षा किं तु बुद्धिविषयतावच्छेदकत्वांशप्रमोष एव कारणं तदा सर्वत्रैव घटत्वादिविशेषणीभूतजातित्वांशस्य प्रमोषसंभवेन स्वरूपत एव घटत्वादिप्रकारक स्मरण तदादिपदात्स्यात् जातित्वादिविशिष्टघटत्वादिप्रकारकं च ' जातिमान् ' इत्याकारक स्मरणं न स्यात्, अस्मन्मते च स्वरूपतो घटत्वप्रकारकानुभवसंस्काराभ्यां स्वरूपतः ' घटः ' इत्याकारकं जातित्वविशिष्टघटत्वादिप्रकारकानुभवसंस्काराभ्यां च ' जातिमान् ' इत्याकारकं स्मरणमुपपद्यते इत्याशङ्क्याह— उद्बोधकेति, जातित्वविशिष्टघटत्वप्रकारकसंस्कारस्योद्बोधके सति तदुद्बुद्धसंस्कारात् ' जातिमान् ' इत्याकारकं स्मरणं जायते तादृशोद्बोधकाभावे च सति ' घटः ' इत्याकारकं स्वरूपतो घटत्वप्रकारकं स्मरणं जायते इति नियम उद्बोधकवैचित्र्यात् संभवत्येवेति न काचिदनुपपत्तिरित्यर्थः ।

उद्बोधकवैचित्र्यस्य स्मरणविशेषं प्रति नियामकत्वमुपपादयति—स्वरूपत इति, स्वरूपतस्त

अथैवमपि तत्पदे चैत्रत्वविशिष्टवाचकतासंदेहस्य दुरुच्छेदतया तत्पदाद् व्यवहारदर्शनाविषयचैत्रत्वावच्छिन्नविषयकशाब्दबोधो दुरुपपाद एव– तद्धर्मप्रकारकशाब्दबोधे तद्धर्मविशिष्टवाचकतानिश्चयस्य हेतुत्वात्. अन्यथा गवादिपदादभ्रान्तस्यापि शक्तया सास्नादिमत्त्वप्रकारेण शाब्दबोधापत्तेरिति चेत् ?, न– तत्पदप्रयोजकबुद्धिप्रकारतया गृहीतघटत्वपटत्वादिविशिष्टे व्यवहारदर्शनात् तत्पदस्य शक्तिं गृहीत्वा 'यद् यत् पदं यादृशयादृशधर्मावच्छिन्नविषयकबुद्ध्या प्रयुज्यते तत् तत् पदं तत्तद्धर्मविशिष्टशक्तम्' इति सामान्यतो व्याप्तिमवधारयति तदनन्तरं च प्रत्यक्षगृहीतचैत्रत्वादिविशिष्टविषयकबुद्धिप्रयोज्यत्वं प्रकरणादिना यत्र तत्पदे गृह्णाति तत्र पक्षे तादृशहेतुना चैत्रत्वविशिष्टवाचकत्वस्य प्रागसिद्धस्यापि पक्षधर्मताबलादनुमित्यात्मकनिश्चयेनाऽवगाहनसंभवान्न काप्यनुपपत्तिः।

केचित्तु बुद्धिविषयतावच्छेदकत्वेनाऽनुगतधर्मेण सकलधर्मविषयकसामान्य-

---

रीतकोटे प्रतिबन्धेन 'चैत्रस्तत्पदशक्य' इत्याकारक निश्चयात्मक मानसशक्तिज्ञान सम्भवत्येव तच्च शक्तिज्ञान स्वरूपतश्चैत्रत्वप्रकारकमेवेति तेन स्वरूपतश्चैत्रत्वप्रकारकस्मरणशाब्दबोधयोर्न काचिदनुपपत्तिरिति सार ।

ननूक्तरीत्या तत्पदे बुद्धिविषयतावच्छेदकधर्मविशिष्टवाचकतानिश्चये जातेऽपि चैत्रत्वविशिष्टवाचकतासंदेहस्य दुरुच्छेदतया तत्पदात् व्यवहारदर्शनाविषयो यश्चैत्रत्वावच्छिन्नस्तद्विषयकचैत्रत्वप्रकारकशाब्दबोधो दुरुपपाद एवेत्याशङ्कते–अथैवमपीति । उक्तं हेतुमाह– तद्धर्मेति । तद्धर्मप्रकारकशाब्दबोधे तद्धर्मविशिष्टवाचकतानिश्चयस्य हेतुत्वाभावे बाधकमाह– अन्यथेति । न च गवादिपदादभ्रान्तस्य शक्तया सास्नादिमत्त्वप्रकारकशाब्दबोध इष्ट इति तन्निरासार्थं तद्धर्मप्रकारकशाब्दबोधं प्रति तद्धर्मविशिष्टवाचकतानिश्चयस्य हेतुत्व स्वीकार्यं तथा चाभ्रान्तस्य गवादिपदे गोत्वादिविशिष्टवाचकतानिश्चयेन सास्नादिमत्त्वविशिष्टवाचकतानिश्चयस्याभावादेव गवादिपदाच्छक्तया सास्नादिमत्त्वप्रकारकबोधस्यापत्तिर्नास्ति एवं प्रकृतेऽपि तदादिपदे चैत्रत्वविशिष्टवाचकतानिश्चयस्याभावादेव तदादिपदाच्चैत्रत्वादिप्रकारकबोधो दुरुपपाद एवेत्यर्थ । सिद्धान्तेन परिहरति– नेति, तत्पदप्रयोजकस्य तत्पदप्रयोजिका या या बुद्धिरित्यन्वय । विशेषशक्तिज्ञानस्य स्वरूपमुक्त्वा सामान्यत शक्तिज्ञानस्य स्वरूपमाह– यद् यदिति । तदनन्तरम्=सामान्यतो व्याप्तिघटितशक्तिज्ञानादनन्तरम् । प्रत्यक्षगृहीतो यश्चैत्रत्वादिविशिष्टस्तद्विषयकबुद्धिप्रयोज्यत्व प्रकरणादिना यदा तत्पदे गृह्णाति तदा पक्षे तत्पदे तादृशहेतुना=प्रत्यक्षगृहीतचैत्रत्वादिविशिष्टविषयकबुद्धिप्रयोज्यत्वेन हेतुना प्रागसिद्धस्यापि चैत्रत्वविशिष्टवाचकत्वस्य पक्षधर्मताबलादनुमित्यात्मकनिश्चयेनाऽवगाहनसंभवाच्चैत्रत्वादिविशिष्टविषयकशाब्दबोधे न काप्यनुपपत्तिरित्यर्थ ।

मुरारिमिश्रादीना मतमाह– केचिदिति, बुद्धिविषयतावच्छेदकत्वेनानुगतधर्मेण रूपेण घट-

प्रत्यासत्त्यऽधीनशक्त्यऽनुभवे प्रमुष्टबुद्धिविषयतावच्छेदकत्वांशं स्वरूपतश्चैत्रत्वादिप्रकारकस्मरणं निराबाधमेवेति तन्मूलकमेव स्वरूपतोऽपूर्वचैत्रत्वादिप्रकारकं शाब्दज्ञानं भविष्यतीति किमनुपपन्नम् ? स्वरूपतस्तत्प्रकारकस्मरणे स्वरूपतस्तत्प्रकारकाऽनुभवसंस्कारयोरनपेक्षणात् । उद्बोधकवैचित्र्यादेव कदाचित् 'जातिमान्' इत्याकारकं कदाचित् 'घटः' इत्याकारकं विलक्षणं स्मरणमिति नियमोपपत्तेः ।

स्वरूपतो घटत्वादिप्रकारकानुभवजनितसंस्कारवतोपि जातित्वादिना घटत्वाऽपटत्वादिसकलधर्मविषयके सामान्यप्रत्यासत्त्या शक्त्यनुभवे='बुद्धिविषयतावच्छेदकत्वविशिष्टधर्मावच्छिन्नस्तत्पदशक्यः' इत्याकारके शक्तिज्ञाने जाते तत्र बुद्धिविषयतावच्छेदकत्वांशस्य प्रमोषेण स्वरूपतश्चैत्रत्वादिप्रकारकं स्मरणं निराबाधमेवेति तन्मूलकमेव=स्वरूपतश्चैत्रत्वादिप्रकारकस्मरणेन स्वरूपतश्चैत्रत्वादिप्रकारकशाब्दबोधे न काचिदनुपपत्तिरित्यर्थः । अननुभूतस्य स्मरणं न भवतीति नियमसत्त्वेप्यनुभूतस्य स्मरणं भवत्येवेति नियमाभावाद् बुद्धिविषयतावच्छेदकत्वविशिष्टघटत्वाद्यवच्छिन्नेपि तदादिपदस्य शक्तिग्रहे जाते घटत्वादिविशेषणीभूतबुद्धिविषयतावच्छेदकत्वांशविषयकसंस्कारनाशेन बुद्धिविषयतावच्छेदकत्वांशस्य विस्मरणे जाते तदादिपदात् स्वरूपतो घटत्वादिप्रकारकस्मरणशाब्दबोधयोर्न काचिदनुपपत्तिः, शक्तिज्ञानस्मरणशाब्दबोधानां समानप्रकारकत्वनियमात् शक्तिज्ञानविषयीभूतबुद्धिविषयतावच्छेदकत्वांशस्य प्रमोषेण स्वरूपतो घटत्वादिप्रकारकस्यैव शक्तिज्ञानस्य परिशिष्टत्वादितिभावः । उक्तानुपपत्त्यभावे हेतुमाह– स्वरूपत इति, स्वरूपतस्तद्धर्मप्रकारकस्मरणं प्रति स्वरूपतस्तद्धर्मप्रकारकानुभवस्य तादृशानुभवजन्यस्य स्वरूपतस्तद्धर्मप्रकारकसंस्कारस्य च नियमेनापेक्षा नास्तीति बुद्धिविषयतावच्छेदकत्वविशिष्टघटत्वादिप्रकारकेप्यनुभवे तज्जन्यसंस्कारे च जाते बुद्धिविषयतावच्छेदकत्वांशप्रमोषेण स्वरूपतो घटत्वादिप्रकारकस्मरणशाब्दबोधयोर्न काचिदनुपपत्तिरित्यर्थः । ननु यदि स्वरूपतो घटत्वादिप्रकारकस्मरणं प्रति स्वरूपतो घटत्वादिप्रकारकानुभवसंस्कारयोर्नाऽपेक्षा किन्तु बुद्धिविषयतावच्छेदकत्वांशप्रमोष एव कारणं तदा सर्वत्रैव घटत्वादिविशेषणीभूतजातित्वाद्यंशस्य प्रमोषसंभवेन स्वरूपत एव घटत्वादिप्रकारकं स्मरणं तदादिपदात्स्यात् जातित्वादिविशिष्टघटत्वादिप्रकारकं च 'जातिमान्' इत्याकारकं स्मरणं न स्यात्, अस्मन्मते च स्वरूपतो घटत्वप्रकारकानुभवसंस्काराभ्यां स्वरूपतः 'घटः' इत्याकारकं जातित्वविशिष्टघटत्वादिप्रकारकानुभवसंस्काराभ्यां च 'जातिमान्' इत्याकारकं स्मरणमुपपद्यते इत्याशङ्क्याह– उद्बोधकेति, जातित्वविशिष्टघटत्वप्रकारकसंस्कारस्योद्बोधके सति तदुद्बुद्धसंस्कारात् 'जातिमान्' इत्याकारकं स्मरणं जायते तादृशोद्बोधकाभावे च सति 'घटः' इत्याकारकं स्वरूपतो घटत्वप्रकारकं स्मरणं जायते इति नियम उद्बोधकवैचित्र्यात् संभवत्येवेति न काचिदनुपपत्तिरित्यर्थः ।

उद्बोधकवैचित्र्यस्य स्मरणविशेषं प्रति नियामकत्वमुपपादयति–स्वरूपत इति, स्वरूपतस्त

दिप्रकारकात् संस्कारात् कदाचित् स्वरूपतो घटत्वाद्यप्रकारकस्य 'जातिमान्' इत्याकारकस्य स्मरणस्योदयेन स्वरूपतस्तत्प्रकारिकायां स्मृतौ तादृशानुभवसंस्कारयोर्विशिष्य हेतुत्वेप्युद्बोधकविशेषविरहस्य तादृशस्मृतिविरहप्रयोजकताया आवश्यकत्वात् तादृशहेतुताया अप्रामाणिकत्वात् । कथमन्यथा विशेषणान्तरानवच्छिन्नाऽस्मदाद्यदृष्टशरीरविशेषनिष्ठजातिविशेषावच्छिन्नसंकेतितरामरावणादिपदेभ्यो वाक्यार्थधीरस्माकम् ? कथं वा निर्विशेषणकातीन्द्रियजा-

प्रकारिकायां स्मृतौ=घटत्वादिप्रकारकस्मृतिं प्रति तादृशानुभवसंस्कारयो=स्वरूपतो घटत्वादि-
प्रकारकानुभवसंस्कारयोर्विशेषरूपेण हेतुत्वेपि यदि स्मृतिविशेषं प्रत्युद्बोधकविशेषस्य स्मृतिविशे-
षाभावं प्रति चोद्बोधकविशेषाभावस्य प्रयोजकत्वं न स्यात्तदा यस्य पुरुषस्य स्वरूपतो घटत्वा-
दिप्रकारकानुभवजन्यः संस्कारोप्यस्ति जातित्वादिना घटत्वादिप्रकारकानुभवजन्योपि संस्कारोस्ति
तस्य पुरुषस्य यत् कदाचिज्जातित्वादिना रूपेण घटत्वादिप्रकारकात् संस्कारात् स्वरूपतो घट-
त्वाद्यप्रकारकं जातित्वेनैव घटत्वादिप्रकारकम् 'जातिमान्' इत्याकारकं स्मरणं जायते तन्नो-
पपद्येत— उक्तोभयविषययोः संस्कारयोः सत्त्वात् 'घटः' इत्याकारकम् 'जातिमान्' इत्या-
कारकं चोभयविधमेव स्मरणं स्याद्, उद्बोधकवैचित्र्यस्य प्रयोजकत्वे तु जातित्वादिना घटत्वप्र-
कारकसंस्कारमात्रस्योद्बोधकसमवधानसमये स्वरूपतो घटत्वाद्यप्रकारकम् 'जातिमान्' इत्या-
कारकं स्मरणं जायते स्वरूपतो घटत्वादिप्रकारकसंस्कारस्य चोद्बोधकाभावात् 'घटः' इत्या-
कारकं स्वरूपतो घटत्वादिप्रकारकं च स्मरणं न जायते इत्युपपद्यते इत्युद्बोधकविशेषविरहस्य
तादृशस्मृतिविशेषविरहप्रयोजकताऽवश्यं स्वीकार्या तथा च तादृशहेतुताया=स्वरूपतस्तत्प्रका-
रकस्मरणं प्रति स्वरूपतस्तत्प्रकारकानुभवसंस्कारयोर्हेतुता यदुक्ता सा न प्रामाणिकीत्यर्थः ।
विपक्षे बाधकमाह— कथमन्यथेति, यदि स्वरूपतस्तद्धर्मप्रकारकस्मरणशाब्दबोधौ प्रति स्वरूप-
तस्तद्धर्मप्रकारकानुभवसंस्कारयोरेव कारणत्वं स्याद् उद्बोधकवैचित्र्यस्य च प्रयोजकत्वं न स्यात्तदा
विशेषणान्तरानवच्छिन्ना याऽस्मदाद्यदृष्टरामरावणादिशरीरविशेषनिष्ठा रामत्वरावणत्वादिरूपा जा-
तिस्तादृशजातिविशेषावच्छिन्ने रामरावणादिशरीरे संकेतितेभ्यो रामरावणादिपदेभ्योऽस्माकं स्वरू-
पतो रामत्वरावणत्वादिप्रकारकशाब्दबोधो न स्यात्, तथा निर्विशेषणका=विशेषणान्तरानवच्छिन्ना
याऽतीन्द्रिया=इन्द्रियजन्यप्रत्यक्षाऽयोग्या मनस्त्वादिजातिस्तादृशजातिविशेषावच्छिन्नं यद् मन-
प्रभृति तद्वाचकमनःप्रभृतिपदेभ्योप्यस्माकं स्वरूपतो मनस्त्वादिप्रकारकशाब्दबोधो न स्यादेव
किं तु रामपदवाच्यत्वोपलक्षितरामत्वप्रकारकशक्तिज्ञानेन जातो यो रामपदवाच्यत्वोपलक्षितराम-
त्वप्रकारकसंस्कारस्तादृशसंस्काराद् रामपदवाच्यत्वोपलक्षितरामत्वप्रकारक एव शाब्दबोधः स्यान्न
तु स्वरूपतो रामत्वप्रकारकोपि, एवमेव रावणादिपदेपि ध्येयम्, तथा सुखादिसाक्षात्कारणत्वो-
पलक्षितमनस्त्वप्रकारकशक्तिज्ञानेन जातो यः सुखादिसाक्षात्कारणत्वोपलक्षितमनस्त्वप्रकारक-
संस्कारस्तादृशसंस्कारात् स्वरूपतो मनस्त्वप्रकारकशाब्दबोधो न स्यात् किं तु सुखादिसाक्षात्कारण-

तिविशेषावच्छिन्नवाचकमनःप्रभृतिपदेभ्योऽस्माकं शाब्दधीः ? तत्र जातित्वादिना जातिविशिष्टे शक्तिग्रहेण प्रमुष्टजातित्वांशं मनस्त्वादिप्रकारेण स्मरणमिति तत्रापि ( अत्रापि ) विशेषणांशप्रमोपमन्तरेण गत्यन्तराभावादिति वदन्ति ।

विवदन्तेऽप्यत्र च बहवो विद्वांसः—स्मृतेर्विलक्षणप्रकारताया संस्कारानुभवयोस्तादृशप्रकारताप्रयोजकत्वस्योद्बोधकविशेषप्रयोजकतामाश्रित्योच्छेदने विशेष्यविशेषणभावाशेऽप्युद्बोधकविशेषस्यैव नियामकत्वसम्भवात्, प्रकारत्वविशेष्य-

---

त्वोपलक्षितमनस्त्वप्रकारक एव शाब्दबोध स्यात्, 'अस्ति सुखादिसाक्षात्कारण किञ्चित् मन-पदवाच्यम्' इत्येव मन पदशक्तिज्ञान जायते तच्च सुखादिसाक्षात्कारणत्वोपलक्षितमनस्त्वप्रकारकमेव । 'आसीद्रामपदवाच्य' इत्याकारकमेव रामपदशक्तिज्ञान जायते तच्च रामपदवाच्यत्वोपलक्षितरामत्वप्रकारकमेवेत्यनुसधेयम् । स्मृतिविशेषमात्राभावौ प्रत्युद्बोधकविशेषभावाभावयो प्रयोजकत्वे तु रामपदवाच्यत्वोपलक्षितरामत्वप्रकारके शक्तिज्ञानेन सस्कारे जातेपि रामपदवाच्यत्वांशस्योद्बोधकाभावात् स्मृतिप्रमोषे जाते रामपदादस्माक स्वरूपतो रामत्वप्रकारकस्मरण-शाब्दबोधौ सभवत । एवमेव रावणादिपदेपि विज्ञेयम् । मन पदात् स्वरूपतो मनस्त्वप्रकारक-स्मरणोपाय स्वयमप्याह—तत्रेति, तत्र=मन प्रभृतिपदस्थले कि वा मनसि । जातित्वादिना जातिविशिष्टे=सुखादिसाक्षात्कारणत्वोपलक्षितमनस्त्वजातिविशिष्टे मनसि मन पदशक्तिग्रहेण सुखादिसाक्षात्कारणत्वोपलक्षितमनस्त्वप्रकारकसस्कारे जातेपि सुखादिसाक्षात्कारणत्वांशस्योद्बोधकाभावात् स्मृतिप्रमोषे जाते मन पदादस्माक प्रमुष्टजातित्वांशम्=प्रमुष्टसुखादिसाक्षात्कारणत्वांश स्वरूपतो मनस्त्वप्रकारक स्मरण तेन स्वरूपतो मनस्त्वप्रकारकशाब्दबोधश्च समवतीत्यर्थ । तथा च यथा रामादिपदस्थले स्वरूपतो रामत्वादिप्रकारकस्मरणशाब्दबोधयो रामत्वादिविशेषणीभूतस्य रामपदवाच्यत्वांशस्य स्मृतिप्रमोष विना गतिर्नास्ति तथा तत्रापि=मनआदिपदस्थलेपि घटत्वादिविशेषणीभूतस्य बुद्धिविषयतावच्छेदकत्वांशस्य स्मृतिप्रमोष विना तदादिपदात् स्वरूपतो घटत्वादिप्रकारकस्मरणशाब्दबोधयोर्गत्यन्तरम्=उपायान्तर नास्त्येवेत्याह— तत्रापीति, अत्र 'तथात्रापि' इत्येव पाठो युक्त । "वदन्ति" इत्यस्य पूर्वोक्तेन "केचित्तु" इत्यनेनान्वय ।

"केचित्तु" इत्यादिनोक्तमतमाक्षिपति— विवदन्ते इत्यादिना । अत्रापीत्यन्वय । स्वरूपतस्तद्धर्मप्रकारकसस्कारस्योद्बोधके सति स्वरूपतस्तद्धर्मप्रकारक स्मरण विशेषणान्तरावच्छिन्नतद्धर्मप्रकारकसस्कारस्योद्बोधके च सति विशेषणान्तरावच्छिन्नतद्धर्मप्रकारक स्मरण जायते इत्येव स्मृतेर्विलक्षणप्रकारतायामुद्बोधकविशेषस्य प्रयोजकतामाश्रित्य यादृशधर्मप्रकारकानुभवसस्कारौ भवतस्तादृशधर्मप्रकारकमेव स्मरण जायते इत्येव स्मरणे सस्कारानुभवयोस्तादृशप्रकारताप्रयोजकत्वस्य=स्वसमानप्रकारताप्रयोजकत्वस्योच्छेदने=परित्यागे कृते विशेष्यविशेषणभावांशेऽप्युद्बोधकविशेषस्यैव नियामकत्व स्वीकार्य न त्वनुभवसस्कारयो, तथा च प्रकारत्वविशेष्यत्वानन्तर्भावेन नाम घटत्वादौ यत् प्रकारत्व घटादौ यद् विशेष्यत्व तयो प्रकारत्वविशेष्यत्वा-

त्वानन्तर्भावेन सामान्यतस्तद्विषयकस्मृतौ तद्विषयकत्वेनैव संस्कारानुभवयोर्हेतुतापत्तेः । रामरावणादिपदेभ्यश्च लक्षणया तत्तत्पदार्थत्वादिप्रकारक एवान्वयबोधः । वस्तुतस्तु— अनुगतोद्बोधकस्थले स्वरूपतस्तत्प्रकारकशक्तिज्ञानासत्त्वेपि स्वरूपतस्तत्प्रकारकस्मरणापत्त्या तत्र तादृशज्ञानस्य हेतुत्वमावश्यकमित्यलमतिपल्लवितेन ।

अथ सामान्यतो वक्तृबुद्धिविषयतावच्छेदकधर्मावच्छिन्नस्य सर्वनामशक्यत्वे, 'शक्तिभ्रमं विना कालान्तरीणपुरुषान्तरीणबुद्धिविषयतावच्छेदकधर्मावच्छिन्न-

---

शयो परित्यागेन सामान्यतस्तद्विषयकस्मृतिं प्रति तद्विषयकत्वेन=सामान्यतस्तद्विषयकसंस्कारानुभवयोर्हेतुत्वं स्यात् तथा च 'घटघटत्वे' इत्याकाराभ्यामपि प्रकारत्वविशेष्यत्वांशाऽनवगाहिभ्यामनुभवसंस्काराभ्यां घटत्वप्रकारकघटविशेष्यकस्मरणं स्यादेव न चैवं सम्भवतीति तत्प्रकारकतद्विशेष्यकस्मरणं प्रति विशेषरूपेण तत्प्रकारकतद्विशेष्यकानुभवसंस्कारयोः कारणत्वमवश्य स्वीकार्यं तथा च 'घटघटत्वे' इत्याकारकसामान्यानुभवसंस्काराभ्यां घटत्वप्रकारकघटविशेष्यकस्मरणस्यापत्तिर्नास्ति, तथा च यादृशधर्मप्रकारकानुभवसंस्कारो भवतस्तादृशधर्मप्रकारकमेव स्मरणं जायते इतिसिद्धम् । तदादिपदस्थले यथा स्वरूपतो घटत्वादिप्रकारकस्मरणशाब्दबोधौ भवतस्तत्पूर्वमेव प्रतिपादितम् । बुद्धिविषयतावच्छेदकत्वस्योपलक्षणत्वान्छाब्दबोधे भानं न भवतीति न तदृशभ्रमोपाधिकल्पनाऽपेक्षेतिसारः । रामादिपदशाब्दबोधं स्वमतेनाह— रामेति, रामादिपदानां रामादिव्यक्तौ शक्तिग्रहाभावेन शक्त्या शाब्दबोधासम्भवपि रामादिपदेभ्यो लक्षणया तत्तत्पदार्थत्वादिप्रकारक =रामपदवाच्यत्वादिप्रकारकः किं वा स्वरूपतो रामत्वादिप्रकारकः शाब्दबोधो जायते इत्यर्थः । स्मृतेर्विलक्षणप्रकारतायामुद्बोधकविशेषस्य प्रयोजकत्वानङ्गीकारे युक्त्यन्तरमाह—वस्तुतस्त्विति, अनुगतोद्बोधकस्थले इति— यद्युद्बोधकविशेषस्यैव यमेव स्मृतिविशेषं प्रति प्रयोजकं स्यात्तदा हस्तिपको यथा स्वरूपतो हस्तित्वप्रकारकसंस्कारस्योद्बोधकोऽस्ति तथा जातित्वोपलक्षितहस्तित्वप्रकारकस्यापि 'जातिमान् हस्तिपकसम्बन्धी' इत्यनुभवेन जातस्य संस्कारस्योद्बोधकोऽस्तीत्युभयविधसंस्कारोद्बोधकत्वाद्धस्तिपकोऽनुगत उद्बोधकोऽस्ति तादृशानुगतोद्बोधकस्थले स्वरूपतस्तद्धर्मप्रकारकशक्तिज्ञानासत्त्वेपि स्वरूपतस्तत्प्रकारकस्मरणं स्यादेव— धर्मान्तरावच्छिन्नस्वरूपतस्तद्धर्मप्रकारकसंस्कारोद्बोधकत्वात्, न चैव स्वरूपतस्तद्धर्मप्रकारकसंस्कारोद्बोधकस्यैव स्वरूपतस्तद्धर्मप्रकारकसंस्कारोद्बोधकत्वात्, न चैव स्वरूपतस्तत्प्रकारकशक्तिज्ञानासत्त्वे स्वरूपतस्तत्प्रकारकस्मरणं जायते इति तत्र=स्वरूपतस्तत्प्रकारकस्मरणे तादृशज्ञानस्य=स्वरूपतस्तत्प्रकारकशक्तिज्ञानस्य स्वरूपतस्तत्प्रकारकानुभवसंस्कारयोर्हेतुत्वमावश्यकमेवेति स्मृतौ विलक्षणप्रकारतायामुद्बोधकविशेषस्य प्रयोजकत्वं नाश्रयणीयमित्यर्थः । पल्लवितेन=विस्तरेण ।

शङ्कते— अथेति, यदि सामान्यतो वक्तृबुद्धिविषयतावच्छेदकधर्मसामान्यस्य तत्पदशक्यं स्यात्तदैतत्तदादिपदात् कालान्तरीणपुरुषान्तरीयबुद्धिविषयतावच्छेदकधर्मावच्छिन्नस्यापि घटादेर्बोधः स्यादेव

विषयिका प्रतीतिः सर्वनाम्ना न जन्यतेऽपि तु यो यदा यस्य बुद्धिस्थस्तदा तदुच्चरितपदात् तत्प्रकारावच्छिन्नविषयिकैव' इतिनियमानुपपत्तिः, स्वोच्चारणानुकूलबुद्धिविषयतावच्छेदकावच्छिन्नस्य शक्तिविषयत्वे च स्वपदस्य तत्तद्व्यक्तिपरतया तत्तत्पदव्यक्तिभेदेन शक्तिभेदप्रसङ्गः अननुगमाद् व्युत्पत्तिविरोधश्च ।

एवम् 'युष्मदस्मत्पदयोरात्ममात्रे न शक्तिरऽपि तु स्वसंबोध्योच्चारणकर्त्रोरेवेति संबोध्यतावच्छेदकत्वोच्चारयितृतावच्छेदकत्वरूपानुगतधर्मोपलक्षितचैत्रत्वादिकमेव प्रवृत्तिनिमित्तम् ' इत्यप्यसंगतम्– सामान्यतः संबोध्यतावच्छेदकत्वादेरनुगमकत्वे चैत्रस्य यद्युष्मत्पदसंबोध्यता तस्माद् युष्मत्पदात् पदान्तरसंबोध्यमैत्रादेः चैत्रोच्चारितादस्मत्पदात् पदान्तरोच्चारयितुश्च मैत्रादेः प्रतीतिप्रसङ्गो

तथा च 'शक्तिभ्रमं विना कालान्तरीणपुरुषान्तरीणबुद्धिविषयतावच्छेदकधर्मावच्छिन्नविषयिका प्रतीतिः सर्वनाम्ना न जन्यते किं तु यो.यदा यस्य बुद्धिस्थस्तदा तदुच्चरितपदात् तत्प्रकारावच्छिन्नविषयिकैव प्रतीतिर्जायते' इति नियमो नोपपद्येत, यदि च स्वोच्चारणानुकूलबुद्धिविषयतावच्छेदकधर्मावच्छिन्नस्तत्पदशक्यः स्यात्तदा कालान्तरीणबुद्धेः पुरुषान्तरीयबुद्धेश्च स्वोच्चारणानुकूलत्वाभावादुक्तनियमोपपत्तावपि स्वपदस्य तत्तद्व्यक्तिविशेषपरतया प्रकृते तत्तत्तदादिपदव्यक्तिभेदेन शक्तिभेदः स्यादेव तेन च तदादिपदस्य नानार्थत्वप्रसङ्गः, तथा तत्तत्तदादिपदव्यक्तिभेदेनाऽननुगमः=नाम कस्यचित् तदादिपदस्य शक्तिग्रहेऽपि कस्यचिच्छक्तिग्रहो न स्यादेवेति तादृशतदादिपदाद् व्युत्पत्तिविरोधः=शाब्दबोधानुपपत्तिः । किं वा स्वपदप्रवेशेन स्वोच्चारणानुकूलबुद्धिविषयतावच्छेदकधर्मावच्छिन्नानां घटादीनामननुगमाद् व्युत्पत्तिविरोधो नाम कस्य चिद् घटादेः शक्तिग्रहविषयस्य तदादिपदाद् बोधसंभवेऽपि तदतिरिक्तघटादेस्तदादिपदाद् बोधो न स्यादेव तत्र शक्तिग्रहाभावादित्युभयतः पाशारज्जुरित्यर्थः । अत्र कालान्तरीणत्वस्य पुरुषान्तरीयत्वस्य च बुद्धावन्वयः ।

उक्तदोषं युष्मदस्मत्पदयोरप्यतिदिशति– एवमिति, युष्मत्पदस्यात्ममात्रे शक्तिस्वीकारे ऽसंबोध्यस्यापि युष्मत्पदाद् बोधः स्यात्, अस्मत्पदस्यात्ममात्रे शक्तिस्वीकारे तूष्णीस्थितस्याप्यस्मत्पदाद् बोधः स्यादितिदोषः । स्वसंबोध्योच्चारणकर्त्रोरिति– स्वसंबोध्ये युष्मत्पदस्य स्वोच्चारणकर्तरि चास्मत्पदस्य शक्तिः, तथा च संबोध्यतावच्छेदकत्वोपलक्षितचैत्रत्वादिकं युष्मत्पदस्य प्रवृत्तिनिमित्तम्. उच्चारयितृतावच्छेदकत्वोपलक्षितचैत्रत्वादिकं चास्मत्पदस्य प्रवृत्तिनिमित्तम्. संबोध्यतावच्छेदकत्वमुच्चारयितृतावच्छेदकत्व चानुगतधर्म इत्यन्वयः । उक्तनियमस्याऽसंगतत्वे हेतुमाह– सामान्यत इति, सामान्यतः संबोध्यतावच्छेदकत्वस्य युष्मत्पदप्रवृत्तिनिमित्तानुगमकत्वे चैत्रस्य यद्युष्मत्पदसंबोध्यता तस्माद् युष्मत्पदात् पदान्तरसंबोध्यस्य=अन्ययुष्मत्पदसंबोध्यस्यापि मैत्रादेः प्रतीतिः स्यात्– मैत्रत्वादेरपि सामान्यतः संबोध्यतावच्छेदकत्वात्, सामान्यत उच्चारयितृतावच्छेदकत्वस्य चास्मत्पदप्रवृत्तिनिमित्तानुगमकत्वे चैत्रोच्चारितादस्मत्पदात् पदान्तरो-

दुर्वार एवेति स्वजन्यबोधाश्रयतया प्रयोक्त्रऽभिप्रायविषयतावच्छेदकत्वरूपस्वसं-
बोध्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने युष्मत्पदस्य. स्वोच्चारणकर्तृत्वावच्छेद-
कत्वोपलक्षितधर्मावच्छिन्ने चाऽस्मत्पदस्य शक्तेः स्वीकरणीयतया स्वत्वान्तर्भावे-
नाऽननुगमतादवस्थ्यादिति चेत् ?,

न— स्वोच्चारणानुकूलबुद्धिप्रकारावच्छिन्नविषयताकत्वस्वजन्यत्वोभयसंबन्धेन
तदादिसर्वनामपदप्रकारको बोधविषयकः संकेतोऽभ्युपेयते तत्र च स्वपदार्थस्य
संबन्धघटकतया तत्तत्पदव्यक्तित्वेन पदानां न विषयताऽपि तु तत्तत्पदत्वा-
दिरूपानुपूर्वीविशेषेणैवेति न पदव्यक्तिभेदेन शक्तिभेदः । सामान्यतस्तत्प-
दत्वादिरूपानुपूर्वीविशेषावच्छेदेनैवोभयसंबन्धावच्छिन्नबोधविषयतानिरूपितसंके-
तप्रकारता ग्राह्येति न व्युत्पत्त्यऽनुपपत्तिः ।

चारयितु =अन्यदस्मत्पदोच्चारयितुरपि मैत्रादे प्रतीतिः स्यादेव— मैत्रत्वादेरपि सामान्यत उच्चार-
यितृतावच्छेदकत्वात्, न चेतदिष्टमित्येतदतिप्रसङ्गवारणाय यदि स्वजन्यबोधाश्रयतया=युष्मत्पद-
जन्यबोधाश्रयतया युष्मत्पदप्रयोक्त्रऽभिप्रायविषयतावच्छेदकत्वरूप यत् स्वसंबोध्यतावच्छेदकत्वम्=
तद्युष्मत्पदसंबोध्यतावच्छेदकत्व तदुपलक्षितो यश्चैत्रत्वादिधर्मस्तदवच्छिन्ने चैत्रादौ युष्मत्पदस्य
शक्तिः स्वीक्रियते, स्वोच्चारणकर्तृत्वावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने च चैत्रादावस्मत्पदस्य
शक्तिः स्वीक्रियते तदा स्वत्वान्तर्भावेन=स्वपदार्थस्यान्तर्भावेन पूर्ववदऽननुगमस्तदवस्थ एव,
अननुगमाद् व्युत्पत्तिविरोधोपि । स्वपदस्य तत्तद्व्यक्तिपरतया तत्तद्युष्मत्पदास्मत्प-
दव्यक्तिभेदेन शक्तिभेदोपि स्यादेवेत्युभयत पाशारज्जुरित्यन्वय । स्वोच्चारणेत्यत्र स्वपदेन
तदस्मत्पदव्यक्तिग्राह्या ।

तदादिपदस्थले प्रदर्शित दोष प्रथम परिहरति—नेति, तत्तदादिपदजन्यबोधे स्वोच्चारणानु-
कूला=तत्तदादिपदोच्चारणानुकूला या बुद्धिस्तादृशबुद्धौ प्रकारीभूत यद् घटत्वादिक तदवच्छिन्न-
विषयताकत्वमप्यस्ति स्वजन्यत्वम्=तत्तदादिपदजन्यत्वमप्यस्तीति 'तदादिपदात् स्वोच्चारणानु-
कूलबुद्धिप्रकारावच्छिन्न ( स्वोच्चारणानुकूलबुद्धिविषयतावच्छेदकावच्छिन्न ) विषयकत्वस्वजन्यत्वे-
तदुभयसबन्धेन तदादिपदविशिष्टो बोधो भवतु' इत्याकारकस्तदादिसर्वनामपदप्रकारको
बोधविषयक =बोधविशेष्यकः सकेतः स्वीक्रियते तत्र च सकेते स्वपदार्थस्य सबन्धघटकतया
तत्तत्पदव्यक्तित्वेन रूपेण पदाना न सकेतविषयता येन प्रदर्शित शक्तिभेदोऽननुगमश्च स्यात्
किं तु तत्तत्पदत्वादिरूपा या तकारोत्तरत्कारूपा पदानुपूर्वी तादृशानुपूर्वीविशेषेणैव=ताद-
शविशेषानुपूर्वीरूपेणैव तदादिपदाना सकेतविषयतास्ति सा चानुपूर्वी सर्वेषु तदादिपदेष्वनु-
गतरूपैवेति न पदव्यक्तिभेदेन शक्तिभेद । उक्तोभयसम्बन्धावच्छिन्ना या बोधविषयता=बोध-
निष्ठा विशेष्यता तादृशविशेष्यतानिरूपितसकेतीयप्रकारता च सामान्यतस्तत्पदत्वादिरूपानुपू-
र्वीविशेषावच्छेदेनैव तदादिपदे ग्राह्यतेति न व्युत्पत्त्यनुपपत्ति नाम यस्य तदादिपदस्य शक्तिग्रहो

- कालान्तरीणपुरुषान्तरीयबुद्धिश्च नेदानीन्तनैतत्पुरुषीयतदादिपदोच्चारणानुकूलेति तद्विषयतावच्छेदकावच्छिन्नबोधे नोपदर्शितोभयसंबन्धेनैतत्तदादिपदवैशिष्ट्यमतो नेश्वरेच्छायां तादृशबोधस्यैतत्तदादिपदप्रकारेण भानमिति न कालान्तरीणपुरुषान्तरीयबुद्धिविषयतावच्छेदकावच्छिन्नस्यैतत्तदादिपदवाच्यता–भगवत्संकेतीयतत्पदव्यक्तिप्रकारतानिरूपिततथाविधसंसर्गान्तःपातिन्या बुद्धिविषयतावच्छेदकावच्छिन्नत्वेन विषयताया एव तत्पदवाच्यतारूपत्वादतो न भ्रमं विना तदवच्छिन्नबोधः ।

---

न जातस्तस्माद् बोधस्यानुपपत्तिर्नास्ति, यथा घटत्वेन रूपेण सकलघटेषु घटपदस्य शक्तिग्रहे जातेऽपूर्वघटव्यक्तेर्बोधस्यानुपपत्तिर्नास्ति तथात्र तत्पदत्वादिरूपानुपूर्वीरूपेण तदादिपदस्य शक्तिग्रहे जातेऽपूर्वतत्पदजन्यबोधस्यानुपपत्तिर्नास्तीत्यर्थः ।

सामान्यतो बुद्धिविषयतावच्छेदकावच्छिन्नस्य तदादिपदशक्यत्वे कालान्तरीणपुरुषान्तरीयबुद्धिविषयतावच्छेदकधर्मावच्छिन्नयोरप्येतत्तदादिपदेन बोधः स्यादिति यो दोषः ( १० ६ ) प्रदर्शितस्तं परिहरति– कालान्तरीणेति, कालान्तरीणा पुरुषान्तरीया च बुद्धिर्नेदानीन्तनैतत्पुरुषीयतदादिपदोच्चारणानुकूलेति तद्विषयतावच्छेदकावच्छिन्नबोधे=कालान्तरीणपुरुषान्तरीयबुद्धिविषयतावच्छेदकावच्छिन्नविषयकबोधे उपदर्शितोभयसबन्धेनैतत्तदादिपदवैशिष्ट्यम्=एतत्तदादिपदस्य प्रकारत्वं नास्तीतीश्वरेच्छारूपोक्तसङ्केते तादृशबोधस्य=कालान्तरीणपुरुषान्तरीयबुद्धिविषयतावच्छेदकावच्छिन्नविषयकबोधस्यैतत्तदादिपदप्रकारेण=एतत्तदादिपदविशिष्टत्वेन रूपेण भानं न भवतीति कालान्तरीणपुरुषान्तरीयबुद्धिविषयतावच्छेदकधर्मावच्छिन्नस्य पटादेरेतत्तदादिपदवाच्यतापत्तिर्नास्ति–यस्य तदादिपदस्य यद्विषयकबोधे भगवत्संकेतीयप्रकारता भवति तेन तदादिपदेन तादृशबोधविषयस्यैव=स्वविशिष्टबोधविषयस्यैव बोधसम्भवात्, एतत्तदादिपदवैशिष्ट्यं चोक्तसंबन्धेनैतत्तदादिपदोच्चारणानुकूलबुद्धिविषयतावच्छेदकावच्छिन्नबोधे एवास्ति न तु कालान्तरीणपुरुषान्तरीयबुद्धिविषयतावच्छेदकावच्छिन्नबोधेऽपि येन कालान्तरीणपुरुषान्तरीयबुद्धिविषयतावच्छेदकावच्छिन्नस्याप्येतत्तदादिपदवाच्यता स्यादित्यर्थः । उक्ते हेतुमाह–भगवदिति, उक्तभगवत्संकेते तदादिपदं बोधप्रकारतया भासते इति भगवत्संकेतीया या तत्तदादिपदव्यक्तिनिष्ठा प्रकारता तादृशप्रकारतानिरूपितो यस्तथाविधसंसर्गः=उक्तोभयसबन्धस्तदन्तःपातिनी या विषयता बुद्धिविषयतावच्छेदकावच्छिन्नत्वेन-रूपेण तस्या एव तत्तदादिपदवाच्यतारूपत्वात्, सा च वाच्यतारूपा विषयता स्वोच्चारणानुकूलबुद्धिविषयतावच्छेदकावच्छिन्नविषयतैवेति स्वोच्चारणानुकूलबुद्धिविषयतावच्छेदकावच्छिन्ननिष्ठैव भवति न तु कालान्तरीणपुरुषान्तरीयबुद्धिविषयतावच्छेदकावच्छिन्ननिष्ठापि येन कालान्तरीणपुरुषान्तरीयबुद्धिविषयतावच्छेदकावच्छिन्नस्यैतत्तदादिपदवाच्यता स्यादित्यर्थः । स्वोच्चारणानुकूलबुद्धिप्रकारावच्छिन्नविषयताकत्वस्य सबन्धघटकेन वाच्यतारूपविषयतायाः संबन्धान्तःपातित्वं विज्ञेयम्, सा च विषयता वाच्ये वर्तते इति तस्या वाच्यतारूपत्वे

तद्धर्मावच्छिन्नविषयताशालिबोधे पदांशे तद्धर्मावच्छिन्नविषयताघटितोक्तोभयसंबन्धावच्छिन्नाया बोधनिष्ठविशेष्यतानिरूपितसंकेतीयप्रकारताया वाचकतारूपायाः प्रकारतया संसर्गतया वा ज्ञानस्य हेतुत्वात्, अन्यधर्मावच्छिन्नं बुद्धिस्थीकृत्य प्रयुक्ते पदेऽन्यधर्मावच्छिन्नविषयताघटितोभयसंबन्धावच्छिन्नसंकेतीयप्रकारताया असत्त्वेन तत्र तदवगाहिज्ञानस्य भ्रमत्वनियमात् ॥

---

निविषम् । संसर्गश्च किञ्चिन्निष्ठप्रकारतानिरूपितो भवतीत्युक्तम्— प्रकारतानिरूपिततयाविषस-
सर्गेति । अत इति— यत उक्तैतत्तदादिपदवाच्यतारूपा विषयता कालान्तरीणपुरुषान्तरीयबुद्धिविष-
यतावच्छेदकावच्छिन्ने वस्तुतो न भवत्यतस्तत्रैतत्तदादिपदवाच्यतारूपविषयतावगाहि ज्ञानं भ्रम
एवेति तादृशभ्रमं विनैतत्तदादिपदेन तदवच्छिन्नबोध=कालान्तरीणपुरुषान्तरीयबुद्धिविषयताव-
च्छेदकावच्छिन्नविषयकबोधो न भवतीत्यर्थः ।

तद्धर्मावच्छिन्नेति—तद्धर्मावच्छिन्नविषयताशालिबोधे=तद्धर्मावच्छिन्ना या विषयता तादृशवि-
षयताकशाब्दबोधं प्रति तद्धर्मावच्छिन्नविषयताघटितो य उक्तोभयसम्बन्धस्तादृशसम्बन्धावच्छिन्नाया
बोधनिष्ठविशेष्यतानिरूपितसंकेतीयप्रकारताया वाचकतारूपायाः पदांशे=तदादिपदे यत् प्रका-
रतया वा संसर्गतया वा ज्ञानं तस्य हेतुत्वं स्वीक्रियते. एतत्तदादिपदनिष्ठाया वाचकतारूपप्रका-
रतायास्तदन्यतदादिपदे चासत्त्वेन तत्र=अन्यधर्मावच्छिन्नं बुद्धिस्थीकृत्य प्रयुक्ते तदादिपदे
( तदन्यतदादिपदे ) तदवगाहिज्ञानस्य=अन्यधर्मावच्छिन्नविषयताघटितोभयसम्बन्धावच्छिन्नसंकेती-
यप्रकारतावगाहिज्ञानस्य ( एतत्तदादिपदनिष्ठप्रकारतावगाहिज्ञानस्य ) भ्रमत्व नियमेन भव-
तीति तादृशभ्रमात्मकज्ञानेनैवाऽन्यधर्मावच्छिन्नं बुद्धिस्थीकृत्य प्रयुक्तेन पदेनाऽन्यधर्मावच्छि-
न्नविषयको बोधः सम्भवति न तु तादृशवाचकतारूपप्रकारतायाः प्रकारतया संसर्गतया वा
यथार्थज्ञानेन. तथा च प्रकृतघटादिकं बुद्धिस्थीकृत्य प्रयुक्तेनैतत्तदादिपदेन कालान्तरीणपुरु-
षान्तरीयबुद्धिविषयतावच्छेदकावच्छिन्नघटादेर्न यथार्थबोधः सम्भवतीति न तस्यैतत्तदादिपदवा-
च्यतापत्तिर्न वा एतत्तदादिपदस्य तद्वाचकतापत्तिरितिसारः । अन्यधर्मावच्छिन्नेतिपाठस्थाने अन्य-
तद्धर्मावच्छिन्नेतिपाठो युक्तः । प्रकारतयेति— 'उक्ता या बोधनिष्ठा विशेष्यता, तन्निरूपितप्र-
कारतावत् तदादिपदम्' इत्यत्र तादृशवाचकतारूपप्रकारतायाः प्रकारतया ज्ञानं भवति 'उक्तबो-
धनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन घटत्वादिधर्मविशिष्टवत् तदादिपदम्' इत्यत्र च ताद-
शप्रकारतायाः संसर्गतया ज्ञानं जायते इत्युक्तम्— "प्रकारतया संसर्गतया वा" इति ।
अवशिष्टं च स्वयमेव विवेचनीयम् ॥

॥ इति तत्पदम् ॥

युष्मदस्मत्स्थलेऽपीदृश्येव गतिश्चिन्तनीया ।

अथ

## युष्मदस्मत्पदे.

संप्रति युष्मदस्मत्पदयोः शक्तिनिरूपणमारभते— युष्मदस्मदित्यादिना । तत्पदोक्तरीतिम-त्राप्यतिदिशति— ईदृश्येवेति, तथा च युष्मत्पदस्थले 'स्वघटितवाक्यजन्यबोधाश्रयत्वेनेच्छोद्देश्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नविषयकत्वस्वजन्यत्वैतदुभयसंबन्धेन युष्मत्पदविशिष्टो बोधो भवतु' इत्याकारको युष्मत्पदप्रकारको बोधविशेष्यकश्च भगवत्संकेतः पूर्ववत् स्वीकार्यः, अत्र स्वं युष्मत्पदं तद्घटितं यद् वाक्यम् 'चैत्र त्वं गच्छ' इतिवाक्यं तज्जन्यो यो बोधस्तदाश्रयत्वेन -योच्चारयितुरिच्छा 'मदुक्तवाक्यजन्यबोधाश्रयश्चैत्रो भवतु' इतीच्छा तादृशेच्छोद्देश्यश्चैत्र एव उद्देश्यतावच्छेदकं चैत्रत्वं तद्वृत्ति यदुद्देश्यतावच्छेदकत्वं तदुपलक्षितो धर्मश्चैत्रत्वमेव तदवच्छिन्नो यश्चैत्रस्तद्विषयकत्वमपि युष्मत्पदजन्यबोधेऽस्ति त्वंपदेन चैत्रस्यैव प्रतिपादनात् स्वजन्यत्वम्=युष्मत्पदजन्यत्वमप्यस्तीत्येतदुभयसंबन्धेन युष्मत्पदविशिष्टो बोधः संकेतविषयोऽस्ति, अत्र च युष्मत्पदेन चैत्रस्य संबोध्यत्वे उक्तेच्छोद्देश्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नश्चैत्र एव भवति तद्विषयकत्वसंबन्धेन युष्मत्पदवैशिष्ट्यं चैत्रविषयकबोधे एव संभवति न मैत्रादिविषयकबोधे इति. तथा स्वपदसंनिवेशेन सामान्यतः संबोध्यतावच्छेदकत्वस्यानुगमकत्वाभावाच्चैत्रस्य यद्युष्मत्पदसंबोध्यता तस्माद् युष्मत्पदाद् मैत्रादेः प्रतीत्यापत्तिर्नास्ति, स्वपदार्थस्य च संबन्धघटकतया न तत्तत्पदव्यक्तित्वेन युष्मत्पदानां संकेतविषयता येनाऽननुगमः स्यात् किं तु पूर्ववद् युष्मत्पदत्वादिरूपानुगतानुपूर्वीविशेषेणैवेति न पदव्यक्तिभेदेन शक्तिभेदः । अस्मत्पदस्थले च 'स्वोच्चारयितृतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नविषयकत्वस्वजन्यत्वैतदुभयसंबन्धेनास्मत्पदविशिष्टो बोधो भवतु' इत्याकारकोऽस्मत्पदप्रकारको बोधविशेष्यकश्च भगवत्संकेतः स्वीकार्यः, अत्र 'अहं गच्छामि' इति मैत्रेणोक्ते स्वमस्मत्पदं तदुच्चारयितृतावच्छेदकं मैत्रत्वं तद्वृत्तिस्वोच्चारयितृतावच्छेदकत्वेनोपलक्षितो धर्मो मैत्रत्वमेव तद्विषयकत्वमप्यत्रास्मत्पदजन्यबोधेऽस्ति— अहंपदेन मैत्रस्य प्रतिपादनात् स्वजन्यत्वम्=अस्मत्पदजन्यत्वमप्यस्तीत्येतदुभयसंबन्धेनाऽस्मत्पदविशिष्टो बोधः संकेतविषयोऽस्ति, अत्र च मैत्रे उच्चारयितरि सति स्वोच्चारयितृतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नो मैत्र एवेति तद्विषयकत्वसंबन्धेनाऽस्मत्पदवैशिष्ट्यं मैत्रविषयकबोधे एव संभवति न तु चैत्रादिविषयकबोधेऽपीति. तथा स्वपदसंनिवेशेन सामान्यत उच्चारयितृतावच्छेदकत्वस्यानुगमकत्वाभावाद् मैत्रोच्चारिताऽस्मत्पदाच्चैत्रादेः प्रतीत्यापत्तिर्नास्ति, स्वपदार्थस्य च संबन्धघटकतया न तत्तत्पदव्यक्तित्वेनाऽस्मत्पदानां संकेतविषयता येनाऽननुगमः स्यात् किं तु अस्मत्पदत्वरूपानुगतानुपूर्वीविशेषेणैवेति न पदव्यक्तिभेदेन शक्तिभेद इत्यर्थः । अवशिष्टं च तत्पदे द्रष्टव्यम् ।

तद्धर्मावच्छिन्नविषयताशालिबोधे पदांशे तद्धर्मावच्छिन्नविषयताघटितोक्तोभ-
यसंबन्धावच्छिन्नाया बोधनिष्ठविशेष्यतानिरूपितसंकेतीयप्रकारताया वाचकता-
रूपायाः प्रकारतया संसर्गतया वा ज्ञानस्य हेतुत्वात्, अन्यधर्मावच्छिन्नं बुद्धिस्थी-
कृत्य प्रयुक्ते पदेऽन्यधर्मावच्छिन्नविषयताघटितोभयसंबन्धावच्छिन्नसंकेतीयप्रका-
रताया असत्त्वेन तत्र तदवगाहिज्ञानस्य भ्रमत्वनियमात् ॥

---

भवतीत्युक्तम्- प्रकारतानिरूपिततयाविधस-
निवेशम् । समर्थश्च किंचिन्निष्ठप्रकारतानिरूपितो भवतीत्युक्तम्- प्रकारतानिरूपिततयाविधस-
सर्गेति । अत इति- यत उक्तैतत्तदादिपदवाच्यतारूपा विषयता कालान्तरीणपुरुषान्तरीयबुद्धिविष-
तावच्छेदकावच्छिन्ने वस्तुतो न भवत्यतस्तत्रैतत्तदादिपदवाच्यतारूपविषयतावगाहि ज्ञानं भ्रम
एवेति तादृशभ्रम विनैतत्तदादिपदेन तदवच्छिन्नबोध =कालान्तरीणपुरुषान्तरीयबुद्धिविषयताव-
च्छेदकावच्छिन्नविषयकबोधो न भवतीत्यर्थः ।

तद्धर्मावच्छिन्नेति-तद्धर्मावच्छिन्नविषयताशालिबोधे=तद्धर्मावच्छिन्ना या विषयता तादृशवि-
षयताकशाब्दबोधं प्रति तद्धर्मावच्छिन्नविषयताघटितो य उक्तोभयसम्बन्धस्तादृशसम्बन्धावच्छिन्नाया
बोधनिष्ठविशेष्यतानिरूपितसंकेतीयप्रकारताया वाचकतारूपाया पदांशे=तदादिपदे यत् प्रका-
रतया वा संसर्गतया वा ज्ञानं तस्य हेतुत्वं स्वीक्रियते. एतत्तदादिपदनिष्ठाया वाचकतारूपप्रका-
रतायास्तदन्यतदादिपदे चासत्त्वेन तत्र=अन्यधर्मावच्छिन्नं बुद्धिस्थीकृत्य प्रयुक्ते तदादिपदे
( तदन्यतदादिपदे ) तदवगाहिज्ञानस्य=अन्यधर्मावच्छिन्नविषयताघटितोभयसम्बन्धावच्छिन्नसंकेती-
यप्रकारतावगाहिज्ञानस्य ( एतत्तदादिपदनिष्ठप्रकारतावगाहिज्ञानस्य ) भ्रमत्व नियमेन भव-
तीति तादृशभ्रमात्मकज्ञानेनैवाऽन्यधर्मावच्छिन्न बुद्धिस्थीकृत्य प्रयुक्तेन पदेनाऽन्यधर्मावच्छि-
न्नविषयको बोधः सम्भवति न तु तादृशवाचकतारूपप्रकारताया प्रकारतया संसर्गतया वा
यथार्थज्ञानेन. तथा च प्रकृतघटादिकं बुद्धिस्थीकृत्य प्रयुक्तेनैतत्तदादिपदेन कालान्तरीणपुरु-
षान्तरीयबुद्धिविषयतावच्छेदकावच्छिन्नघटादेर्न यथार्थबोधः सम्भवतीति न तस्यैतत्तदादिपदवा-
च्यतापत्तिर्न वा एतत्तदादिपदस्य तद्वाचकतापत्तिरितिसारः । अन्यधर्मावच्छिन्नेतिपाठद्वयस्थाने अन्य-
तद्धर्मावच्छिन्नेतिपाठो युक्तः । प्रकारतयेति- ' उक्ता या बोधनिष्ठा विशेष्यता, तन्निरूपितप्र-
कारतावत् तदादिपदम् ' इत्यत्र तादृशवाचकतारूपप्रकारताया प्रकारतया ज्ञानं भवति 'उक्तबो-
धनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन घटत्वादिधर्मविशिष्टवत् तदादिपदम् ' इत्यत्र च ताद-
शप्रकारताया संसर्गतया ज्ञानं जायते इत्युक्तम्- " प्रकारतया संसर्गतया वा " इति ।
अवशिष्टं च स्वयमेव निवेचनीयम् ॥

॥ इति तत्पदम् ॥

युष्मदस्मत्स्थलेऽपीदृश्येव गतिश्चिन्तनीया ।

अथ

## युष्मदस्मत्पदे.

संप्रति युष्मदस्मत्पदयोः शक्तिनिरूपणमारभते— युष्मदस्मदित्यादिना । तत्पदोक्तरीतिमत्राप्यतिदिशति— ईदृश्येवेति, तथा च युष्मत्पदस्थले 'स्वघटितवाक्यजन्यबोधाश्रयत्वेनेच्छोद्देश्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नविषयकत्वस्वजन्यत्वैतदुभयसंबन्धेन युष्मत्पदविशिष्टो बोधो भवतु' इत्याकारको युष्मत्पदप्रकारको बोधविशेष्यकश्च भगवत्संकेतः पूर्ववत् स्वीकार्यः, अत्र स्वं युष्मत्पदं तद्घटितं यद् वाक्यम् 'चैत्र त्वं गच्छ' इतिवाक्यं तज्जन्यो यो बोधस्तदाश्रयत्वेन योच्चारयितुरिच्छा 'मदुक्तवाक्यजन्यबोधाश्रयश्चैत्रो भवतु' इतीच्छा तादृशेच्छोद्देश्यश्चैत्र एव उद्देश्यतावच्छेदकं चैत्रत्वं तद्वृत्ति यदुद्देश्यतावच्छेदकत्वं तदुपलक्षितो धर्मश्चैत्रत्वमेव तदवच्छिन्नो यश्चैत्रस्तद्विषयकत्वमपि युष्मत्पदजन्यबोधेऽस्ति त्वंपदेन चैत्रस्यैव प्रतिपादनात् स्वजन्यत्वम्=युष्मत्पदजन्यत्वमप्यस्तीत्येतदुभयसंबन्धेन युष्मत्पदविशिष्टो बोधः संकेतविषयोऽस्ति, अत्र च युष्मत्पदेन चैत्रस्य संबोध्यत्वे उक्तेच्छोद्देश्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नश्चैत्र एव भवति तद्विषयकत्वसंबन्धेन युष्मत्पदवैशिष्ट्यं चैत्रविषयकबोधे एव संभवति न मैत्रादिविषयकबोधे इति. तथा स्वपदसन्निवेशेन सामान्यतः संबोध्यतावच्छेदकत्वस्यानुगमकत्वाभावाच्चैत्रस्य यद्युष्मत्पदसंबोध्यता तस्माद् युष्मत्पदाद् मैत्रादेः प्रतीत्यापत्तिर्नास्ति, स्वपदार्थस्य च संबन्धघटकतया न तत्तत्पदव्यक्तित्वेन युष्मत्पदानां संकेतविषयता येनाऽननुगमः स्यात् किं तु पूर्ववद् युष्मत्पदत्वादिरूपानुगतानुपूर्वीविशेषेणैवेति न पदव्यक्तिभेदेन शक्तिभेदः । अस्मत्पदस्थले च 'स्वोच्चारयितृतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नविषयकत्वस्वजन्यत्वैतदुभयसंबन्धेनास्मत्पदविशिष्टो बोधो भवतु' इत्याकारकोऽस्मत्पदप्रकारको बोधविशेष्यकश्च भगवत्संकेतः स्वीकार्यः, अत्र 'अहं गच्छामि' इति मैत्रेणोक्ते स्वमस्मत्पदं तदुच्चारयितृतावच्छेदकं मैत्रत्वं तद्वृत्तिस्वोच्चारयितृतावच्छेदकत्वेनोपलक्षितो धर्मो मैत्रत्वमेव तद्विषयकत्वमप्यत्रास्मत्पदजन्यबोधेऽस्ति— अहंपदेन मैत्रस्य प्रतिपादनात् स्वजन्यत्वम्=अस्मत्पदजन्यत्वमप्यस्तीत्येतदुभयसंबन्धेनाऽस्मत्पदविशिष्टो बोधः संकेतविषयोऽस्ति, अत्र च मैत्रे उच्चारयितरि सति स्वोच्चारयितृतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नो मैत्र एवेति तद्विषयकत्वसंबन्धेनास्मत्पदवैशिष्ट्यं मैत्रविषयकबोधे एव संभवति न तु चैत्रादिविषयकबोधेऽपीति. तथा स्वपदसंनिवेशेन सामान्यत उच्चारयितृतावच्छेदकत्वस्यानुगमकत्वाभावाद् मैत्रोच्चारिताऽस्मत्पदाच्चैत्रादेः प्रतीत्यापत्तिर्नास्ति, स्वपदार्थस्य च संबन्धघटकतया न तत्तत्पदव्यक्तित्वेनाऽस्मत्पदानां संकेतविषयता येनाऽननुगमः स्यात् किं तु अस्मत्पदत्वरूपानुगतानुपूर्वीविशेषेणैवेति न पदव्यक्तिभेदेन शक्तिभेद इत्यर्थः । अवशिष्टं च तत्पदे द्रष्टव्यम् ।

अथ स्वसम्बोध्ये युष्मदः स्वोच्चारयितरि चास्मदः शक्तौ "देव्युवाच- मया त्वयि हतेऽत्रैव गर्जिष्यन्त्याशु देवताः" इत्यादिऋष्यादिवाक्याद् देवीकर्तृकमहिषासुरकर्मकघातादिबोधानुपपत्तिः- तत्र देव्युच्चरितत्वस्य महिषासुरसंबोध्यत्वस्य चाभावात्, ऋष्यादिकर्तृकसुरथकर्मकघातादिबोधस्य च योग्यताभ्रमादापत्तिश्च- ऋष्यादेस्तादृशवाक्यप्रयोक्तृत्वात् सुरथादेश्च तत्सम्बोध्यत्वादितिचेत् ?,

न- तत्र तादृशानुपूर्वीप्रकारेण सामान्यप्रत्यासत्त्या देव्यादिवाक्यस्यापि ज्ञानाद् देवीमहिषासुरयोस्तादृशवाक्यप्रयोक्तृत्वसंबोध्यत्वप्रतिसन्धानादेवाऽस्मद्युष्मद्भ्या देवीमहिषासुरादिप्रतीत्युपपत्तिः । यदि च तत्र वक्त्रऽनुवादकवाक्ययोर्विभिन्नैवाऽऽनुपूर्वी तदाऽनुवादकवाक्ये तद्व्यक्तित्वादिना विशेषदर्शनेप्याऽऽनुपूर्वीप्रकारेण देव्युच्चरितत्वभ्रमादेव श्रोतुर्देव्यादिप्रतीतिस्वीकारेणानुपपत्त्यभावात् ।

उक्तरीत्या स्वसम्बोध्ये युष्मत्पदस्य स्वोच्चारयितरि चास्मत्पदस्य शक्तिरिति मते तत्र शङ्कते- अथेति । "मया त्वयि" इतिसप्तशतीवाक्यम् । "मया त्वयि" इतिवाक्यं सुरथनामकं राजानं प्रति ऋषिणा श्राव्यते न तु देव्या महिषासुरं प्रति येनास्मत्पदेन देव्या युष्मत्पदेन च महिषासुरस्य बोधे जाते देवीकर्तृकमहिषासुरकर्मकघातस्य बोधः स्यात् । उक्ते हेतुमाह- तत्रेति । ऋष्यादिकर्तृकसुरथकर्मकघातस्य च यद्यपि यथार्थयोग्यताज्ञानं न सम्भवति तथापि योग्यताभ्रमस्तु सम्भवत्येवेति तादृशयोग्यताभ्रमादेवोच्चारकर्षिकर्तृकतत्सम्बोध्यसुरथकर्मकघातस्य बोधापत्तिरस्त्येवेत्यर्थः । उक्ते हेतुमाह- ऋष्यादेरिति । स्पष्टमेव सर्वम् ।

परिहरति- नेति, तत्र=ऋषिणा सुरथं प्रयुक्तवाक्यश्रावणस्थले । यथा सामान्यप्रत्यासत्त्या घटत्वप्रकारेण सकलघटानां स्मरणं भवति तथा प्रकृते सामान्यप्रत्यासत्त्या तादृशानुपूर्वीप्रकारेण="मया त्वयि" इत्यादिवाक्यानुपूर्वीरूपेण देवीवाक्यस्यापि स्मरणं सम्भवतीति ज्ञानात्=तादृशस्मरणाद् देव्यास्तादृशवाक्यप्रयोक्तृत्वस्मरणं महिषासुरस्य च तादृशवाक्यसम्बोध्यत्वस्मरणं जायते तेन च देवीकर्तृकमहिषासुरकर्मकघातस्य बोधानुपपत्तिर्नास्तीत्यर्थः । प्रयोक्तुरस्मत्पदार्थत्वात् देव्या तादृशवाक्यप्रयोक्तृत्वस्मरणात् महिषासुरस्य च तादृशवाक्यसम्बोध्यस्य च युष्मत्पदार्थत्वाद् देव्या तादृशवाक्यसम्बोध्यत्वस्मरणादस्मद्युष्मद्भ्यामत्र देवीमहिषासुरयो प्रतीतिर्जायते इत्यभिप्रायः । ननु यत्रानुवाद्यानुवादवाक्ययोरानुपूर्वी समाना स्यात्तत्रोक्तरीत्या सामान्यप्रत्यासत्त्या तादृशानुपूर्वीप्रकारेणानुवाद्यवाक्यस्मरणसम्भवेपि यत्रानुवाद्यानुवादवाक्ययोरानुपूर्वी विभिन्नरूपा स्यात्तत्र कथमुक्तरीत्याऽनुवाद्यवाक्यस्मरणं स्यादित्याशङ्क्याह- यदीति, यद् वाक्यमृषिणोक्तं तद् देव्या नोक्तमित्याकारके तद्वाक्यव्यक्तित्वेन रूपेण विशेषदर्शनेपि=देव्युच्चरितत्वाभावज्ञानेपि तादृशानुपूर्वीप्रकारेण देव्युच्चरितत्वभ्रमस्तु सम्भवत्येवेति तादृशभ्रमादेवात्र श्रोतुरस्मत्पदेन देव्या युष्मत्पदेन च महिषासुरस्य प्रतीतिः सम्भवतीत्यर्थः । ननु यदि यथा "मया त्वयि" इत्येवमृषिणा वाक्यमुक्तं तथा

यत्र च तादृशानुपूर्वीविशेषावच्छेदेनापि विशेषदर्शनं तत्र नेष्यते एव तत्प्रतीतिः।

एवम्–अन्यदीयस्वार्थतात्पर्यकोच्चारणानधीनोच्चारणरूपं स्वतन्त्रोच्चारणमस्मत्पदप्रवृत्तिनिमित्तानुगमकम्, उक्तस्थले ऋष्याद्युच्चारणं च न तथा– तस्यार्थप्रतिपादनद्वारा देव्युच्चारणाधीनत्वादिति नाऽस्मच्छब्दाद् ऋष्यादिबोधः । स्वातन्त्र्येण ' अहं गच्छामि ' इत्युच्चारणस्यापि ' को गच्छति ' इत्यादिप्रश्नवाक्यशक्तिग्राहकवाक्योच्चारणाधीनतया स्वार्थपरत्वमुच्चारणविशेषणम् । प्रश्नवाक्य-

---

देव्या नोक्तं किं त्वेतत्प्रकारकमेवोक्तमित्येव तादृशानुपूर्वीविशेषावच्छेदेनापि विशेषदर्शनम्=देव्युच्चरितत्वाभावनिश्चयः स्यात्तदा तूक्तभ्रमोपि न सम्भवतीति तत्र का गतिरित्याशङ्क्याह– यत्र चेति, उक्तभ्रमाभावेऽस्मद्युष्मद्भ्यां देवीमहिषासुरयोः प्रतीतिर्नेष्यत एवेत्यर्थः । यदि चेत्यत्रानुवादानुवादवाक्ययोर्विभिन्नानुपूर्वीकत्वेन तद्वाक्यव्यक्तित्वेनोक्तविशेषदर्शनेपि तादृशानुपूर्वीप्रकारकदेव्युच्चरितत्वभ्रमादेव श्रोतुर्देव्यादिप्रतीतिर्भवतीत्यभिप्रायः । यत्र चेतिपूर्वग्रन्थस्तूक्तभ्रमस्याऽभावपक्षे विज्ञेय इत्युक्तपूर्वपक्षयोर्विशेषः ।

ननूक्तरीत्या " मया त्वयि " इत्यत्र देव्यादिप्रतीत्यनुपपत्तिवारणे कृतेप्यस्मदादिपदेन ऋष्यादिबोधः स्यादेवेत्याशङ्क्याह– एवमिति, अन्यदीयम्=वक्तृकर्तृकं स्वार्थतात्पर्यकम्=स्वात्मतात्पर्यकं यदऽस्मत्पदोच्चारणं तादृशोच्चारणानधीनं यदुच्चारणं तदेव स्वतन्त्रोच्चारणं तादृशस्वतन्त्रोच्चारणं चाऽस्मत्पदप्रवृत्तिनिमित्तानां चैत्रत्वदेवीत्वादीनां सामानाधिकरण्येनानुगमकं बोध्यम्– यत्रैव चैत्रादौ चैत्रत्वादिकं वर्तते तत्रैव समवायेनास्मत्पदोच्चारणमपि क्रियारूपं वर्तते एवेत्यनुगमकम्, तथा च तादृशस्वतन्त्रास्मत्पदोच्चारणकर्तृत्वमेवास्मत्पदार्थत्वं प्राप्तम्, उक्तस्थले= " मया त्वयि " इत्यत्र ऋष्याद्युच्चारणं च न तथा=उक्तस्वतन्त्रोच्चारणरूपम्– प्रथमं देव्या यथोक्तं तथैव ऋषिणाप्युच्यते इति ऋष्युच्चारणं देव्याः तूक्तस्वार्थतात्पर्यकोच्चारणाधीनमेवेति तस्य=ऋष्याद्युच्चारणस्यार्थप्रतिपादनद्वारा=देव्युक्तार्थप्रतिपादनद्वारा देव्युच्चारणाधीनत्वादिति नात्रास्मत्पदाद् ऋष्यादिबोधापत्तिः, देव्युच्चारणं चान्यदीयोच्चारणानधीनत्वात् स्वतन्त्रोच्चारणमेवेति देव्या अस्मत्पदात् प्रतीतिर्युक्तैवेत्यर्थः । नन्वऽन्यदीयोच्चारणानधीनोच्चारणं स्वतन्त्रोच्चारणमित्येवोच्यतां स्वार्थतात्पर्यकेतिपदं किमर्थं प्रक्षिप्तमित्याशङ्क्याह– स्वातन्त्र्येणेति, यदि स्वार्थतात्पर्यकेति नोक्तं स्यात् किं तु ' अन्यदीयोच्चारणानधीनोच्चारणं स्वतन्त्रोच्चारणम् ' इत्येवोक्तं स्यात्तदा प्रयोजकवृद्धेन ' को गच्छति ' इतिप्रश्नवाक्योच्चारणे कृते एव प्रयोज्यः ' अहं गच्छामि ' इति वदति तथा ' अस्मत्पदस्य स्वात्मनि उच्चारयितरि वा शक्तिः ' इत्यादिशक्तिग्राहकवाक्योच्चारणे कृते एवास्मत्पदशक्तिं गृहीत्वा प्रयोज्यः ' अहं गच्छामि ' इतिवदतीति प्रश्नादिवाक्योच्चारणाधीनत्वात् 'अहं गच्छामि' इतिस्वतन्त्रोच्चारणस्यापि स्वतन्त्रोच्चारणत्वं न स्याद् इष्टं च स्वतन्त्रोच्चारणत्वमिति तदर्थं स्वार्थतात्पर्यकेत्युक्तं तथा च ' अहं गच्छामि ' इत्युच्चारणस्यान्यदीयप्रश्नादिवाक्योच्चारणाधीनत्वेप्यऽन्यदीयस्वार्थतात्पर्यकोच्चारणाधीनत्वं तु नास्तीति स्वतन्त्रोच्चारणत्वमुप-

स्य च ' अहं गच्छामि ' इत्यादिप्रकृतवाक्यतात्पर्यविषयपरत्वाभावात् तदुच्चारणे विशिष्टव्यतिरेकः सुघटः।

आनुपूर्वीसजातीयं यद् वाक्यान्तरं तदुच्चारणानधीनत्वं च निवेशयितुमशक्यम्— शब्दानुकरणस्थले एव समानानुपूर्वीकोच्चारणापेक्षानियमात्, वाक्यार्थानुवादस्थले समानार्थकवाक्यमात्रोच्चारणापेक्षणात् तत्र स्वात-त्र्यापत्तेर्दुर्वारत्वात्।

वस्तुतस्तु वाक्यान्तरस्यक्रियाकर्मतापन्नस्वघटितवाक्यार्थप्रत्यायनेच्छानधीनं स्वोच्चारणमेव स्वतन्त्रोच्चारणम्, अनुवादस्थले च ' इत्युवाच ' इतिवाक्यान्त-

---

पद्यते इत्यर्थः । स्वयमप्याह— प्रश्नवाक्यस्येति, ' को गच्छति ' इत्यादिप्रश्नादिवाक्यस्य यत् ' अहं गच्छामि ' इतिवाक्यं तस्य यद् वक्तृ ज्ञानविषयतात्पर्यं तादृशतात्पर्य-विषयपरत्वाभावात् तदुच्चारणे= ' अहं गच्छामि ' इतिवाक्योच्चारणेऽन्यदीयोच्चारणाधीनो-च्चारणत्वसत्त्वेऽपि विशिष्टस्य=अन्यदीयस्वार्थतात्पर्यकोच्चारणाधीनोच्चारणत्वस्य व्यतिरेकः= अभावः सुघट एवेति ' अहं गच्छामि ' इत्युच्चारणस्योक्तस्वतन्त्रोच्चारणत्वं प्राप्तं तेन चात्राहंपदाद् वक्तुः प्रतीतिरुपपद्यते इत्यर्थः । अत्र स्वतन्त्रोच्चारितास्मत्पदस्य स्वतन्त्रोच्चारणकर्तृत्वोपलक्षितधर्मा-वच्छिन्ने शक्तिरितिसिद्धम् ।

नन्वाऽऽनुपूर्वीसजातीयम्=अनुवादकवाक्यानुपूर्वीसजातीयम्=अनुवाद्यवाक्यसमानानुपूर्वीकं यद् वाक्यान्तरं यत्तद्वाक्यं तदुच्चारणानधीनमुच्चारणं स्वतन्त्रोच्चारणमित्येवोच्यताम्, एवमपि " मया त्वयि " इत्यादिदेवी-वाक्यं तदुच्चारणाधीनमेव ऋष्याद्युच्चारणमस्तीति यत्रास्मत्पदेन ऋष्यादिबोधापत्तिर्नास्ति, देव्युच्चारणं चानुपूर्वीसजातीयवाक्यान्तरोच्चारणानधीनत्वात् स्वतन्त्रोच्चारणमेवेत्यस्मत्पदादत्र देव्याः प्रतीतिरुपपद्यते चेत्याशङ्क्याह— आनुपूर्वीति, द्विविधः खल्वनुवादो भवति— वाक्यानुवादो वाक्यार्था-नुवादश्च शब्दानुकरणस्थले=वाक्यानुवादस्थले एव समानानुपूर्वीकवाक्योच्चारणापेक्षा नियमेन भवतीति तत्रानेन परिष्कारेण दोषाभावेऽपि वाक्यार्थानुवादस्थले समानानुपूर्वीकोच्चारणापेक्षा-नियमो नास्ति किं तु समानार्थकवाक्यमात्रोच्चारणापेक्षानियमः एवेति तत्रानुवादकवाक्योच्चार-णस्याऽऽनुपूर्वीसजातीयवाक्यान्तरोच्चारणानधीनत्वात् स्वतन्त्रोच्चारणत्वं स्यादेव न च वाक्या-र्थानुवादस्थलेऽप्यनुवादकोच्चारणस्य स्वतन्त्रोच्चारणत्वमिष्टमनुवादकवाक्यघटकास्मत्पदेनानुवादकस्यैव बोधः स्याद् न चैतदिष्टं तत्र वक्तृबोधस्येष्टत्वादिति नायं परिष्कारः सङ्गत इत्यर्थः ।

वक्ष्यमाणदोषभयेन कल्पान्तरमाह— वस्तुतस्त्विति, वाक्यान्तरस्य या क्रिया तादृशक्रियाकर्म-तापन्नो यः स्वघटितस्य=अस्मत्पदघटितस्य वाक्यस्यार्थस्तादृशार्थप्रत्यायनस्य देच्छा तादृशेच्छा-

रस्थोक्तिक्रियाकर्मतया तदर्थघटितवाक्यार्थं प्रतिपादयितुमेवाऽनुवादकोऽस्मद्घटितं वाक्यं प्रयुङ्क्ते इति न स्वातंत्र्यम् । 'मां पश्य' इत्यादौ प्रकृतवाक्यस्थज्ञानरूपक्रियाकर्मतया स्वं प्रतिपादयितुमेवाऽस्मदः प्रयोगात् तदुच्चारणस्य स्वातन्त्र्यनिर्वाहाय वाक्यान्तरेति ।

एतेन यत्र चैत्रेणान्यदीयात् 'चैत्रः सुन्दरः' इतिवाक्यादेव वाक्यार्थं प्रतीत्य 'अहं सुन्दरः' इतिप्रयुज्यते तत्र स्वसमानार्थकवाक्योच्चारणसापेक्षत्वेपि, न स्वातंत्र्यक्षतिः, न वा स्वपाण्डित्याभिमानिमौनिपुरुषज्ञानपरस्य "अयम् 'अहं पण्डितः' इति जानाति" इत्यऽन्यदीयोच्चारणस्य स्वातन्त्र्यापत्तिः ।

---

नवीन यत्स्वोच्चारण तदेव स्वतन्त्रोच्चारण विज्ञेयम्, अनुवादस्थले च 'इत्युवाच' इतिवाक्यान्तरस्था योक्तिक्रिया तत्कर्मतयैव तदर्थघटितवाक्यार्थम्=अस्मत्पदघटितवाक्यस्यार्थं प्रतिपादयितुमनुवादकोऽस्मत्पदघटितवाक्य प्रयुङ्क्ते इत्यनुवादकोच्चारण वाक्यान्तरस्थक्रियाकर्मतापन्नस्वघटितवाक्यार्थप्रत्यायनेच्छाधीनत्वान्न स्वतन्त्रोच्चारण भवति येन "मया त्वयि" इत्यत्रास्मत्पदेन ऋष्यादेरनुवादकस्य बोधः स्यात्, देव्युच्चारण च वाक्यान्तरस्थक्रियाकर्मतापन्नस्वघटितवाक्यार्थप्रत्यायनेच्छानधीनत्वात् स्वतन्त्रोच्चारणमेवेति "मया त्वयि" इत्यत्रास्मत्पदेन देव्या प्रतीतिरुपपद्यते चेत्यर्थः । "देव्युवाच" इतिवाक्यस्योक्तिक्रियायाम् "मया त्वयि" इत्यादिवाक्यस्य योर्थस्तस्यैव कर्मत्वमस्तीतिस्पष्टमेव । नन्वत्र वाक्यान्तरस्थेति किमर्थमुक्तमित्याशङ्क्य वाक्यान्तरस्थेतिपदस्य सार्थक्यमाह– मामिति, यदि वाक्यान्तरस्थेति नोक्त स्यात्तदा 'मा पश्य' इत्यत्रैतद्वाक्यस्था या पश्येतिपदप्रतिपाद्या ज्ञानरूपा क्रिया तत्कर्मतयैव स्वात्मान प्रतिपादयितु मामित्यस्मत्पद प्रयुक्तमस्तीति 'मा पश्य' इत्युच्चारणस्यापि स्वतन्त्रोच्चारणत्व न स्याद् इष्ट च स्वतन्त्रोच्चारणत्वमिति तन्निर्वाहाय वाक्यान्तरस्थेत्युक्तं तथा चास्मत्पदघटितैतद्वाक्यार्थस्यैतद्वाक्यघटकक्रियाकर्मत्वेपि वाक्यान्तरस्थक्रियाकर्मत्वाभावात् 'मां पश्य' इतिवाक्योच्चारणस्य न स्वातन्त्र्यक्षतिरित्यर्थः ।

एतत्परिष्कारस्योपयोगान्तरमाह–एतेनेति । वाक्यार्थम्=स्वसौन्दर्यम् । स्वसमानेति– स्वम्='अहं सुन्दरः' इतिवाक्य तत्समानार्थकवाक्यम् 'चैत्रः सुन्दरः' इतिवाक्यं, तस्य यदन्यदीयकर्तृकमुच्चारण तत्सापेक्षत्वेपि 'अह सुन्दर' इत्युच्चारणस्य स्वातन्त्र्यक्षतिर्नास्ति– वाक्यान्तरस्थक्रियाकर्मतया 'अह सुन्दर' इतिवाक्यार्थस्य प्रत्यायनेच्छाभावादित्यर्थः । अत्र चैत्रोऽन्धो वा सौन्दर्यज्ञानरहितो वा विज्ञेयः । न वेति– स्वपाण्डित्याभिमानी यो मौनी पुरुषस्तस्य यत् स्वपाण्डित्यविषयक ज्ञान तत्प्रतिपादनपरम् "अयम् 'अह पण्डितः' इति जानाति" इत्यन्यदीयवाक्य तदुच्चारणस्य स्वातन्त्र्यापत्तिरपि नास्ति– अत्र 'इति जानाति' इति यद्वाक्यान्तर तदस्था या जानातिपदप्रतिपाद्या ज्ञानरूपा क्रिया तत्कर्मतयैव 'अह पण्डितः' इति वाक्यार्थं प्रतिपादयितु वक्तोक्तवाक्यमुच्चारयतीति न तदुच्चारणस्य स्वातन्त्र्यापत्तिस्तेन चात्राहंपदेन न वक्तुः प्रतीतिर्जायते किं तु स्वपाण्डित्याभिमानिमौनिपुरुषस्यैवेत्यर्थः, एतद्वाक्य चान्यदीयो–

अथैवं रीत्याऽव्यवहितोक्तस्थलेऽहंपदेनोच्चारयितृपुरुषविषयकप्रतीतिवारणेऽप्यऽ-
भिमानिनस्तेन प्रत्ययो दुरुपपाद एव–तस्योच्चारणाभावेनाऽस्मत्पदाऽवाच्यत्वादि-
तिचेत् ?, सत्यम्– स्वतन्त्रोच्चारयितुः सर्वत्रास्मदर्थत्वे स्यादेवेयमनुपपत्तिः-
तदेव न– स्वतन्त्रोच्चारितास्मत्पदस्यैव तद्वाचकत्वात् । निरुक्तस्वतन्त्रो-
च्चारणरहितस्य चास्मदः स्वघटितवाक्यार्थकर्मकवाक्यान्तरस्थक्रियाकर्तर्येव
शक्तिः, एवं च " मया त्वयि हतेऽप्येव " इत्यादौ तादृशक्रिया ," देव्युवाच "
इतिवाक्यान्तरस्योक्तिक्रियैव तत्कर्तृत्वं देव्या इति पूर्वोक्तभ्रमं विनैव तत्प्रती-
तिरुपपादयितुं शक्यते ।

---

मौनीत्युक्तम् । " अन्यदीयस्वार्थतात्प-
चारितमेव नोक्तस्वपाण्डित्याभिमा पुच्चारितमितिसूचनाय
र्यकोच्चारणानधीनोच्चारणं स्वतन्त्रोच्चारणम् " इत्युक्तपरिष्कारपक्षेत्वत्र वक्तुरुच्चारणमन्यदीय-
स्वार्थतात्पर्यकोच्चारणानधीनत्वात् स्वतन्त्रोच्चारणं स्यात् तेन चाप्यहंपदेन वक्तुरेव प्रतीतिरापद्येत
स्वपाण्डित्याभिमानिपुरुषस्य चेष्टा प्रतीतिर्न स्यादिति दोषोऽनुसन्धेयः ।

न-नऽव्यवहितोक्तस्थले=" अयम् ' अहं पण्डितः ' इति जानाति " इत्यनेनरीत्या=वक्तु-
रुच्चारणस्य स्वातन्त्र्यनिरासेनाऽहंपदेनोच्चारयितृपुरुषविषयकप्रतीतिवारणे कृतेऽपि स्वपाण्डित्याभिमा-
निनस्तेन=अहंपदेन प्रत्ययः=प्रतीतिर्दुरुपपादैव–यतो वाक्यान्तरस्थक्रियेत्याद्युक्तपरिष्कारेणाप्यु-
क्तस्वतन्त्रोच्चारणकर्तुरेवास्मत्पदार्थत्वं प्रतिपादितमत्र चैतद्वाक्योच्चारणं न स्वपाण्डित्याभिमानिपुरु-
षकर्तृकमित्याशङ्कते– अथेति । तस्य=स्वपाण्डित्याभिमानिपुरुषस्य षष्ठ्यर्थं कर्तृत्वं तथा च
स्वपाण्डित्याभिमानिपुरुषकर्तृकोच्चारणाभावेनेत्यर्थः । उक्तानुपपत्तिं स्वीकुर्वन्नाह– सत्यमिति,
यदि सर्वत्र स्वतन्त्रोच्चारयितुरेवाऽस्मत्पदार्थत्वं स्यात्तदेयम्=उक्तस्थलेऽहंपदेन स्वपाण्डित्याभिमानि-
पुरुषविषयकप्रतीत्यनुपपत्तिः स्यादेव तदेव=स्वतन्त्रोच्चारयितुरेवास्मदर्थत्वमिति नियमो नास्त्येव
यतः स्वतन्त्रोच्चारितस्य=उक्तस्वतन्त्रोच्चारणविषयस्यैवास्मत्पदस्य तद्वाचकत्वम्=स्वतन्त्रोच्चारयितृवा-
चकत्वं स्वीक्रियते न त्वऽस्मत्पदमात्रस्य तथा च निरुक्तस्वतन्त्रोच्चारणरहितस्य=निरुक्तस्वतन्त्रो-
च्चारणाविषयस्य त्वऽस्मदः=अस्मत्पदस्य स्वघटितम्=अस्मत्पदघटितं यद्वाक्यं तस्य योऽर्थस्तद-
र्थकर्मिका या वाक्यान्तरस्था क्रिया तत्कर्तर्येव शक्तिः स्वीक्रियते, अत्र च ' अहं पण्डितः '
इतिवाक्यार्थकर्मिका या वाक्यान्तरस्था जानातिपदप्रतिपाद्या ज्ञानरूपा क्रिया तत्कर्ता
स्वपाण्डित्याभिमानिपुरुष एवेति तस्याऽत्रत्यास्मत्पदेन प्रतीतिः सूपपादैवेत्यर्थः । निरुक्तस्वतन्त्रो-
च्चारणाविषयस्याऽस्मत्पदस्योक्तकर्तरि शक्तिस्वीकारस्य फलान्तरमाह– एवं चेति, " मया त्वयि "
इत्यादि वाक्यस्य ऋषिकर्तृकमुच्चारणं स्वतन्त्रोच्चारणं नास्त्येवेति तादृशार्थकर्तृकोच्चारणकाले त्वत्र
तादृशक्रिया=स्वघटितवाक्यार्थकर्मिका क्रिया " देव्युवाच " इतिवाक्यान्तरस्योक्तिक्रियैव तत्क-
र्तृत्वं देव्या एवेति पूर्वोक्तभ्रमं विनैव तत्प्रतीतिः=देव्याः प्रतीतिरस्मत्पदेनोपपादयितुं शक्यते इत्यर्थः ।

स्वघटितवाक्यार्थकर्मकवाक्यान्तरस्थक्रियात्वं च तादृशार्थकर्मकत्वेन वाक्यान्तरप्रतिपाद्यत्वं तेन 'अहं पण्डित इतिविद्वांसं पश्य' इत्यादौ दर्शनादिक्रियाया अस्मच्छब्दघटितवाक्यार्थविषयकत्वसम्भवेऽपि तेन रूपेण समभिव्याहृतवाक्यान्तराऽप्रतिपाद्यतया न तत्क्रियाकर्तुरस्मच्छब्दतः प्रतीतिः ।

अथ इतिपदघटितवाक्यान्तरात् क्रियाप्रतिपत्तावेव तत्कर्तुर्वाक्यान्तरप्रतिपाद्यक्रियाकर्तृत्वं सुग्रहं तद्ग्रह एव च तद्घटितानुगमकरूपेणाऽस्मच्छब्दशक्तिग्रहेऽस्मच्छब्दघटितवाक्यार्थप्रतीतौ तस्येतिपदादुपस्थित्या वाक्यान्तरक्रियाप्रतिपत्तिरित्यन्योन्याश्रय इतिचेत् ?,

---

'अहं पण्डित इतिविद्वांसं पश्य' इत्यत्र पश्येतिदर्शनक्रियाकर्तुरहंपदवाच्यत्वं स्यादितिभयेन स्वघटितवाक्यार्थकर्मकवाक्यान्तरस्थक्रियां परिष्करोति— स्वघटितेति, तादृशार्थकर्मकत्वेन=स्वघटितवाक्यार्थकर्मकत्वेन रूपेण वाक्यान्तरप्रतिपाद्या या क्रिया सैवोक्तस्थले स्वघटितवाक्यार्थकर्मकवाक्यान्तरस्थक्रिया विज्ञेया तथा च 'अहं पण्डित इतिविद्वांस पश्य' इत्यत्र पश्येतिदर्शनक्रियायाः 'अहं पण्डित इतिविद्वांसम्' इत्याकारकास्मच्छब्दघटितवाक्यार्थविषयकत्वसंभवेऽपि तेन=अस्मच्छब्दघटितवाक्यार्थकर्मकत्वेन रूपेण समभिव्याहृतवाक्यान्तरप्रतिपाद्यत्वं नास्तीति तत्क्रियाकर्तुः=यं प्रत्युक्तवाक्यमुच्यते तस्य पश्येतिदर्शनक्रियाकर्तुरत्राहंपदेन प्रतीत्यापत्तिर्नास्ति, उक्तक्रियाया एतत्परिष्काराभावे तु पश्येतिदर्शनक्रियापि स्वघटितवाक्यार्थकर्मकवाक्यान्तरस्थक्रियैवेति दर्शनक्रियाकर्तुरप्यत्राहंपदेन प्रतीतिः स्यादेव न चैतदिष्टमित्यर्थः । प्रतिपाद्यत्वं चात्र वक्तुः प्रतिपादनेच्छाविषयत्वमेव इच्छा च वक्तुरधीनेत्यत्र 'इतिविद्वांसम्' इत्याकारकविदिक्रियायामेवास्मत्पदघटितवाक्यार्थकर्मकत्वेन प्रतिपाद्यत्वमस्तीत्यहंपदेनात्र तादृशविदिक्रियाकर्तुरेव पण्डितंमन्यस्य प्रतीतिर्जायते ।

ननु "निरुक्तस्वतन्त्रोच्चारणरहितस्य चास्मदः स्वघटितवाक्यार्थकर्मकवाक्यान्तरस्थक्रियाकर्तर्येव शक्तिः" इत्यत्र विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वाद् इतिपदघटितात् 'इत्युवाच-'इतिजानाति' इत्यादि वाक्यान्तरात् कर्तृविशेषणीभूतायाः क्रियायाः प्रतिपत्तौ सत्यामेव तत्कर्तुरितिपदघटितवाक्यान्तरप्रतिपाद्यक्रियाकर्तृत्वं ग्रहीतुं शक्यते तद्ग्रहे=वाक्यान्तरप्रतिपाद्यक्रियाकर्तृत्वग्रहे जाते एव च तद्घटितानुगमकरूपेण=वाक्यान्तरप्रतिपाद्यक्रियाकर्तृत्वोपलक्षितधर्मावच्छिन्नत्वेनानुगमकरूपेणाऽस्मत्पदशक्तिग्रहो जायते तेन च शक्तिग्रहेणास्मत्पदघटितवाक्यस्यार्थप्रतीतिर्जायते तादृशास्मत्पदघटितवाक्यार्थप्रतीतौ जातायां च तस्य=अस्मत्पदघटितवाक्यार्थस्य वाक्यान्तरस्येतिपदादुपस्थित्या वाक्यान्तरक्रियाप्रतिपत्तिः=स्वघटितवाक्यार्थकर्मकत्वेन रूपेण वाक्यान्तरस्थक्रियाप्रतिपत्तिरित्यन्योन्याश्रयो दोष इत्याशङ्कते— अथेति । अत्रेतिपदघटितवाक्यान्तरात् क्रियाप्रतिपत्तौ सत्यां तत्कर्तुस्तादृशवाक्यान्तरप्रतिपाद्यक्रियाकर्तृत्वं सुग्रहं तद्ग्रहे एव मध्यपतितकारणैः स्वघटितवाक्यार्थकर्मकवाक्यान्तरस्थक्रियात्वं सुग्रहमित्यन्योन्याश्रयस्वरूपं विज्ञेयम् ।

न- वाक्यान्तरजन्यत्वोपरक्तप्रतिपत्तिविषयतया वक्तृबुद्धिस्थत्वस्यैव क्रियायां विशेषणत्वोपगमात् प्रतिपत्तेः पूर्वमपि प्रकरणादिना तादृशवक्तृबुद्धेर्यहसंभवेनाऽन्योन्याश्रयानवकाशात् ।

... स्वार्थघटितवाक्यार्थविषयकत्वान्वितक्रियाकर्तृतया वाक्यान्तरप्रतिपाद्यत्वेन या वक्तृबुद्धिस्तद्विषयतावच्छेदकत्वं प्रवृत्तिनिमित्तानुगमकमिति तु सारम्, एव च बुद्धिविषयतावच्छेदकत्वस्य प्रवृत्तिनिमित्तानुगमकत्वप्रवादोऽपि संगच्छते । उच्चारणकर्तृत्वानुगमकशरीरेऽपि मिश्राणां बुद्धिस्थत्वनिवेशबीजं तु नाववारयामः ।

---

याद‍ृशक्रियाकर्तर्यस्मत्पदस्य शक्तिरुक्ता तादृशक्रियाया वाक्यान्तरजन्यत्वो-
परिहरति-नेति, याद‍ृशक्रियाकर्त्रर्थस्मत्पदस्य शक्तिरुक्ता तादृशक्रियाया वाक्यान्तरजन्यत्वो-
परक्ता=वाक्यान्तरजन्यत्वविशिष्टा या प्रतिपत्तिस्तादृशप्रतिपत्तिविषयतया वक्तृबुद्धिस्थत्वमेव विशे-
षण विशेष तथा च 'इत्युवाच' इत्यादिवाक्यान्तरजन्य यद् ज्ञान तादृशज्ञानविषयीभूता नाम
'इत्युवाच' इत्यादिवाक्यान्तरप्रतिपाद्या वक्तृबुद्धिस्था च या क्रिया तादृशक्रियाकर्त्रर्थेऽस्मत्पदस्य
शक्तिस्तथा च प्रतिपत्ते =उक्तवाक्यार्थप्रतिपत्ते पूर्वमपि प्रकरणादिना तादृशवक्तृबुद्धे =क्रियायां
यद्वाक्यान्तरप्रतिपाद्यत्व विशेषण तादृशवाक्यान्तरप्रतिपाद्यत्वविषयकवक्तृबुद्धेर्ग्रहसम्भवेन प्रदर्शिता
न्योन्याश्रयस्यानवकाशो नास्तीत्यर्थ । "वाक्यान्तरजन्यत्वोपरक्तप्रतिपत्तिविषयतया" इत्यत्र "वा-
क्यान्तरप्रतिपाद्यतया' इत्यपि क्वचित्पाठ च सुलभार्थस्तत्र 'वाक्यान्तरप्रतिपाद्यत्वेन रूपेण
वक्तृबुद्धिस्था या 'उवाच' इत्यादिक्रिया तत्कर्त्रर्थेऽस्मत्पदस्य शक्तिरित्यर्थ ' ।
निष्कर्षमाह- स्वार्थेति- स्वार्थघटित =अस्मत्पदार्थघटितो य "मया दृष्टि" इत्यादिवा-
क्यप्रतिपाद्योऽर्थस्तद्विषयकत्वेनान्वितता=विशिष्टा नाम स्वार्थघटितवाक्यार्थकर्मिका या 'उवाच'
इत्यादिक्रिया तादृशक्रियाकर्तृत्वेन रूपेण यद् "देव्युवाच" इत्यादिवाक्यप्रतिपाद्यत्व तेन रूपे-
णोक्तकर्तृविषयिका या वक्तृबुद्धिस्तद्विषयतावच्छेदकत्वमेवास्मत्पदप्रवृत्तिनिमित्ताना चैत्रत्वदेवीत्वा-
दीनामनुगमक वाच्य तथा चोक्तवक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने स्वतन्त्रोच्चारणक-
र्तृत्वोपलक्षितधर्मश्च "मया
हितस्यास्मत्पदस्य शक्तिरित्यत्र प्राप्तम्, तादृशवक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मश्च "मया
त्वयि" इत्यत्र देवीधर्मेऽत्यतास्मत्पदेन देव्या प्रतीतिरुपपन्ना । 'अह पण्डित इति विश्वास पश्य'
इत्यत्र स्वार्थघटितवाक्यार्थकर्मिका क्रिया विदिक्रिया तत्कर्तु पण्डितमन्यस्यास्मत्पदार्थत्व विशे-
यम् । एतत्परिष्कारस्य फलान्तरमाह- एव चेति, अस्म पदस्थलेऽपि बुद्धिविषयतावच्छेदकत्व प्रवृ-
त्तिनिमित्तानुगमकमस्तीति य प्रवादोऽस्ति तस्यापि सगतिर्जातेत्यर्थ । मुरारिमिश्रैस्तु "उच्चारयि-
तृतावच्छेदकबुद्धिप्रकारावच्छिन्नेऽस्मत्पदस्य शक्ति ।" इत्युक्त नाम उच्चारयितृतावच्छेदको यो
बुद्धिविषयतावच्छेदकत्वोपलक्षितश्चैत्रत्वादिधर्मस्तदवच्छिन्नेऽस्मत्पदस्य शक्ति , अत्र च बुद्धिस्थत्व-
निवेशस्य प्रयोजन नैवावगम्यते व्यर्थत्वप्रतिसधानादिति मिश्रमतमाक्षिपति- उच्चारणेति ।
सप्रति युष्मत्पदशक्तिनिरूपणाय ' स्वसबोध्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने युष्मत्प-
दस्य शक्ति ' इत्यत्र युष्मत्पदप्रवृत्तिनिमित्तानुगमक यत् स्वसबोध्यतावच्छेदकत्व तद्गर्भप्रविष्ट

एवं युष्मत्पदप्रवृत्तिनिमित्तानुगमकगर्भनिविष्टं स्वसंबोध्यत्वमपि वाक्यान्तरस्थक्रियाकर्मत्वेन स्वघटितवाक्यार्थानवगाहिनी या स्वजन्यप्रतीत्याश्रयत्वेनेच्छा तद्विषयत्वम् । अनुवादकेन यः संबोध्यते स नानुवादकोच्चारितयुष्मच्छब्दनिरूपितनिरुक्तसंबोध्यतावान्— वक्तृप्रतिपाद्यतया युष्मदर्थघटितवाक्यार्थघटितो यो वाक्यार्थकर्मकोक्तिक्रियाघटितवाक्यार्थस्तद्विषयकत्वविशिष्टप्रतिपत्त्याश्रयत्वेनैव तस्याऽनुवादकेच्छाविषयत्वात् ।

यदि च 'इतिपदघटितवाक्यार्थप्रतीतिरूपफलेच्छाधीना युष्मदर्थघटितवाक्यार्थप्रतीतिविषयिणी तादृशवाक्यार्थांशे वाक्यान्तरस्थक्रियाकर्मत्वानवगाहि-

यत् स्वसंबोध्यत्वं तत् परिष्करोति— एवमित्यादिना । वाक्यान्तरेति— वाक्यान्तरस्था या 'उवाच' इत्यादिघचिक्रिया तत्कर्मत्वेन स्वघटितस्य=युष्मत्पदघटितस्य "मया त्वयि" इत्यादिवाक्यस्यार्थं या नाऽवगाहते एतादृशी या स्वजन्यप्रतीत्याश्रयत्वेन=युष्मत्पदघटितवाक्यजन्यप्रतीतिप्रकारिकेच्छा तादृशेच्छाविषयत्वं स्वसंबोध्यत्वं विज्ञेयम्, "मया त्वयि" इत्यत्र देव्या इच्छा "देव्युवाच" इतिवाक्यान्तरस्याकथनाद् वाक्यान्तरस्थक्रियाकर्मत्वेन "मया त्वयि" इत्यादिस्वघटितवाक्यार्थं नावगाहते इति तदनवगाहिनी या युष्मत्पदघटितवाक्यजन्यप्रतीत्याश्रयत्वप्रकारिका "मया त्वयि" इत्यादिवाक्यजन्यप्रतीत्याश्रयो महिषासुरो भवतु इत्याकारा इच्छा तद्विषयत्वं महिषासुरेऽस्त्येवेत्यत्र युष्मत्पदेन महिषासुरस्य प्रतीतिरुपपन्ना, ऋषिणा तु "देव्युवाच" इतिकथनात् ऋषीच्छा "मया त्वयि" इत्यादिस्वघटितवाक्यार्थं वाक्यान्तरस्थवचिक्रियाकर्मत्वेनैवावगाहते इति तदवगाहिनी या "मया त्वयि" इत्यादिवाक्यजन्यप्रतीत्याश्रयः सुरथो भवतु इत्याकारा ऋषीच्छा तादृशेच्छाविषयत्वमेव सुरथस्यास्तीति नात्र युष्मत्पदेन सुरथस्य प्रतीत्यापत्तिरित्यर्थः । अनुवादकसंबोध्यस्यानुवाद्यवाक्यघटकयुष्मत्पदेन प्रतीत्यापत्तिर्नास्तीति स्वयमप्याह— अनुवादकेनेति । निरुक्तसंबोध्यतावान्=उक्तेच्छाविषयत्वरूपसंबोध्यतावान् । उक्ते हेतुमाह— वक्तृप्रतिपाद्येति, वक्तृप्रतिपाद्यत्वेन रूपेण "मया त्वयि" इत्यादियुष्मदर्थघटितवाक्यार्थघटितो यः "देव्युवाच" इत्यारभ्य "आशु देवताः" इतिपर्यन्तं स्वघटितवाक्यार्थकर्मकोक्तिक्रियाघटितो महावाक्यार्थस्तद्विषयकत्वविशिष्टा=तद्विषयिका या प्रतिपत्तिः=उक्तमहावाक्यार्थज्ञानं तदाश्रयत्वेनैव रूपेण तस्य=अनुवादकसंबोध्यस्य सुरथादेः 'एतन्महावाक्यजन्यप्रतीत्याश्रयः सुरथो भवतु' इत्याकारा याऽनुवादकेच्छा=ऋषीच्छा तद्विषयत्वमस्ति न तु पूर्वोक्तेच्छाविषयत्वमिति नात्र सुरथादेर्युष्मत्पदेन प्रतीत्यापत्तिरित्यर्थः ।

नन्विच्छायाः स्वाधीनत्वाद् इतिपदघटितं यत् 'इत्युवाच' 'इतिजानाति' इत्यादिवाक्यं तस्य योऽर्थस्तत्प्रतीतिरूपं यत् फलं तादृशफलेच्छाधीना ".मया त्वयि" इत्यादियुष्मदर्थघटितवाक्यार्थो यस्तत्प्रतीतिविषयिणी=तत्प्रतीतिविषयिका तादृशवाक्यार्थांशे=युष्मदर्थघटितवाक्यार्थांशम् 'इत्युवाच' इत्यादिवाक्यान्तरस्थक्रियाकर्मत्वेनाऽनवगाहिन्यपि तादृशवाक्योच्चारणा-

न्यपि तादृशवाक्योच्चारणानुकूलाऽनुवक्तुरिच्छा संभवतीति तादृशेच्छामादाया-
नुवादकसंबोध्यस्य संबोध्यतापत्तिः' इति मन्यते । तदा वाक्यान्तरार्थप्रतीती-
च्छानधीनत्वमपीच्छाविशेषणं देयमिति "मया त्वयि हतेऽत्रैव" इत्यादौ
युष्मच्छब्दान्न सुरथादिप्रतीतिः ।

एवमभ्रान्तस्य ततो महिषासुरादिप्रतीतिनिर्वाहाय वाक्यान्तरस्थस्वघटितवा-
क्यार्थकर्मकक्रियाकर्मण्यपि युष्मदः शक्त्यन्तरं स्वीकार्यं तत्र देवी महिषासुर-
मित्युवाचेतिवाक्यस्थक्रियाकर्मत्वं महिषासुरादेरिति तस्यापि 'त्वयि' इत्यादि-
शब्दार्थतोपपत्तिः । अत्रापि पूर्ववत् स्वघटितवाक्यार्थविषयकत्वान्विताक्रिया-

---

नुकूला=युष्मत्पदघटितवाक्योच्चारणानुकूलाऽनुवादकस्याऽप्यादेरिच्छा संभवतीति तादृशे च्छामा
दायानुवादकसंबोध्यस्यापि सुरथादे संबोध्यत्व स्यादेवेति "मया त्वयि" इत्यत्र युष्मत्पदेन
सुरथादेरपि बोध स्यादेवेत्याशङ्क्याह— यदीति । अत्र च ' अत्र महावाक्यार्थबोध फलमऽवा-
न्तरवाक्यार्थबोध उपाय इति "मया त्वयि" इत्याद्यवान्तरवाक्यमात्रज यबोधो भवतु इत्याकाराय
इच्छाया अपि तादृशवाक्योच्चारणानुकूलत्वात् तस्या च वाक्या तरस्थक्रियाकर्मत्वेन स्वघटित-
वाक्यार्थस्याऽनवगाहनात् तद्विशेष्य नमादायाऽनुवादकसंबो यस्य निरुक्तसंबोध्यतापत्तिरित्या-
शङ्कते— यदिचेत्यादि " इति हरिनाथभट्टाचार्या । उत्तरमाह— तदेति, अनेन हि ' वाक्या-
न्तरार्थप्रतीतीच्छानधीना वाक्या तरस्थक्रियाकर्मत्वेन स्वघटितवाक्यार्थानवगाहिनी या स्वजन्यप्र-
तीत्याश्रयत्वेनेच्छा तादृशेच्छाविषयत्व स्वसंबोध्यत्वम् ' इत्यभिप्राय तथा चात्रोक्तानुवदकर्त्री च्छा
' इत्युवाच ' ' देव्युवाच ' इत्यादि यद्वाक्यान्तर तदर्थप्रतीतीच्छानधीना नास्ति किं तु
सुरथस्य ' देव्युवाच ' इत्यादिवाक्यान्तरार्थस्यापि प्रतीति स्यादितीच्छास्तीति तादृशेच्छाधीने-
वोक्तयुष्मदर्थघटितवाक्यार्थप्रती याश्रय नेनेच्छास्तीति न " मया त्वयि " इत्यत्र युष्म च्छब्दाद्
अनुवादकसंबो यसुरथादे प्रतीत्यापत्ति । देव्यास्तु योक्तयुष्मदर्थघटितवाक्यार्थप्रतीत्याश्रयत्वेनेच्छा
सा ' देव्युवाच ' इत्यादिवाक्यान्तरस्याभावाद् वाक्या तरार्थप्रतीतीच्छानधीनेनास्तीति तद्विषय-
त्वाद् महिषासुरस्यात्र युष्मत्पदेन प्रतीतिरुपपन्ने यर्थ ।

युष्मत्पदस्य शक्त्यन्तरमाह— एवमिति । तत =युष्म पदात् । " देव्युवाच " इत्यादिवा-
क्यान्तरस्था या युष्मत्पदघटितवाक्यार्थकर्मिका वच्यादिक्रिया त कर्मण्यपि युष्मत्पदस्य शक्तिर-
स्तीत्यर्थ । " मया त्वयि " इत्यत्र " देव्युवाच " इतिवाक्यान्तरस्थवचिक्रियाकर्मत्व महि-
षासुरस्यास्तीति युष्मत्पदेन तस्य=महिषासुरस्य बोध उपपन्न इत्याह— तत्रेति । युष्मत्पदप्रवृत्ति-
निमित्तमाह— अत्रापीति । पूर्ववत्=" स्वार्थघटितवाक्यार्थविषयकत्वान्वित ११८" इत्याद्युक्तास्म-
त्पदप्रवृत्तिनिमित्तानुगमकस्वरूपवत् । स्वघटितेति— स्वघटितवाक्यार्थविषयकत्वान्विता=" मया
त्वयि " इत्यादियुष्मत्पदघटितवाक्यार्थकर्मिका या वच्यादिक्रिया तादृशक्रियाकर्मत्वेन रूपेण
वाक्या तरप्रतिपाद्य नेन=" मया त्वयि " इत्यादिवाक्यान्तरेण प्रतिपादनेच्छाविषयत्वप्रकारिका

कर्मतया वाक्यान्तरप्रतिपाद्यत्वेन या वक्तृबुद्धिस्तद्विषयतावच्छेदकत्वेनाऽनुगतानां चैत्रत्वमहिषासुरत्वादीनां प्रवृत्तिनिमित्तत्वं बोध्यम् । संबोध्यत्वघटितानुगमकशरीरे च बुद्धिविषयतावच्छेदकत्वनिवेशनं मिश्रोक्तमनुपादेयमेव— संबोध्यतावच्छेदके बुद्धिप्रकारत्वस्याऽव्यावर्तकत्वात् ।

अथ तात्पर्यसत्त्वे ' अहमत्रास्मीति मैत्रो जानाति ' इत्यादिचैत्रवाक्यस्थाऽस्मच्छब्दाच्चैत्रोऽपि प्रतीयते तत्र चैत्रस्य स्वघटितवाक्यार्थकर्मकक्रियाकर्तृत्वाभावात् तदुच्चारणस्य निरुक्तस्वातन्त्र्याभावाच्चानुपपत्तिः । एवम् 'चैत्र त्वया भुक्तमिति मया श्रुतम् ' इत्यादौ चैत्रस्य युष्मच्छब्देन प्रतिपादनात् तस्य च वाक्यान्तरस्थक्रियाकर्मत्वस्य निरुक्तेच्छाविषयत्वरूपसंबोध्यत्वस्य चाऽभावात् तत्कथमुपपद्यतामिति चेत् ?,

---

या वक्तृबुद्धिस्तद्विषयतावच्छेदकत्वेन रूपेणानुगतानां चैत्रत्वमहिषासुरत्वादीनां युष्मत्पदप्रवृत्तिनिमित्तत्वं बोध्यम्, तथा चोक्तरूपा या वक्तृबुद्धिस्तादृशबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने युष्मत्पदस्य शक्तिरिति सिद्धम्, तादृशधर्मश्च चैत्रत्वमहिषासुरत्वादिकं बोध्यम् । मुरारिमिश्रेण तु ' बुद्धिविषयतावच्छेदकीभूतं यत् स्वसंबोध्यतावच्छेदकं तादृशसंबोध्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने युष्मत्पदस्य शक्तिः ' इत्यादिरीत्या संबोध्यत्वघटितं यद् युष्मत्पदप्रवृत्तिनिमित्तानुगमकं तच्छरीरेऽपि बुद्धिविषयतावच्छेदकत्वस्य यो निवेशः कृतः सोऽनुपादेय एवास्ति— किंचिद्व्यावर्तकस्यैव विशेषणत्वं भवति संबोध्यतावच्छेदके च निवेशितं बुद्धिप्रकारत्वम्=बुद्धिविषयतावच्छेदकत्वमव्यावर्तकमेवेत्याशयेन मिश्रोक्तमाक्षिपति— संबोध्य चेति । स्पष्टमन्यत् ।

शङ्कते— अथेति, ' अहमत्रास्मीति मैत्रो जानाति ' इतिचैत्रोक्तवाक्यस्यार्थद्वयं संभवति तत्रैकं किल ' मैत्रोऽत्रत्यां स्वस्थितिं जानाति ' इति एतदर्थपक्षे ह्यऽहमित्यऽस्मत्पदेन मैत्रस्य प्रतीतिरिष्टा सा च संभवत्येव— मैत्रस्य वाक्यान्तरस्थजानातीतिक्रियाकर्तृत्वात् पूर्वमस्मत्पदस्य स्वघटितवाक्यार्थकर्मकवाक्यान्तरस्थक्रियाकर्तरि शक्तेरुक्तत्वात्, द्वितीयः खलु 'मैत्रोऽत्रत्यां मदीय-( चैत्रीय ) स्थितिं जानाति ' इति एतदर्थपक्षे त्वहमित्यस्मत्पदेन चैत्रस्य प्रतीतिरिष्टा, सा न संभवति चैत्रे ' अहमत्रास्मि ' इतिस्वघटितवाक्यार्थकर्मकजानातिक्रियाकर्तृत्वस्याऽभावात् तथा स्वतन्त्रोच्चारणकर्तर्यप्यऽस्मत्पदस्य शक्तिरुक्ता तादृशस्वतन्त्रोच्चारणकर्तृत्वमपि चैत्रे नास्ति चैत्रकर्तृकोक्तवाक्योच्चारणस्य स्वतन्त्रत्वाभावाद् वाक्यान्तरस्थक्रियाकर्मतापन्नस्वघटितवाक्यार्थप्रत्यायनेच्छानधीनोच्चारणस्यैवोक्तरीत्या स्वतन्त्रत्वस्वीकाराद् अत्र च चैत्रोच्चारणम् 'इतिजानाति' इतिवाक्यान्तरस्थजानातिक्रियाकर्मतापन्नत्वेनैव या स्वघटितवाक्यार्थप्रत्यायनेच्छा तदधीनमेवास्तीत्यस्मत्पदेन चैत्रप्रतीतेरनुपपत्तिरित्यर्थः । अस्मत्पदेऽनुपपत्तिं प्रदर्श्य युष्मत्पदे प्रदर्शयन्ति— एवमिति । तस्य=चैत्रस्य चैत्रे इतियावत् । युष्मत्पदस्य वाक्यान्तरस्थक्रियाकर्मणि " वाक्यान्तरस्थक्रियाकर्मत्वेन ११९ " इत्याद्युक्तेच्छाविषयत्वरूपसंबोध्यत्ववति च शक्तिरुक्ता ' चैत्र त्वया भुक्तमिति

इत्यादिवाक्यात् चैत्रं बोधयितु प्रयुक्तात् 'त्वं गच्छ' इत्यादिवाक्यान्नोच्चारयितृत्वसंबोध्यत्वभ्रमं विना मैत्रादिबोधस्य सर्वानुभवविरुद्धत्वात्, अन्यथा तात्पर्येण स्वरसत एव तथाप्रयोगापत्तेः ।

इदं तु तत्त्वम्– 'अयमहं पण्डित इति जानाति' 'इत्युवाच' इत्यादिस्थले सर्वत्र वाक्यार्थस्य कर्मता न सम्भवति– बाधितवाक्यार्थस्थले तदसंभवात् । न च बाधितवाक्यार्थस्थले भ्रमरूपैव तत्कर्मत्वप्रतीतिरितिवाच्यम्, विशेषदर्शिनापि भ्रान्तिज्ञेन तथाप्रयोगात् तस्य च वाक्यार्थज्ञानासंभवेन तदनुपपत्तेः ।

---

प्रयुक्त यत् 'त्व गच्छ' इतिवाक्य तद्घटकत्वपदेन वक्तृतात्पर्यसत्त्वेपि सम्बोध्यत्वभ्रम विना मैत्रबोध सर्वानुभवविरुद्ध एवेति सम्बोध्यतावच्छेदकार्थ उभे एव युष्मत्पदस्य शक्तिर्युक्ता तथा चात्र सम्बोध्यत्वाभावान्न त्वपदेन मैत्रबोधापत्ति, बुद्धिविषयतावच्छेदकरूपावच्छिन्ने शक्तौ तु सम्बोध्यत्वभ्रम विनाप्यत्र त्वपदेन मैत्रबोध स्यादेव– मैत्रस्यापि बुद्धिविषयतावच्छेदकरूपावच्छिन्नत्वादित्यर्थ । विपक्षे बाधकमाह–अन्यथेति, यदि बुद्धिविषयतावच्छेदकरूपावच्छिन्ने युष्मदस्मत्पदयोरपि शक्ति स्यात्तदा मैत्रबोधतात्पर्येण स्वरसत एव चैत्र 'अह करोमि' इतिप्रयोग कुर्यात् स्वात्मबोधतात्पर्येण च मैत्र 'त्व गच्छ' इतिप्रयोग कुर्याद् न चैतदिष्टमिति न युष्मदस्मत्पदयोर्बुद्धिविषयतावच्छेदकरूपावच्छिन्ने शक्तिरित्यर्थ । पूर्वत्र मैत्र उच्चारयितेति भ्रमे उच्चारयितृत्वभ्रम उत्तरत्र मैत्र सम्बोध्य इतिभ्रमे सम्बोध्यत्वभ्रमो विज्ञेय – वस्तुतश्चैत्रस्यैवोच्चारयितृत्वात् सम्बोध्यत्वाच्चेति ।

अवशिष्ट कञ्चिद्विशेषमाह– इदमित्यादिना । 'अयमह पण्डितः' इत्यादियुष्मदस्मदर्थघटितवाक्यार्थस्य यत् 'इतिजानाति' इत्यादिवाक्यान्तरस्थक्रियाया कर्मत्वमुक्त तत् सर्वत्र न सम्भवति - युष्मदस्मदर्थघटितवाक्यार्थस्य बाधितत्वस्थले तदसम्भवात्=कर्मत्वासम्भवाद् अबाधितस्यैव कर्मत्वादि सम्भवादिति तादृशबाधितवाक्यार्थस्थले तादृशवाक्याच्छाब्दबोधानुपपत्तिरित्यर्थ । मूर्खमुद्दिश्य यत्र 'अयमह पण्डित इति जानाति' इत्युच्यते 'त्व वास्तुतो मया दृष्ट इति देवदत्त उवाच' इत्यादि च यदुच्यते तत्र वाक्यार्थस्य बाधितत्व विज्ञेयम् । ननु बाधितार्थविषयापि भ्रमरूपा प्रतीतिर्भवत्येवेति बाधितवाक्यार्थस्थले भ्रमरूपया तत्कर्मत्वप्रतीत्या न वाक्यार्थबोधानुपपत्तिरित्याशङ्क्याह– न चेति । परिहारहेतुमाह– विशेषेति, उक्तरीत्या भ्रान्तस्य वाक्यार्थबोधसम्भवेपि विशेषदर्शिना='नाय पण्डित ' इत्याकारकपाण्डित्याभावविषयकविशेषज्ञानवतापि भ्रान्तिज्ञेन=मूर्खस्य या स्वात्मनि पाण्डित्यभ्रान्तिस्तादृशभ्रान्तिज्ञेन तथा='अयमह पण्डित इति जानाति' इत्याकारो मूर्खमुद्दिश्य प्रयोग क्रियते एव तत्र च तस्य=उक्तभ्रान्तिज्ञस्य वाक्यार्थविषयकबाधितत्वज्ञानाद् वाक्यार्थज्ञानासम्भवेन तस्य कर्मत्वानुपपत्तिस्तादृशवाक्यार्थबोधानुपपत्तिश्चेत्यर्थ ।

ननु यथा 'एकत्र द्वयम्' इतिरीत्या विशेषदर्शी 'अय लोहित वह्निं जानाति ' इतिप्रयुङ्क्ते तत्र वह्नेः शुक्लत्वाद् वह्नौ लोहितत्व नास्त्येवेति ज्ञानसत्त्वेपि जपापुष्पे लोहितत्वमस्तीति 'लोहित

न चाऽऽहार्यवाक्यार्थज्ञानादेव विनापि विशिष्टवाक्यार्थबुद्धिं विशेषणप्रकारक-
त्वविशेष्यविशेष्यकत्वाभ्यां विशिष्टज्ञानज्ञानादेव वा विशेषदर्शी तथा प्रयुङ्क्ते इति
वाच्यम्, एवमपि विशेषदर्शिनो भ्रान्तिज्ञपुरुषीयतयाविधवाक्याच्छाब्दबोधानुप-
पत्तेर्वज्रलेपत्वात्. तस्मात् तत्रेतिपदं न तद्वाक्यप्रतिपाद्यतावच्छेदकीभूततत्तद्धर्माव-
च्छिन्नपरमऽपि तु तत्तद्वाक्यजन्यज्ञानसमानाकारकपरं तादृशश्चेतिपदार्थोऽभेदसंब-

---

'जपापुष्प जानाति वह्निं च जानाति' इत्यभिप्रायेणैव 'लोहित वह्नि जानाति' इतिप्रयुज्यते तत्र
लोहितप्रकारकवह्निविशेष्यका या विशिष्टवाक्यार्थबुद्धिस्ता विनापि नाम वह्निलोहितयोर्विशेष्य
विशेषणभावेऽभिप्रायाभावेपि ज्ञाने एव विशेषणप्रकारकत्वम्=लोहितप्रकारकत्व विशेष्यविशेष्यक
त्वम्=वह्निविशेष्यकत्व च भवतीति विशेषणप्रकारकत्वविशेष्यविशेष्यकत्वाभ्यां विशिष्ट यद् लोहि
तप्रकारकवह्निविशेष्यकज्ञान तादृशविशिष्टज्ञानस्य ज्ञानात्=ज्ञाने एव लोहित प्रकारतया भासते न
तु वह्नावपीत्यादिज्ञानादेव किं वाऽऽहार्यवाक्यार्थज्ञानात्=वह्निर्नलोहित इत्याकारकबाधकालिकआ
नादेव नाम बाधितवाक्यार्थज्ञानादेव 'वह्निर्न लोहित' इत्याकारकविशेषदर्शी तथा='अय वह्नि
लोहित जानाति' इत्येवं प्रयुङ्क्ते तथा प्रकृतेपि 'नाय पण्डित' इत्याकारकविशेषदर्शी आहार्य-
वाक्यार्थज्ञानात्=पाण्डित्यलक्षणबाधितवाक्यार्थज्ञानादेव किं वा चैत्रमुद्दिश्य 'अयमह पण्डित
इति जानाति' इतिप्रयोगस्थले पाण्डित्यप्रकारकचैत्रविशेष्यका या विशिष्टवाक्यार्थबुद्धिस्ता विना-
.पि ज्ञाने एव यद् विशेषणप्रकारकत्वम्=पाण्डित्यप्रकारकत्व विशेष्यविशेष्यकत्वम्=चैत्रविशेष्यकत्व
ताभ्यां विशिष्ट यत् पाण्डित्यप्रकारकचैत्रविशेष्यकज्ञान तादृशविशिष्टज्ञानस्य ज्ञानात्=ज्ञाने एव पा-
ण्डित्य प्रकारतया भासते न तु चैत्रेपीत्यादिज्ञानादेव तथा= 'अयमह पण्डित इति जानाति'
इत्येव प्रयुङ्क्ते तत्र समन्वयेयत्याशङ्क्याह– न चेति । परिहारहेतुमाह– एवमपीति, एवम्=उक्त-
रीत्या विशेषदर्शिकृतप्रयोगसमर्थनेपि भ्रान्तिज्ञपुरुषीयतथाविधवाक्यात्=उक्तरीत्या विशेषदर्शिप्र-
युक्तात् 'अयमह पण्डित इति जानाति' इत्यादिवाक्याद् 'नाय पण्डित' इत्याकारकविशेषद
र्शिन शाब्दबोधस्तु नैवोपपद्यते– विशेषदर्शिदृष्ट्या तादृशवाक्यार्थस्य बाधितत्वेन वर्मलेपत्वात
प्रमादित्यर्थ । 'लोहित वह्नि जानाति' इत्यत्राप्युक्तरीत्या एतादृशप्रयोग एव समर्थित न तु
तादृशवाक्यार्थस्य कश्चित् कर्मत्वादिकमपि– बाधितत्वादित्यभिप्राय । नन्वेवं बाधितवाक्यार्थ
स्थले का गति ? इत्याशङ्क्य समाधत्ते– तस्मादिति, तत्र=बाधितवाक्यार्थस्थले इतिपद
तद्वाक्यप्रतिपाद्यतावच्छेदकीभूततत्तद्धर्मावच्छिन्नपरम्=तद्वाक्यप्रतिपाद्यताव च्छेदकीभूत यचैत्र वा-
दिक तादृशधर्मावच्छिन्नचैत्रादिपरं नाम, पाण्डित्यादिप्रकारकचैत्रादिविशेष्यकवाक्यार्थपरामर्शक
न भवति किं त्वऽबाधितवाक्यार्थस्थले तादृशवाक्येन यादृश पाण्डित्यादिप्रकारकचैत्रादिविशेष्य-
कज्ञान जायते तादृशज्ञानसमानाकारक यज्ज्ञान तत्परम्=तत्परामर्शक भवति नाम यादृश यथा-
र्थपण्डितस्य स्वात्मनि पाण्डित्यविषयक ज्ञान जायते तादृशमेव स्वात्मनि पाण्डित्यविषयक ज्ञान
मूर्खचैत्रस्याप्यस्तीति परामृश्यते तादृशश्चेतिपदार्थ =विदुष स्वात्मनि पाण्डित्यप्रकारकज्ञानस

न्वेन यथासंभवं धात्वर्थे धात्वर्थतावच्छेदकज्ञाने च विशेषणमित्येवोपगन्तव्यं तथा च सर्वत्रैव युष्मदस्मद्घटिताऽवान्तरवाक्यस्थले इतिपदं तत्परमेव, तादृशवाक्येन वा ' गवित्ययमाह ' इत्यादौ गवादिपदवत् स्वरूपमेवेतिशब्देन परामर्शार्थमुपस्थाप्यते न तु युष्मदस्मच्छब्दार्थघटितो वाक्यार्थ इति संबोध्योच्चारणकर्त्रोरेव युष्मदस्मदोः शक्तिरिति ।

---

दृशमितिपदेन परामृश्यमानं मूर्खचैत्रादेर्यत् स्वात्मनि पाण्डित्यप्रकारकं ज्ञानं तद् यथासंभवम् 'अयमहं पण्डित इति जानाति ' इत्यादौ ज्ञाधात्वर्थे ज्ञानेऽभेदसम्बन्धेन विशेषणं भवति, अत्र जानातीतिज्ञाधात्वर्थोऽपि ज्ञानमेव इतिपदेन परामृश्यमानमपि ज्ञानमेव तयोश्च ज्ञानयोरभेद एव– इतिपदेन परामृष्टोक्तज्ञानस्यैव जानातीतिपदेन प्रतिपादनात् तथा चात्र ' पण्डितसमवेतस्वात्मविषयकपण्डितत्वप्रकारकज्ञानसदृशज्ञानाश्रयो मूर्खचैत्रः ' इति शाब्दबोधः, ' बन्ध्यासुतो मया दृष्ट इति चैत्र उवाच ' इत्यादिबाधितवाक्यार्थस्थले चेतिपदं बन्ध्यासुतकर्मकदर्शनविशेष्यकैतद्वाक्यार्थपरामर्शकं न भवति किं त्वबन्ध्यासुतद्रष्टृपुरुषादृशमबन्ध्यासुतकर्मकदर्शनविशेष्यकं ज्ञानं जायते तादृशज्ञानसमानाकारं यच्चैत्रस्य बन्ध्यासुतकर्मकदर्शनविषयकं ज्ञानं तत्परामर्शकं तादृशश्चेतिपदार्थः=उक्तज्ञानसमानाकारकज्ञानमत्र धात्वर्थतावच्छेदकीभूतज्ञानेऽभेदसम्बन्धेन विशेषणं भवति यतोऽत्र ज्ञानानुकूलोक्तिरेव धात्वर्थस्तादृशधात्वर्थतावच्छेदकं च ज्ञानमेव इतिपदेन परामृश्यमानमपि ज्ञानमेव तथा चात्र ' अबन्ध्यासुतद्रष्टृज्ञानसदृशबन्ध्यासुतकर्मकदर्शनविषयकज्ञानानुकूलोक्तिव्यापाराश्रयश्चैत्रः ' इतिशाब्दबोधः । उपसंहरति– तथा चेति, बाधितवाक्यार्थस्थले इतिपदमुक्तज्ञानसमानज्ञानपरमऽबाधितवाक्यार्थस्थले च तादृशवाक्यार्थपरामर्शकमिति वैषम्यस्याऽयुक्तत्वात् सर्वत्रैव 'अयमहं पण्डित इति जानाति' 'त्वमयं पण्डित इतिजानासि' 'मया त्वयि हते इत्यादि देव्युवाच' इत्यादिस्थले यत्र युष्मदस्मत्पदघटितवाक्यमवान्तरवाक्यं भवति तत्र सर्वत्रैवेतिपदं तत्परम्=उक्तज्ञानसदृशज्ञानपरमेव स्वीकार्यं तादृशज्ञानं तु बाधितवाक्यार्थस्थलेऽप्यबाधितमेव बाधितवाक्यार्थस्थले तादृशज्ञानविषयस्यैव बाधितत्वस्वीकारात् । " मया त्वयि " इत्यत्र च 'एतद्वाक्यजन्यज्ञानसदृशमहिषासुरनिष्ठज्ञानानुकूलव्यापारवती देवी ' इत्येव शाब्दबोधः । ननूक्तरीत्येतिपदस्योक्तज्ञानसदृशज्ञानपरत्वेऽपि तादृशज्ञानस्यापि प्रदर्शितस्थलेषु वाक्यान्तरस्थक्रियाकर्मत्वं न संभवतीति प्रदर्शितानुपपत्तिस्तदवस्थैवेत्याशङ्क्य पक्षान्तरमाह– तादृशवाक्येन वेति, ' गौः ' इत्यस्य स्थाने केनचिद्तादृशमूर्खेण ' गो ' इत्युक्ते तदशुद्धिप्रदर्शनाय पार्श्वस्थविदुषा ' गवित्ययमाह ' इत्युक्ते यथा तादृशवाक्यस्थगोपदेन न गोपदार्थ उपस्थाप्यते किं तु गोपदमेवोच्चारितमिति प्रसिद्धं तथा प्रकृतेऽपि तादृशवाक्येन=बाधितार्थकवाक्येन स्वरूपमेव=स्वस्वरूपमेव ' अयमहं पण्डित ' इत्यादिवाक्यस्वरूपमेवेतिशब्दकरणकपरामर्शार्थमुपस्थाप्यते न तु युष्मदस्मदर्थघटितवाक्यार्थ – तस्य बाधितत्वादिति तत्रेतिपदं युष्मदस्मत्पदघटितवाक्यमात्रपरामर्शकं भवति इतिपदपरामृष्टतादृशवाक्यस्य तु वाक्यान्तरस्थक्रियाकर्मत्वं नानुपपन्नमिति पूर्वोक्तरीत्या स्वसंबोध्ये

'त्वं स्थूलः' 'अहं स्थूलः' 'त्वं स्वर्गं भोक्ष्यसे' 'अहं स्वर्गं भोक्ष्ये' इत्युभयत्रैव युष्मदस्मदोर्मुख्यत्वात् संबोध्योच्चारयितृशरीरतदात्मनोरेव युष्मदस्मदर्थत्वं बोध्यम् ॥

'सर्वे घटा रूपवन्तः' इत्यादौ सर्वपदादुद्देश्यतावच्छेदकीभूतघटत्वावच्छिन्नस्याऽशेषताप्रतीतिरशेषत्वं सर्वपदार्थः।

नन्वऽत्राशेषत्वं न विधेयशून्यावृत्तितदुद्देश्यतावच्छेदकवत्त्वम्– केवलान्वयिनो

युष्मत्पदस्योच्चारणकर्तरि चास्मत्पदस्य शक्तिरिति सिद्धम्, संबोध्यत्वमुच्चारणकर्तृत्वं च वाक्या-
न्तरस्थक्रियाकर्मत्वघटितं पूर्वमेवोक्तमित्यर्थः ।

वस्तुतस्तु 'अयमहं पण्डित इति जानाति' इत्यादिवाधितवाक्यार्थस्थले इतिपदेन परामृश्य-
मानस्योक्तज्ञानस्य वा वाक्यस्वरूपस्य वा कर्मत्वं न समवति येन जानातिक्रियाकर्तुरस्मत्पदार्थत्व-
स्याद् न च तस्योच्चारणकर्तृत्वमप्यस्ति तस्मात् तात्पर्यज्ञानादेरभीष्टस्य युष्मदस्मत्पदार्थत्वं ग्रहीतुं
शक्यते इत्यवधेयम् ।

त्वमिति– 'त्वं स्थूलः' 'अहं स्थूलः' इत्यत्र युष्मदस्मत्पदं मुख्यमेव न तु लाक्षणिकं
आत्मनि च स्थूलत्वं बाधितमित्यत्र संबोध्यशरीरस्यैव युष्मदर्थत्वमुच्चारयितृशरीरस्यैव चास्मदर्थत्वं
बोध्यम्–शरीरे स्थूलत्वादिसंभवात्, 'त्वं स्वर्गं भोक्ष्यसे' 'अहं स्वर्गं भोक्ष्ये' इत्यत्रापि युष्मद-
स्मत्पदं मुख्यमेव न तु लाक्षणिकं शरीरस्य च स्वर्गभोक्तृत्वं न संभवतीत्यत्र संबोध्यात्मन एव
युष्मदर्थत्वमुच्चारयित्रात्मन एव चास्मदर्थत्वं बोध्यमित्यर्थः ।

"आर्या गच्छाम वयं गच्छाम इत्यादिवाक्यघटकास्मत्पदार्थैर्नोच्चारितात् चैत्रमैत्रादिबोधस्या-
नुभवसिद्धतया मैत्रादेरुच्चारणकर्तृत्वाभावात्तादृशबोधानुपपत्तिरिति चेत् न तादृशस्थले चैत्रादिसमु-
दाये लक्षणास्वीकारात्" इति माधवभट्टाः ।

॥ इति युष्मदस्मत्पदे ॥

अथ

## ॥ सर्वपदम् ॥

सर्वपदशक्तिनिरूपणमारभते– सर्व इत्यादिना । 'सर्वे घटा रूपवन्तः' इत्यत्र घटमुद्दिश्य
रूपवत्त्वं विधीयते इत्युद्देश्यो घटः उद्देश्यतावच्छेदकं घटत्वं विधेयं च रूपवत्त्वम्, अत्रोद्देश्यता-
वच्छेदकं यद् घटत्वं तदवच्छिन्नस्य घटस्य सर्वपदसमभिव्याहारादशेषता प्रतीयते इत्यशेषत्वं सर्व-
पदार्थस्तथा च 'अशेषा घटा रूपवन्तः' इति वाक्यार्थबोधः 'रूपाभाववदवृत्तिघटत्ववन्तो
घटाः' इति यावत्, रूपशून्यः कोऽपि घटो नास्तीति पर्यवसितम् ।

सर्वपदार्थीभूताशेषत्वं निर्वक्तुमुपक्रमते– नन्वित्यादिना । अत्र='सर्वे घटा रूपवन्तः'
इत्यादिस्थले । विधेयेति– विधेयं यद् रूपवत्त्वं तच्छून्यो यत्राकाशः तदवृत्ति यत् तदुद्देश्यतावच्छेद-

यत्र विधेयता तत्र विधेयशून्यत्वस्याऽप्रसिद्धेः, यत्र वा विधेयशून्ये उद्देश्यतावच्छेदकीयसंबन्धविशेषेण वृत्तेरप्रसिद्धिः 'सर्वे घटा जातिमन्तः' इत्यादौ तत्र गत्यन्तराभावापत्तेः ।

पदान्तरादुपस्थिते उद्देश्यतावच्छेदकघटत्वादिविशिष्टे सर्वपदोपस्थाप्यविधेयव्याप्तिविशिष्टघटत्वाद्यवच्छिन्नस्य कथंचिदन्वयसंभवेऽप्यनुभवविरोधाच्च,

---

कम्=विधेयोद्देश्यतावच्छेदकं घटत्वादिकं तद्वत्त्वमेवाशेषत्वं तथा च प्रकृते घटत्वं रूपवत्त्वरहिताकाशादिवृत्ति न भवतीति तादृशघटत्वादिरूपोद्देश्यतावच्छेदकवत्त्वमेव घटानामशेषत्वमिति प्राप्तं तदपि न युक्तमित्यर्थः, उक्ते हेतुमाह– केवलेति, 'अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम्' केवलान्वयिनः प्रमेयत्वादेर्यत्र 'सर्वे घटाः प्रमेयाः' इत्यादिस्थले विधेयत्वं भवति तत्र विधेयं यत् प्रमेयत्वं तच्छून्यत्वं क्वचिदपि प्रसिद्धं नास्ति– सर्वस्यैव प्रमेयत्वाद् विशिष्टबुद्धौ च विशेषणज्ञानं कारणमिति विशेषणीभूतप्रमेयत्वशून्यस्य ज्ञानाभावे प्रमेयत्वशून्यावृत्त्युद्देश्यतावच्छेदकत्वस्वरूपाशेषत्वस्यापि ज्ञानं न संभवतीति नायं पक्षो युक्त इत्यर्थः । उक्ताशेषत्वपक्षे दोषान्तरमाह– यत्र वेति, 'सर्वे घटा जातिमन्तः' इत्यत्र घटत्वावच्छिन्नमुद्दिश्य घटत्वादिजातिमत्त्वं विधीयते, उक्ताशेषत्वलक्षणे चोद्देश्यतावच्छेदकसंबन्धेनैवोद्देश्यतावच्छेदकवत्त्वमिष्टं न तु कालिकादिसंबन्धेनापि प्रकृते चोद्देश्यतावच्छेदकसंबन्धः समवाय एव घटत्वादेः समवायेनैव घटादौ वर्तमानत्वात् 'सर्वे घटा जातिमन्तः' इत्यत्र विधेयं यज्जातिमत्त्वं तच्छून्यं जात्यादिकमेव भवति विधेयशून्ये तादृशजात्यादौ चोद्देश्यतावच्छेदकीभूतेन समवायसंबन्धेन कस्यापि पदार्थस्य वृत्तिरेव नास्तीति तत्र='सर्वे घटा जातिमन्तः' इत्यादावुक्ताशेषत्वभानस्य गतिरेव नास्तीति नाय पक्षो युक्त इत्यर्थः । उद्देश्यतावच्छेदके यद् विधेयशून्यावृत्तित्वं तद् उद्देश्यतावच्छेदकसंबन्धेन विधेयशून्यवृत्तित्वाभाव एव विधेयशून्यवृत्तित्वाभावप्रतियोगित्वं वा तत्रोद्देश्यतावच्छेदकसंबन्धेन विधेयशून्यजात्यादौ वृत्तित्वस्याऽप्रसिद्धौ तादृशवृत्तित्वाभावादिबोधोऽपि न संभवति विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वादितिभावः ।

दोषान्तरमाह– पदान्तरादिति, 'सर्वे घटाः' इत्यत्र घटपदस्यापि घटबोधकत्वात् सर्वपदार्थस्याप्यऽभेदेन घटे एवान्वयस्वीकारेण सर्वपदस्यापि घटबोधकत्वापत्त्या 'घटो घटः' इत्यत्रेव प्रथम शाब्दबोधानुपपत्तिरेव दोषः, एतादृशदोषस्य विशेषणांशेऽधिकावगाहिशाब्दबोधस्वीकारेण यथा 'नीलघटो घटः' इत्यत्र घटपदेन घटस्य घटत्वेन रूपेण नीलघट इतिविशेषणपदाच्च नीलघटत्वेन नाम नीलत्वसमानाधिकरणघटत्वेनोपस्थितौ जातायां घटे नीलघटस्याभेदेनान्वयस्तद्बोधश्च जायते तथा प्रकृते घटपदाद् घटत्वेन रूपेण सर्वपदाच्च सर्वपदोपस्थाप्यविधेयव्याप्तिविशिष्टघटत्वेन रूपेण घटोपस्थितौ जातायां पदान्तरात्=घटपदादुपस्थिते उद्देश्यतावच्छेदकं यद् घटत्वादिकं तद्विशिष्टे घटादौ सर्वपदोपस्थाप्यविधेयव्याप्तिविशिष्टघटत्वाद्यवच्छिन्नस्याभेदेन कथंचिदन्वयसंभवेन निरासे कृतेप्यऽनुभवविरोधस्त्वऽस्त्येव– 'नीलघटो घटः'

घटत्वत्वाद्यनुपस्थितिदशायामपि 'सर्वे घटाः' इत्यादिवाक्यादन्वयबोधस्यानुभविकतया व्याप्यत्वेनैव घटत्वादेः सर्वपदार्थत्वस्य स्वीकरणीयतया तज्जन्यव्याप्तिबोधस्य निर्धर्मितावच्छेदकतया विपरीतज्ञानाऽविरोधित्वेनाऽकिंचित्करतापाताच्च।

नापि तत्तदुद्देश्यतावच्छेदकव्यापकतत्तद्विधेयवत्त्वम्– तदवच्छिन्ने विधेयानन्वयप्रसङ्गात्।

---

इत्यत्र विशेष्यांशेऽधिकावगाहिशाब्दबोधस्यानुभवसिद्धत्वेपि 'सर्वे घटाः' इत्यादावनुभवसिद्धत्वाभावादित्यर्थः।

दोषान्तरमाह– घटत्व वेति, 'सर्वे घटा रूपवन्तः' इत्यत्रोक्ताशेषत्वपरिष्कारेण रूपशून्यावृत्तित्वाद् घटत्वे रूपव्याप्यत्वं प्राप्तं तदेव रूपव्याप्यत्वं हि सर्वपदार्थः इति लब्धं घटत्वं च न स्वरूपेण सर्वपदार्थः सम्भवति किं तु व्याप्यत्वेन=रूपादिलक्षणविधेयव्याप्यत्वेनैव रूपेण. तादृशविधेयव्याप्यत्वस्य च घटत्वे एवाभेदेनान्वयं कर्तव्यस्तत्र घटत्वस्य घटत्वत्वाद्यनुपस्थितिदशायाम्=घटत्वत्वेनानुपस्थितिदशायामपि नाम स्वरूपेणोपस्थितिदशायामपि 'सर्वे घटा रूपवन्तः' इत्यादिवाक्यात् 'रूपव्याप्यघटत्ववन्तो घटाः' इत्याद्यन्वयबोधः=शाब्दबोधः आनुभविकः=इष्ट एव स च न सम्भवति 'पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रत्यन्वयितावच्छेदकरूपेणोपस्थितिः कारणम्' इतिनियमाद् अन्वयितावच्छेदकरूपेण घटत्वत्वेन घटत्वोपस्थितेरभावेन घटत्वे विधेयव्याप्यत्वस्यान्वयः सम्भवति. न चात्र घटत्वस्य घटत्वत्वेन रूपेणोपस्थितिरस्तीति घटत्वे विधेयव्याप्यत्वान्वयाऽसम्भवः प्रथमः दोषः, किं च 'सर्वे घटा रूपवन्तः' इत्यादिवाक्यजन्यबोधस्य 'घटत्वं रूपाभाववद्वृत्ति' किं वा 'घटत्वं रूपव्याप्यं न' इत्याकारकं यद् विपरीतज्ञानं तद्विरोधः=तत्प्रतिबन्ध एव फलं प्रतिबध्यप्रतिबन्धकभावश्चावच्छेदकनिष्ठप्रत्यासत्त्या भवति घटत्वत्वानुपस्थितिदशायां च 'सर्वे घटाः' इत्यादिवाक्यजन्यो व्याप्तिबोधो निर्धर्मितावच्छेदकक एव जायते निर्धर्मितावच्छेदककबोधश्च विपरीतज्ञानविरोधी न भवतीति 'सर्वे घटाः' इत्यादिवाक्यजन्यबोधोऽकिंचित्करः=निष्फल एवोक्तपरिष्कारपक्षे स्यादित्यर्थः। धर्मितावच्छेदकमन्तरा घटत्वस्य बोध्यत्वे घटत्वे एव सर्वपदार्थविधेयव्याप्तेरन्वयस्वीकारादिति।

ननु तत्तद् यदुद्देश्यतावच्छेदकं घटत्वादिकं तद्व्यापकं यत् तत्तद् विधेयं रूपादिकं रूपवत्त्वादिकं वा तादृशविधेयवत्त्वमेवाऽशेषत्वं तदेव सर्वपदार्थः. 'सर्वे घटा रूपवन्तः' इत्यत्र रूपं घटत्वव्यापकमस्तीति उद्देश्यतावच्छेदकीभूतघटत्वव्यापकरूपवत्त्वं घटेषु लभ्यते. अत्र च सर्वपदार्थीभूताशेषत्वं तादृशविधेयवत्त्वमेव तस्य च घटेनैवाभेदान्वयो घटस्य च घटत्वेनान्वयितावच्छेदकरूपेणोपस्थितिरस्त्येवेति न शाब्दबोधस्य प्रदर्शितनिष्फलत्वापत्तिदोषः, घटत्वेन चोक्तसर्वपदार्थस्यान्वयाभावान्न घटत्वस्य घटत्वत्वेन रूपेणोपस्थित्यपेक्षा, 'सर्वं प्रमेयम्' इत्यादिकेवलान्वयिविधेयस्थलेऽप्युद्देश्यतावच्छेदकव्यापकीभूतं यद् विधेयं प्रमेयत्वं तद्वत्त्वं सम्भवत्येवेति नोक्तदोषापत्तिः 'सर्वे घटा जातिमन्तः' इत्यत्राप्युक्तदोषो नास्ति– विधेयशून्यत्वस्य लाभापेक्षाभावादित्याश-

नापि विधेयान्वयिव्यापकतापर्यन्तमेव सर्वपदार्थः– नामार्थद्वयोर्भेदान्वयबोधस्याव्युत्पन्नत्वात् ।

नाप्यऽभेदेन रूपवदाद्यात्मकविधेयान्वयी घटत्वादिव्यापक एव तदर्थः– तथा सति 'सर्वे वेदाः प्रमाणम्' इत्यादौ सर्वपदस्य प्रमाणपदेनैव सामानाधिकरण्यात् तत्समानलिङ्गवचनकत्वापत्तिः ।

---

इत्याह– नापीति । परिहारहेतुमाह– तदवच्छिन्नेति, उक्तरीत्या यद्युद्देश्यतावच्छेदकव्यापकविधेयवत्त्वं सर्वपदार्थस्तदा सर्वपदेनैव घटे रूपवत्त्वं लब्धमिति तदवच्छिन्ने=रूपवत्त्वावच्छिन्ने नाम रूपवत्त्वविशिष्टे घटे विधेयस्य=रूपवत्त्वस्यान्वयो न सम्भवतीति विधेयानन्वयप्रसङ्गाद् ' रूपवन्त ' इतिपदं व्यर्थमेव स्यात् तदवच्छिन्ने तदन्वयानङ्गीकारादित्यर्थः ।

ननु नोद्देश्यतावच्छेदकव्यापकविधेयवत्त्वरूपमशेषत्वं सर्वपदार्थो येनोक्तदोषः स्यात् किं तु विधेयान्वयि=विधेयविशेषणीभूतं यद् व्यापकत्वम्=उद्देश्यतावच्छेदकव्यापकत्वं तदेवाशेषत्वं तस्य च विधेये एवान्वय इति न सर्वपदेन रूपवत्त्वं लभ्यते येन 'रूपवन्त ' इतिपदस्य वैयर्थ्यं स्यादित्याशङ्क्याह– नापीति । परिहारहेतुमाह– नामार्थेति, एवं ह्युद्देश्यतावच्छेदकव्यापकत्वस्य सर्वपदार्थस्य विधेये रूपे रूपवत्त्वे वाऽऽश्रयतासम्बन्धेनान्वयः स्यात्– उद्देश्यतावच्छेदकव्यापकत्वाश्रयो रूपमिति बोधसम्भवाद् आश्रयतासम्बन्धश्च भेदसम्बन्ध एव नामार्थस्य नामार्थे च भेदसम्बन्धेनान्वयोऽव्युत्पन्न एवेति नाश्रयतासम्बन्धेन सर्वपदार्थस्य रूपपदार्थेऽन्वयः सम्भवतीति दोष इत्यर्थः ।

ननूक्तदोषपरिहाराय 'रूपवन्त ' इतिपदेन रूपं रूपवद्वा विधेयमस्तीति रूपवदाद्यात्मकं यद् विधेयं तादृशविधेयेऽभेदेन=अभेदसम्बन्धेनान्वयी यो घटत्वादिव्यापकः स एव तदर्थः=सर्वपदार्थ इत्युच्यते घटत्वव्यापकस्य सर्वपदार्थस्य च रूपे रूपवति वाऽभेदेनैवान्वयः सम्भवतीति न भेदान्वयापत्तिदोषः, अत्र 'घटत्वव्यापकरूपवन्तो घटाः ' किं वा 'घटत्वव्यापकरूपवदभिन्ना घटाः' इति शाब्दबोध इत्याशङ्क्याह– नापीति । परिहारहेतुमाह– तथा सतीति, तथासति=सर्वपदार्थस्याभेदेन विधेयेऽन्वये स्वीकृते सति "सर्वे वेदाः प्रमाणम्" इत्यत्रापि सर्वपदार्थस्योद्देश्यतावच्छेदकव्यापकस्याभेदेन विधेये प्रामाण्ये एवान्वयः स्यात् 'वेदत्वव्यापकप्रामाण्यवन्तो वेदाः' इति. तथा च सर्वपदस्य प्रमाणपदेनैव सामानाधिकरण्यं स्यात् तेन च सर्वपदस्य प्रमाणपदसमानलिङ्गवचनकत्वं स्यात् तेन हि 'सर्वं वेदाः प्रमाणम्' इत्येव प्रयोगः स्यात् 'सर्वे वेदाः प्रमाणम्' इतिप्रयोगो न स्याद् न चैतदिष्टमित्यर्थः ।

उक्तं च—

"विशेष्यस्यैव यल्लिङ्गं विभक्तिवचने च ये ।
तानि सर्वाणि योज्यानि विशेषणपदेष्वपि ॥" इति ।

'सर्वे घटा वर्तन्ते' इत्यादौ क्रियारूपविधेये व्यापकत्वस्याऽभेदान्वये सर्वप-
दस्य नपुंसकत्वापत्तेः, व्यापकताया भेदान्वयोपगमे नामार्थधात्वर्थयोर्भेदान्वय-
विरहनियमभङ्गापत्तेः ।

यत्त्वऽशेषत्वं न सर्वपदार्थः— उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयोपगमा-
देव तल्लाभोपपत्तेः, किं त्वनेकत्वमेव. अनेकत्वं चोद्देश्यतावच्छेदकसमानाधिकर-
णभेदप्रतियोगित्वम्, अत एव 'सर्वं गगनं शब्दवत्' इत्यादयो न प्रयोगाः ।
एवं च 'सर्वे घटाः' इत्यादौ 'घटनिष्ठान्योन्याभावप्रतियोग्यऽभिन्ना घटाः' इत्य-
यमर्थः प्रतीयते ।

---

दोषान्तरं प्रदर्शयति— सर्वे इति, 'सर्वे घटा वर्तन्ते' इत्यत्र घटत्वावच्छिन्नमुद्दिश्य वर्तनक्रिया
विधीयते वर्तमानत्वस्य विशेषणेऽपि प्राधान्याद् वर्तनक्रियाया एव विधेयत्वं स्यात् तादृशक्रिया-
रूपे विधेये सर्वपदार्थस्योक्तव्यापकस्याभेदान्वये क्रियाविशेषणतापत्त्या "क्रियाविशेषणानामेकत्वं
नपुंसकत्वं च" इत्यनुशासनात् सर्वपदस्यात्र नपुंसकत्वं स्यात्, पूर्वोक्तरीत्या यद्युद्देश्यतावच्छेदक-
व्यापकत्वं सर्वपदार्थस्तदा तस्य क्रियारूपविधेये आश्रयतासम्बन्धेन भेदान्वय एव स्यात् 'घटत्व-
व्यापकताश्रयवर्तनक्रियाविशिष्टा घटा' इति, नामार्थधात्वर्थयोरपि साक्षाद् भेदेनान्वयोऽव्युत्पन्न
एवेति भेदान्वयविरहनियमस्य भङ्गः स्यादित्यर्थः ।

परिहाराय मतान्तरमुपस्थापयति— यत्त्विति । 'सर्वे घटा रूपवन्त' इत्यादावऽशेषघटेषु
रूपप्रतिपादनार्थमशेषत्वस्य सर्वपदार्थत्वमुच्यते तत्राशेषघटेषु रूपप्रतीतिरुद्देश्यतावच्छेदकाव-
च्छेदेन विधेयान्वयस्वीकारादेव लभ्यते अत्रोद्देश्यतावच्छेदकं घटत्वं तदवच्छेदेनैव रूपान्वय
स्वीकारे सकलघटेषु रूपप्रतिपत्तिर्जायतेति नाऽशेषत्वं सर्वपदार्थो येनोक्तदोषाणामापत्ति
स्यात् किं त्वनेकत्वमेव सर्वपदार्थ इत्यर्थः । अनेकत्वं परिष्करोति— अनेकत्वं चेति, उद्देश्यताव-
च्छेदकं यद् घटत्वादिकं तत्समानाधिकरणो यो भेदस्तादृशभेदप्रतियोगित्वमेवानेकत्वम्, एतादृशा-
नेकत्वस्य सर्वपदार्थत्वे 'सर्वे घटा' इत्यस्य शाब्दबोधस्वरूपमाह— एवं चेति, घटनिष्ठो योऽन्यो-
न्याभावः=तद्व्यक्तित्वावच्छिन्नप्रतियोगिताको भेदः नाम घटव्यक्त्यन्तरप्रतियोगिको भेदस्तादृश-
भेदप्रतियोगित्वं चाऽनायासेन सकलघटेषु सम्भवत्येवेति तादृशभेदप्रतियोग्यऽभिन्ना घटा इत्यय-
मर्थः 'सर्वे घटा' इत्यत्र प्रतीयते । अनेकत्वस्य सर्वपदार्थत्वस्वीकारस्य फलमाह— अत एवेति,
यद्यशेषत्वं सर्वपदार्थः स्यात्तदाऽशेषगगने शब्दाभिप्रायेण 'सर्वं गगनं शब्दवत्' इति प्रयोगः
स्यादेव न चैवं प्रयोगो भवति, उक्तरूपानेकत्वस्य सर्वपदार्थत्वे तु, गगनव्यक्तेरेकत्वाद् गगने
गगनभेदो न सम्भवतीति न गगने गगनप्रतियोगिकभेदप्रतियोगित्वमिति 'सर्वं गगनम्' इत्यादि
प्रयोगापत्तिर्नास्तीत्यर्थः । अत्रोद्देश्यतावच्छेदकसमानाधिकरणभेदपदेन तद्व्यक्तित्वावच्छिन्नप्रतियो-
गिताक एव भेदो ग्राह्यः अन्यथा घटादौ यो पटादिभेदस्तत्प्रतियोगित्वं पटादावेवेति घटत्वावच्छि-
न्ने तादृशभेदप्रतियोगित्वरूपसर्वपदार्थस्यान्वयो न स्यादिति ।

न चैवं घटत्वादिसामानाधिकरण्यमात्रेण विधेयान्वयतात्पर्येण 'सर्वे घटा नीलाः' इत्यादिप्रयोगापत्तिः— सर्वपदार्थविशेषिते उद्देश्यतावच्छेदकावच्छेदेनैव विधेयान्वय इतिनियमात्। 'सर्वं प्रमेयम्' इत्यादौ प्रमेयत्वादिविधेयके उद्देश्यवाचकवस्त्वादिपदमध्याहृत्यैव प्रतीतिः, अन्यथोद्देश्यतावच्छेदकीभूतव्याप्यधर्मानुपस्थित्या तद्व्यापकत्वार्थकत्वेऽप्यनुपपत्तिरिति।

तदपि न युज्यते— गगनादावपि द्वित्वाद्यवच्छिन्नतद्भेदसत्त्वेन सर्वपदस्याऽनेकार्थत्वमुपगम्यापि 'सर्वं गगनम्' इत्यादिप्रयोगस्य दुर्वारत्वात्। तत्तदुद्देश्यता-

---

ननु यद्युद्देश्यतावच्छेदकसमानाधिकरणभेदप्रतियोगित्वमेव सर्वपदार्थस्तदोद्देश्यतावच्छेदकं यद् घटत्वादि तत्सामानाधिकरण्येन नाम कतिपयघटेषु नीलादिलक्षणविधेयस्यान्वयतात्पर्येणापि 'सर्वे घटा नीलाः' इत्येव प्रयोगः स्यादेव— घटत्वसमानाधिकरणो यस्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताको भेदस्तादृशभेदप्रतियोगित्वस्य कतिपयघटेष्वपि सत्त्वादित्याशङ्क्याह— न चैवमिति। परिहारहेतुमाह— सर्वपदार्थेति, यत्रोद्देश्यं सर्वपदार्थविशेषितं भवति तादृशस्थले उद्देश्यतावच्छेदकावच्छेदेनैव विधेयस्यान्वयो भवति नतूद्देश्यतावच्छेदकसामानाधिकरण्येन तथा च यावद्घटत्वावच्छेदेन नीलत्वस्याभावात् 'सर्वे घटा नीलाः' इतिप्रयोगापत्तिर्नास्तीत्यर्थः। ननु यत्रोद्देश्यवाचकपदमेव न स्याद् यथा 'सर्वं प्रमेयम्' इत्यादौ तत्रोद्देश्यवाचकपदाभावेनोद्देश्यतावच्छेदकानुपस्थित्या उद्देश्यतावच्छेदकसमानाधिकरणभेदप्रतियोगित्वस्य सर्वपदार्थस्य कथं प्रतीतिः स्यादित्याशङ्क्याह— सर्वमिति, 'सर्वं प्रमेयम्' इत्यादिस्थले उद्देश्यवाचकस्य वस्त्वादिपदस्याऽध्याहारः कर्तव्यस्तादृशाध्याहृतवस्त्वादिपदेनोद्देश्यतावच्छेदकधर्मस्य वस्तुत्वादेरुपस्थितिः सम्भवत्येवेति तादृशोद्देश्यतावच्छेदकसमानाधिकरणभेदप्रतियोगित्वरूपसर्वपदार्थस्य न प्रतीत्यनुपपत्तिरित्यर्थः। तादृशस्थले उद्देश्यवाचकपदाध्याहारस्याऽनङ्गीकारे बाधकमाह— अन्यथेति, सर्वपदस्य पूर्वोक्तरीत्या व्यापकत्वार्थकत्वपक्षेऽपि 'सर्वं प्रमेयम्' इत्यादावुद्देश्यवाचकवस्त्वादिपदाध्याहार आवश्यक एव अन्यथा व्यापकत्वं व्याप्यनिरूपितमेव भवतीत्युद्देश्यतावच्छेदकीभूतो यो व्याप्यधर्मः उद्देश्यवाचकपदाभावेन तदनुपस्थित्या विधेये तादृशव्याप्यधर्मनिरूपितव्यापकत्वस्यापि सर्वपदार्थस्य भानं न स्यादित्यर्थः। तद्व्यापकत्वार्थकत्वेऽपि=सर्वपदस्य व्याप्यधर्मनिरूपितव्यापकत्वार्थकत्वेऽप्यनुपपत्तिरेव स्यादित्यन्वयः।

यत्त्वित्यादिना प्रतिपादितमनेकत्वस्य सर्वपदार्थत्वं परिहरति— तदपि नेति, उद्देश्यतावच्छेदकसमानाधिकरणभेदप्रतियोगित्वरूपानेकत्वस्यापि सर्वपदार्थत्वे 'सर्वं गगनं शब्दवत्' इतिप्रयोगः स्यादेव— गगने तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदस्यासम्भवेऽपि द्वित्वाद्यवच्छिन्नप्रतियोगिताकस्य घटगगनोभयभेदस्य सम्भवेन तादृशभेदप्रतियोगित्वस्य गगनेऽपि सत्त्वात्। सर्वपदार्थान्तःप्रविष्टोद्देश्यतावच्छेदकसमानाधिकरणभेदपदेन उद्देश्यतावच्छेदकसमानाधिकरणद्वित्वाद्यवच्छिन्नप्रतियोगिताकभेदस्यापि ग्रहीतुं शक्यत्वादित्यर्थः। नन्वुद्देश्यतावच्छेदकसमानाधिकरणभेदप्रतियोगि-

वच्छेदकसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्य तत्तदुद्देश्यतावच्छेदके सर्वत्र बाधितत्वेन तत्प्रतीतेर्दुरुपगमत्वात् ।

सामान्यतः प्रतियोगिवृत्त्यन्यत्वस्य वृत्तिमदऽवृत्तित्वात् । स्वप्रतियोगिवृत्त्यो

---

त्वमनेकत्वमिति न वक्ष्यामो येन 'सर्वं गगनम्' इत्यादिप्रयोग उक्तरीत्या स्यात् किं तूद्देश्यतावच्छेदकसमानाधिकरणभेदप्रतियोगितावच्छेदकं यदुद्देश्यतावच्छेदकं तादृशोद्देश्यतावच्छेदकसमानाधिकरणभेदप्रतियोगितावच्छेदकानेकत्वं तदेव सर्वपदार्थः अर्थाद् यत् प्रतियोगितावच्छेदकं स्यात् तदेवोद्देश्यतावच्छेदकमपि स्यादित्युद्देश्यतावच्छेदकप्रतियोगितावच्छेदकयोरैक्यमिष्टमस्तीति वक्ष्यामस्तथा च गगने यो द्वित्वावच्छिन्नप्रतियोगिताको घटगगनोभयभेदस्तत्प्रतियोगितावच्छेदकं तु द्वित्वमेवास्ति न तु गगनत्वम् 'सर्वं गगनम्' इत्यत्रोद्देश्यतावच्छेदकं च केवलं गगनत्वमेव न तु द्वित्वमित्युद्देश्यतावच्छेदकप्रतियोगितावच्छेदकयोरैक्यासम्भवादत्र भेदपदेन द्वित्वावच्छिन्नप्रतियोगिताकभेदो न ग्रहीतुं शक्यते येन 'सर्वं गगनम्' इत्यादिप्रयोगापत्तिः स्यादित्याशङ्क्याह— तत्तदुद्देश्यतावच्छेदकेति, तत्तदुद्देश्यतावच्छेदके तदुद्देश्यतावच्छेदकसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वं सर्वत्र बाधितमेवाऽसम्भवादिति तत्प्रतीतिरेव न सम्भवतीत्यन्वयः । उद्देश्यतावच्छेदकप्रतियोगितावच्छेदकयोरैक्यं यत् तदेव तत्र सम्भवतीतिभावः । तथा च 'सर्वे घटा रूपवन्तः' इत्यत्रोद्देश्यतावच्छेदकं तु घटत्वमेव भेदप्रतियोगितावच्छेदकं च तद्व्यक्तित्वमेव न तु घटत्वं घटत्वावच्छिन्नप्रतियोगिताकभेदस्य घटे बाधादिति प्रतियोगितावच्छेदकोद्देश्यतावच्छेदकयोरैक्याभावादुक्तसर्वपदार्थीभूतानेकत्वस्य सर्वपदेन क्वचिदपि प्रतीतिर्न सम्भवतीत्यर्थः ।

ननु नोक्तरीत्यापि वक्ष्यामो येन प्रदर्शितासम्भवदोषः स्यात् किं तूद्देश्यतावच्छेदकसमानाधिकरणप्रतियोगिवृत्तिभेदान्यभेदप्रतियोगित्वमनेकत्वं सर्वपदार्थः अर्थादुद्देश्यतावच्छेदकसमानाधिकरणो यः प्रतियोगिवृत्तिभेदान्यो भेदस्तादृशभेदप्रतियोगित्वमनेकत्वम्, नामोद्देश्यतावच्छेदकसमानाधिकरणभेदपदेन प्रतियोग्यऽवृत्तिर्भेदो ग्राह्य इति वक्ष्यामस्तथा च 'सर्वं गगनम्' इतिप्रयोगापत्तिप्रदर्शनाय यो द्वित्वावच्छिन्नप्रतियोगिताको भेदो गृहीतः स तु प्रतियोगिनि गगने वर्तत एव गगनस्यापि च तादृशभेदप्रतियोगित्वादिति द्वित्वावच्छिन्नप्रतियोगिताको भेदो भेदपदेन न ग्राह्यः किंतु तदन्यस्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताक एव भेदो ग्राह्यस्तादृशभेदप्रतियोगित्वं तु गगने नास्त्येव गगनव्यक्तेरेकत्वादिति 'सर्वं गगनम्' इत्यादिप्रयोगापत्तिर्नास्ति, घटे तु तद्व्यक्तित्वावच्छिन्नप्रतियोगिताको भेदः सम्भवति स च भेदः प्रतियोगिवृत्तिरपि न भवति—अन्यघटव्यक्तिभेदस्यान्यघटव्यक्तावेव सत्त्वादिति तादृशभेदप्रतियोगित्वरूपानेकत्वस्य घटेषु सत्त्वात् 'सर्वे घटा रूपवन्तः' इत्यादिप्रयोगस्यानुपपत्तिरपि नास्तीत्याशङ्क्याह— सामान्यत इति, यदि भेदे सामान्यत एव प्रतियोगिवृत्त्यन्यत्वम्=प्रतियोग्यऽवृत्तित्वमुच्यते तदा तस्य सम्भव एव नास्ति—वृत्तिमदऽवृत्तित्वात्=ये पदार्थाः क्वचिद् वर्तन्ते तेषु वृत्तिमत्पदार्थेषु प्रतियोग्यऽवृत्तित्वस्याऽवृत्तित्वात्=असम्भवादेव यत्र ते वर्तन्ते तस्यापि स्वाभावप्रतियोगित्वादिति 'सर्वेषु घटेषु' इत्यत्र

ये ये तादृशभेदास्तद्भेदकूटस्य च दुरवगमतया तद्विशेषणेन द्वित्वाद्यवच्छिन्नभेदव्यावृत्तेरपि हेयत्वात् ।

अस्तु वा यथाकथंचित् तद्व्यावृत्तिः, तथाप्यनेकत्वमात्रस्य सर्वपदार्थत्वे-

घटस्यापि स्वाभावप्रतियोगित्वात् तद्वृत्तितद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदस्यापि प्रतियोगिवृत्तित्वमेव स्यान्न तु प्रतियोग्यवृत्तित्वमित्यर्थः । ननु ग्राह्यभेदे न सामान्यतः प्रतियोगिवृत्त्यन्यत्वमनुपयते येन पुनरव्यसम्भवः स्यात् किं तु स्वप्रतियोगिवृत्त्यन्यत्वमेव तथा च द्वित्वावच्छिन्नप्रतियोगिताकभेदस्तु स्वप्रतियोगिवृत्तिरेव भवतीति न तादृशभेदमादाय 'सर्वं गगनम्' इतिप्रयोगापत्तिः, तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदस्तु स्वप्रतियोगिवृत्तिर्न भवति- तन्नीलघटव्यक्तिभेदस्य तन्नीलघटव्यक्तावसम्भवादिति- तादृशभेदप्रतियोगित्वरूपानेकत्वस्य घटेषु सत्त्वात् 'सर्वे घटाः' इतिप्रयोगस्यानुपपत्तिरपि नास्तीत्याशङ्क्याह- स्वप्रतियोगीति, विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वनियमात् स्वप्रतियोगिवृत्तिभेदान्यभेदग्रहणे स्वप्रतियोगिवृत्तयो ये ये तादृशभेदाः=द्वित्वावच्छिन्नप्रतियोगिताकभेदास्तेषां सर्वेषामेव ज्ञानापेक्षा आसां तादृशभेदानां कूटः=समुदायश्च दुरवगम एव- अनन्तत्वादिति तद्विशेषणेन=स्वप्रतियोगिवृत्त्यन्यत्वविशेषणेन द्वित्वावच्छिन्नप्रतियोगिताकभेदव्यावृत्तिरपि नैव युक्ता- अत्र पक्षे स्वप्रतियोगिवृत्त्यनन्तद्वित्वावच्छिन्नभेदज्ञानापेक्षापत्त्या गौरवात् तथा च द्वित्वावच्छिन्नप्रतियोगिताकभेदव्यावृत्तेरुक्तरीत्याऽसम्भवात्तादृशभेदमादाय 'सर्वं गगनम्' इतिप्रयोगः स्यादेवेत्यर्थः ।

केनचित्प्रकारान्तरेण द्वित्वावच्छिन्नप्रतियोगिताकभेदव्यावृत्तिमभ्युपगम्याह- अस्तु वेति । तद्व्यावृत्तिः=द्वित्वावच्छिन्नप्रतियोगिताकभेदव्यावृत्तिः । यथा,कथंचिदिति- तथा हि स्वसामानाधिकरण्यस्वप्रतियोगितासामानाधिकरण्यैतदुभयसम्बन्धेन भेदविशिष्टो यो भेदस्तादृशभेदान्यभेदप्रतियोगित्वमनेकत्वं सर्वपदार्थः, अत्र स्वपदाभ्यां भेदो ग्राह्यः, उक्तोभयसम्बन्धेन भेदविशिष्टः=स्वविशिष्टो भेदो द्वित्वावच्छिन्नप्रतियोगिताकभेद एव भवति गगननिष्ठे घटगगनोभयभेदे स्वसामानाधिकरण्यमप्यस्ति गगने तादृशभेदप्रतियोगितायाः सत्त्वात् स्वप्रतियोगितासामानाधिकरण्यमप्यस्तीत्येतादृशोभयसम्बन्धेन भेदविशिष्टो भेदो द्वित्वावच्छिन्नप्रतियोगिताकभेद एव भवति स चात्र ग्राह्यभेदबोधकभेदपदेन न ग्राह्यो येन तादृशद्वित्वावच्छिन्नप्रतियोगिताकभेदमादाय 'सर्वं गगनम्' इतिप्रयोगापत्तिः स्यात् किं तु तादृशभेदान्यभेदो ग्राह्यः स च तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेद एव तादृशभेदप्रतियोगित्वरूपमनेकत्वं घटेष्वस्त्येवेति 'सर्वे घटाः' इतिप्रयोगस्यानुपपत्तिरपि नास्ति, तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदस्तु स्वप्रतियोगितासमानाधिकरणो न भवति- स्वप्रतियोग्यवृत्तित्वादित्युक्तोभयसम्बन्धेन भेदविशिष्टभेदस्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदो न भवति, अत्र स्वपदार्थस्य च सम्बन्धे निवेशेनाऽननुगमोऽपि नास्त्येवेत्येवंरीत्या द्वित्वावच्छिन्नप्रतियोगिताकभेदस्य व्यावृत्तिः सम्भवतीत्यर्थः । अत्रापि दोषमुद्भावयति- तथापीति, यद्यप्युक्तरीत्या द्वित्वावच्छिन्नप्रतियोगिताकभेदस्य व्यावृत्तिः संभवति तथापीत्यन्वयः ।

ऽवच्छेदकावच्छेदेनान्वयेऽवच्छेदकैकदेशाव्यापकतावोधस्यानुभवविरुद्धतया 'सर्वे घटा रूपवन्तः' इत्यादौ घटनिष्ठभेदप्रतियोगित्वस्योद्देश्यतावच्छेदकतया शुद्धघटत्वादिव्यापकत्वभानानुपपत्त्या घटत्वसामानाधिकरण्येन रूपादिमदन्यत्वनिश्चयदशायामपि तादृशवाक्याच्छाब्दबोधापत्तिर्दुर्वारैव ।

एवं विशेष्यतावच्छेदकव्यापकताया एव विशेषणसंसर्गांशे संसर्गविशेषणीभूतविशेषणांशे वा भानात् 'सर्वेषु घटेषु रूपम्' इत्यादौ घटत्वादेर्विशेष्यतानवच्छेदकत्वेन रूपादौ तद्व्यापकत्वभानं दुर्लभमापद्येत ।

अयमर्थः — यत्रोद्देश्य किंचिद्धर्मविशेषित भवति तत्राऽवच्छेदकावच्छेदेन नाम विशेषणीभूतधर्मसमानाधिकरण यदुद्देश्यतावच्छेदक तादृशोद्देश्यतावच्छेदकावच्छेदेन विधेयान्वये कृते जाते वा विधेये तादृशोद्देश्यतावच्छेदकैकदेशाव्यापकताबोधोऽनुभवविरुद्ध एव भवति यथा 'तैलङ्गब्राह्मणाः पण्डिताः' इत्यत्रोद्देश्यो ब्राह्मणस्तैलङ्गत्वेन विशेषित इति तैलङ्गत्वसमानाधिकरणब्राह्मणत्वावच्छेदेनैव पाण्डित्यस्यान्वयो भवति न तु शुद्धब्राह्मणत्वावच्छेदेनापि— अनुभवविरुद्धत्वात् तथा प्रकृतेऽप्यनेकत्वस्य नामोक्तभेदप्रतियोगि वस्य सर्वपदार्थत्वे हि तादृशसर्वपदार्थेन घटलक्षणोद्देश्यस्य विशेषितत्वात् 'सर्वे घटा रूपवन्त' इत्यत्र घटनिष्ठभेदप्रतियोगित्वस्य नाम घटनिष्ठोक्तभेदप्रतियोगित्वसमानाधिकरणघटत्वस्योद्देश्यतावच्छेदकतया उक्तभेदप्रतियोगित्वसमानाधिकरणघटत्वावच्छेदेनैव विधेयस्य रूपवत्त्वस्यान्वयः स्यान्न तु शुद्धघटत्वावच्छेदेनापि— अत्र केवलघटत्वस्योक्तोद्देश्यतावच्छेदकैकदेशत्वात् तथा च विधेये रूपवत्त्वे शुद्धघटत्वादिव्यापकत्वभानं नोपपद्यते इति घटत्वसामानाधिकरण्येन नाम कतिपयघटेषु रूपादिमदन्यत्वनिश्चयदशायामपि=रूपाभावनिश्चयदशायामपि तादृशवाक्यात्='सर्वे घटा रूपवन्त' इतिवाक्याद् रूपत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकः शाब्दबोधः स्यादेव न चेतदिष्टम् । यदि चात्र केवलघटत्वस्योद्देश्यतावच्छेदकत्वं स्यात्तदा कतिपयघटेषु रूपाभावनिश्चयदशायाम् 'सर्वे घटा रूपवन्त' इतिवाक्यादुक्तशाब्दबोधो न स्यादपि न चैवमस्ति—उक्तभेदप्रतियोगित्वसमानाधिकरणघटत्वस्यैवात्रोद्देश्यतावच्छेदकत्वात् तत्सामानाधिकरण्येन रूपाभावनिश्चयदशायामुक्तवाक्यादुक्तशाब्दबोधासम्भवेऽपि शुद्धघटत्वसामानाधिकरण्येन रूपाभावनिश्चयदशायामुक्तवाक्यादुक्तशाब्दबोधे बाधकाभावात् रूपाभावज्ञानप्रतिबन्ध्यैव तादृशशाब्दबोधफलं तेन रूपाभावनिश्चयदशायामपि तादृशशाब्दबोधे जाते तादृशफलानुपपत्त्या तादृशशाब्दबोधस्यानिष्टत्वादिति ।

दोषान्तरमाह— एवमिति, प्रथमान्तार्थमुख्यविशेष्यकबोधस्वीकारात् प्रथमान्तपदबोध्य विशेष्य भवति विशेषणे विशेषणसंसर्गे वा विशेष्यतावच्छेदकनिरूपितमेव व्यापकत्व भवतीति च नियमोऽस्ति 'सर्वेषु घटेषु रूपम्' इत्यत्र रूपस्य विशेषणत्वाद् रूपसमवाये तादृशसमवायविशेषणीभूतरूपे वा घटत्वव्यापकत्वमवगन्तुमस्ति तन्न सम्भवति— घटस्यात्र सप्तम्यन्तपदबोध्यत्वात् प्रथमान्तपदाबोध्यत्वेन विशेष्यत्वाभावाद् घटत्वस्य च विशेष्यतावच्छेदकत्वाभावादित्यर्थः । तद्व्यापकत्वभानम्=घटत्वव्यापकत्वभानम् ।

न च तत्र सप्तम्यर्थाधेयत्वादौ निरूपकत्वसंबन्धावच्छिन्नव्यापकतासंबन्धेनैव प्रकृत्यर्थस्य घटादेरन्वयः स्वीक्रियते. घटादेर्व्याप्यता च तादात्म्यसंबन्धेन. व्यापकता च यादृशरूपावच्छिन्ने आधेयत्वादेरन्वयस्तदवच्छिन्ननिष्ठाआधेयतात्वाद्यवच्छिन्ना संसर्गः. असौ रूपनिष्ठाधेयत्वादेराधेयतात्वादिना द्रव्यत्वव्या-

शङ्कते— न चेति । तत्र='सर्वेषु घटेषु रूपम्' इत्यत्र घटस्य विशेष्यत्वाभावेपि "प्रकृतिप्रत्ययार्थौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थस्य प्राधान्यम्" इतिनियमात् प्रकृत्यर्थस्य प्रत्ययार्थेऽन्वयो भवत्येव. अत्र च सप्तमीरूपप्रत्ययस्याऽऽधेयत्वमर्थः तच्चाधेयत्वमत्र रूपे वर्तते तादृशाधेयत्वस्य निरूपको घट एवेति घटे निरूपकत्वं वर्तते— आधेयताया आधारनिरूपितत्वात् यत्र यत्र च घटे तादात्म्यसंबन्धेन घटो वर्तते तत्र तत्र घटे उक्तनिरूपकत्वसंबन्धेन रूपनिष्ठाधेयत्वमपि वर्तत एवेति रूपनिष्ठाधेयत्वे व्यापकता प्राप्ता. रूपनिष्ठाधेयत्वं घटे निरूपकत्वसंबन्धेन वर्तत इति रूपनिष्ठाधेयत्वनिष्ठा व्यापकता निरूपकत्वसंबन्धावच्छिन्ना जाता यथा यत्र धूमस्तत्र संयोगसंबन्धेन वह्निर्वर्तत इति वह्निनिष्ठा व्यापकता संयोगसंबन्धावच्छिन्ना भवति तथा च 'सर्वेषु घटेषु रूपम्' इत्यत्र प्रत्ययार्थाधेयत्वे निरूपकत्वसंबन्धावच्छिन्ना या व्यापकता तादृशव्यापकतासम्बन्धेन प्रकृत्यर्थस्य घटस्यान्वयः स्वीक्रियते एवं च रूपनिष्ठाधेयत्वे घटव्यापकत्वं लब्धं तथा यत्र घटे समवायेन घटत्वं वर्तते तत्रोक्तनिरूपकत्वसंबन्धेन रूपनिष्ठाधेयत्वं वर्तत इति रूपनिष्ठाधेयत्वे घटत्वव्यापकत्वमपि लब्धं रूपनिष्ठाधेयत्वस्यापि रूपं व्यापकमेवेत्यर्थादेव रूपे घटत्वव्यापकत्वं लब्धमिति न रूपे उक्तघटत्वव्यापकत्वस्य भानानुपपत्तिरित्यर्थः । तादृशाधेयत्वसबन्धेन च घटस्य रूपेऽन्वयो विज्ञेयः । रूपनिष्ठाधेयत्वनिरूपिता ( रूपनिष्ठाधेयत्वनिष्ठव्यापकतानिरूपिता ) या घटे व्याप्यता वर्तते सा तादात्म्यसबन्धावच्छिन्नास्तीत्याह— घटादेरिति । संसर्गभूतव्यापकताया अवच्छेदकरूपमाह— व्यापकतेति, प्रकृते यादृशरूपावच्छिन्ने नाम रूपत्वावच्छिन्ने आधेयत्वस्य निष्ठत्वसंबन्धेनान्वयोस्तीति तदवच्छिन्ननिष्ठा=रूपत्वावच्छिन्नरूपनिष्ठा याऽऽधेयता तादृशाधेयतानिष्ठं यदाधेयतात्वं तदवच्छिन्ना=तत्समानाधिकरणैव नाम रूपनिष्ठाधेयतानिष्ठाधेयतात्वसमानाधिकरणैवात्र व्यापकता सबन्धो विज्ञेयः— रूपनिष्ठाधेयत्वे आधेयतात्वस्योक्तव्यापकतायाश्च सत्त्वात् संबन्धभूता व्यापकता रूपनिष्ठाधेयतात्वावच्छिन्ना जाता । अस्य फलमाह— असौ इति, यद्यपि रूपनिष्ठाधेयत्वं सामान्यत आधेयतात्वेन रूपेण द्रव्यत्वव्यापकमेव— आकाशादिद्रव्येपि निरूपकत्वसंबन्धेन शब्दादिनिष्ठाधेयत्वस्य सत्त्वादेवेति 'सर्वं द्रव्यं रूपवत्' 'सर्वेषु द्रव्येषु रूपम्' इत्यादिप्रयोगस्यापत्तिः संभवति तथाप्यत्रोक्तरीत्या रूपनिष्ठाधेयतात्वावच्छिन्नव्यापकतासंबन्धेनैव प्रत्ययार्थाधेयत्वे प्रकृत्यर्थस्यान्वय इष्टोस्ति सामान्यत आधेयत्वनिष्ठा व्यापकता च रूपनिष्ठाधेयतानिष्ठाधेयतात्वावच्छिन्ना न संभवतीति 'सर्वेषु द्रव्येषु रूपम्' इत्यत्र प्रकृत्यर्थस्य द्रव्यस्य प्रत्ययार्थाधेयत्वे रूपनिष्ठाधेयतात्वावच्छिन्नव्यापकतासंबन्धेनान्वयो न संभवति. यत्र च रूपनिष्ठाधेयत्वे रूपनिष्ठाधेयतात्वावच्छिन्ना व्यापकता वर्तते तत्तु रूपनिष्ठाधेयत्वं द्रव्यत्वव्यापकं नास्ति— आकाशे

पकत्वेपि नातिप्रसङ्गः, एवं रूपनिष्ठाधेयतात्वादिनाऽऽधेयत्वादेः पदानुपस्थितत्वेपि न क्षतिः तथा सत्यपि तादृशरूपस्य संसर्गघटकतया भाने विरोधाभावादितिवाच्यम्, उक्तव्यापकतायाः संसर्गत्वे मानाभावात् ।

अस्तु वोद्देश्यविधेययोर्विशेष्यविशेषणभाववैपरीत्येपि विधेयांशे उद्देश्यतावच्छेदकव्यापकत्वस्योद्देश्यविधेयभावमहिम्नैव संसर्गतया भानम्, भवतु चोद्देश्य

व्यभिचारादिति 'सर्वेषु द्रव्येषु रूपम्' इत्यादिप्रयोगातिप्रसङ्गस्यापत्तिर्नास्तीत्यर्थः । ननु पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रत्यन्वयितावच्छेदकरूपेणोपस्थितेः कारणत्वमस्ति अत्र च रूपनिष्ठाधेयत्वस्य रूपनिष्ठाधेयतात्वेन रूपेण पदात्=सप्तमीप्रत्ययादुपस्थितिर्नास्ति— सप्तम्या सामान्यत आधेयत्वे शक्तिस्वीकारेण सप्तम्या सामान्यत आधेयतात्वेन रूपेणाधेयत्वस्योपस्थितिसम्भवेपि रूपनिष्ठाधेयता येन रूपेणोपस्थितेरसम्भवादिति स्वरूपेणोपस्थितरूपनिष्ठाधेयत्वे प्रकृत्यर्थघटस्य कथमन्वयः स्यादित्याशङ्कयाह— एवमिति । नक्षतिः=स्वरूपेणोपस्थितेपि रूपनिष्ठाधेयत्वे प्रकृत्यर्थघटस्यान्वयानुपपत्तिर्नास्तीत्यर्थः । अन्वयभावे हेतुमाह— तथा सत्यपीति, तथा सत्यपि=रूपनिष्ठाधेयत्वस्य रूपनिष्ठाधेयतात्वेन रूपेण पदानुपस्थितत्वेपि तादृशरूपस्य=रूपनिष्ठाधेयत्वस्य संसर्गघटकतया भानेन विरोधाभावादित्यन्वयः, यस्य पदार्थस्य प्रकारतया विशेष्यतया वा भानं भवति तस्यान्वयितावच्छेदकरूपेणाऽनुपस्थितौ तत्रोक्तनियमेन पदार्थान्तरान्वयस्यानुपपत्तिरस्त्येव यस्य च पदार्थस्य संसर्गतया संसर्गघटकतया वा भानं भवति तस्यान्वयितावच्छेदकरूपेणानुपस्थितावपि तत्र पदार्थान्तरान्वये विरोधो नास्ति— तत्रोक्तनियमानङ्गीकारस्य सर्वसम्मतत्वात् 'सर्वेषु घटेषु रूपम्' इत्यत्र सप्तम्यर्थाधेयत्वसम्बन्धेन घटस्य रूपेऽन्वयो भवतीत्याधेयत्वं संसर्गतया भासते किं वा घटरूपयोराधाराधेयभाव एव सम्बन्ध इत्याधेयत्वस्य तादृशसंसर्गघटकतयात्र भानं भवतीति संसर्गभूते संसर्गघटके वा रूपनिष्ठाधेयत्वेऽन्वयितावच्छेदकेन रूपनिष्ठाधेयतात्वेन रूपेणानुपस्थितेपि प्रकृत्यर्थघटस्यान्वये विरोधो नास्तीत्यर्थः । उक्तं परिहरति— उक्तव्यापकताया इति, उक्तरूपव्यापकताया अन्यत्र क्वचिदपि संसर्गत्वं न दृष्टमिति नैतादृशव्यापकतासम्बन्धेन रूपनिष्ठाधेयत्वे प्रकृत्यर्थघटस्यान्वयः सम्भवति येनोक्तरीत्या रूपे घटत्वव्यापकत्वं लभ्येत तथा चोक्तरीत्या 'सर्वेषु घटेषु रूपम्' इत्यत्र रूपे घटत्वव्यापकत्वभानानुपपत्तिस्तदवस्थैवास्तीत्यर्थः ।

उद्देश्य , तथापीत्यादिनाग्रे दोषान्तरप्रदर्शनार्थं प्रतिवादिनोक्तं प्रथमं स्वीकरोति— अस्तु वेति, उद्देश्यस्य घटस्य विशेष्यत्वं विधेयस्य रूपस्य च विशेषणत्वं तथा 'सर्वेषु घटेषु रूपम्' इत्यत्र नास्ति किं तु विधेयस्य रूपस्यैवात्र विशेष्यत्वमस्ति प्रथमान्तपदबोध्यत्वाद् उद्देश्यस्य घटस्य च विशेषणत्वमस्तीत्युद्देश्यविधेययोर्विशेष्यविशेषणभाववैपरीत्येपि सति विधेये रूपे यद् उद्देश्यतावच्छेदकव्यापकत्वम्=घटत्वव्यापकत्वं तस्योद्देश्यविधेयभावमहिम्ना=उद्देश्यविधेयभावप्रयोजकसामर्थ्येव संसर्गतया भानं भवतीत्यपि स्वीकरोमीत्यर्थः । प्रथमं रूपनिष्ठाधेयत्वनिष्ठव्यापकताया यत्संसर्गत्वमुक्त

विशेषणतयोपस्थितस्यापि विधेये पारतन्त्र्येणाऽन्वयो व्युत्पत्त्यविरुद्धः, नामार्थयोरपि भेदेन पारतन्त्र्येणान्वयो व्युत्पत्ति मा विरौत्सीत्. तथापि सर्वपदस्य यत्र विधेयवाचकपदसामानाधिकरण्यं तत्र विधेयांशे उद्देश्यस्य तत्सम्बन्धस्य वाऽनुभवसिद्धो व्याप्तिबोधो दुरुपपादः।

---

तदत्र स्मर्तव्यम्। उद्देश्यविधेयभावप्रयोजकसामग्री चात्र घटपदस्य प्राथम्यं रूपपदस्योत्तरभावित्वमेव प्रथमोक्तपदबोध्यस्योद्देश्यत्वस्वीकारात् तदुक्तम्– "यदुद्देश्योग प्राथम्यमेतदुद्देश्यलक्षणम्" इति। किं च "एकत्र विशेषणतयान्वितस्यान्यत्र विशेषणतयान्वयो न भवति" इतिनियमात् 'सर्वेषु घटेषु रूपम्' इत्यत्रोद्देश्यभूतघटविशेषणतयोपस्थितस्य घटत्वस्य विधेये रूपे व्यापकत्वसम्बन्धेनान्वयो न सम्भवति यद्यपि तथाप्युक्तनियमस्य स्वातन्त्र्येणान्वयस्थले एव स्वीकाराद् एकत्र विशेषणतयान्वितस्याप्यन्यत्र पारतन्त्र्येण=धर्मिपारतन्त्र्येणान्वये विरोधो नास्ति यथा 'धनी सुखी चैत्र' इत्यत्र चैत्रे विशेषणीभूतस्यापि धनस्य चैत्रद्वारा स्वप्रयोज्यत्वसम्बन्धेन सुखेऽप्यन्वयो भवति– 'धनप्रयोज्यसुखवांश्चैत्र' इतिबोधोदयादिति प्रकृतेऽपि घटविशेषणीभूतघटत्वस्य घटद्वारा विधेये रूपे व्यापकत्वसम्बन्धेनान्वयो व्युत्पत्त्यविरुद्धो भवतु इत्यपि स्वीकरोमीत्यर्थः। किं च यद्यपि नामार्थयोरपि परस्परं भेदसम्बन्धेनान्वयो न भवतीति घटत्वस्य रूपे व्यापकतासम्बन्धेनान्वयो न सम्भवति तथाप्ययमपि नियमः स्वातन्त्र्येणान्वयस्थले एवास्ति न धर्मिपारतन्त्र्येणान्वयस्थलेऽपीति प्रकृते घटत्वस्य घटद्वारा रूपे व्यापकतासम्बन्धेनाप्यन्वयो व्युत्पत्तिविरुद्धो नास्तीत्यपि स्वीकरोमीति पूर्वोक्तरीत्या 'सर्वेषु घटेषु रूपम्' इत्यत्रापि रूपे विधेये घटत्वव्यापकत्वभानोपपादनं यद्यपि सम्भवति तथापीत्यन्वयः। तथापीति– यथा 'सर्वेषु घटेषु रूपम्' इत्यत्र त्वया घटस्य सप्तम्यर्थाधियावेऽन्वयं कृत्वा घटत्वस्य रूपे व्यापकतासम्बन्धेनान्वयं प्रदर्शितस्तेन च रूपे घटघटत्वव्यापकत्वं प्रदर्शितं तथा सर्वपदस्य यत्र 'द्रव्ये सर्वाणि रूपाणि' इत्यादौ विधेयवाचकरूपादिपदसामानाधिकरण्यं तत्रापि द्रव्यद्रव्यत्वयोर्विधेये रूपे व्यापकतासम्बन्धेनान्वयापत्त्या विधेये रूपे व्यापकत्वस्यैव भानं स्यात् तथा च 'सर्वं द्रव्यं रूपवत्' इत्यपि प्रयोगः स्याद् न चैतदिष्टमिति 'द्रव्ये सर्वाणि रूपाणि' इत्यत्रोद्देश्यनिरूपितमुद्देश्यसम्बन्धनिरूपितं वा व्याप्यत्वमेव विधेये रूपे सर्वानुभवसिद्धमस्ति तादृशव्याप्यत्वस्य बोधस्त्वदुक्तपक्षे दुरुपपाद एव रूपे व्यापकत्वापत्त्येत्यर्थः। रूपस्य द्रव्यत्वव्याप्यत्वे तु 'सर्वं द्रव्यं रूपवत्' इतिप्रयोगस्यापत्तिर्नास्त्येव। उद्देश्यस्य तत्सम्बन्धस्येति च षष्ठ्यर्थो निरूपितत्वं तस्य व्याप्तावन्वयः। उद्देश्यसम्बन्धश्च तादात्म्यलक्षणो विज्ञेयः यत्र यत्र रूपं तत्र तत्र तादात्म्येन द्रव्यस्य द्रव्यतादात्म्यस्य च सत्त्वादेव। व्याप्तिबोध=व्याप्यत्वबोधः। "विधेयांशे" इत्यत्र "विधेयतावच्छेदकांशे" इत्यपि पाठः।

एवम् 'घटे न सर्वाणि रूपाण्यपि तु कानिचिदेव' इत्यादौ रूपनिष्ठभेदप्रति-योगिरूपत्वावच्छिन्नाभावो घटादौ बाधित एवेत्ययोग्यतापत्तिः।

न च तादृशरूपत्वादिसामानाधिकरण्येन घटादिवृत्तित्वाभावः प्रतीयते स चाऽबाधित एव नञ्समभिव्याहारस्थलेऽशेषत्वभानानुपगमे क्षतिविरहादिति वाच्यम्, एवं सति तत्र घटस्योद्देश्यत्वाऽनिर्वाहात्। न च तत्र रूपस्योद्देश्यत्वम्-प्रथममऽनिर्दिष्टत्वात्।

अत्रोच्यते— उद्देश्यतावच्छेदकव्यापकविधेयव्याप्यपर्याप्तिको धर्मः सर्वपद-प्रवृत्तिनिमित्तम् 'सर्वे घटा रूपवन्तः' इत्यादौ तथाविधधर्मो घटादिनिष्ठयावत्त्व-

---

उक्तसर्वपदार्थे दोषान्तरमाह— एवमिति, 'घटे न सर्वाणि रूपाणि' इत्यत्र त्वदुक्तरीत्या रूप वसमानाधिकरणभेदप्रतियोगित्वमेव सर्वपदार्थः स्यात्तस्य च रूपपदार्थेनान्वयः कर्तव्य इत्यत्र रूपनिष्ठभेदप्रतियोगि यद्रूपत्वावच्छिन्न तदभाव =रूपत्वावच्छिन्नप्रतियोगिताकाभावो नञा बोधनीयः स च घटे बाधित एव घटे कस्यचिदपि रूपस्य सत्त्वेन रूपत्वावच्छिन्नप्रतियोगिताका-भावस्य बाधितत्वादयोग्यतापत्तिरित्यर्थः। बाधाभावो हि योग्यता।

ननु 'घटे न सर्वाणि रूपाणि' इत्यत्र तादृशरूपत्वादिसामानाधिकरण्येन नाम रूप निष्ठो यस्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताको भेदस्तादृशभेदप्रतियोगि रूपमेव तद्वृत्ति यद्रूपत्व तत्सामानाधिकरण्येन नाम केषुचिद्रूपेषु घटवृत्तित्वाभावः प्रतीयते न तु रूपत्वाव च्छेदेनाऽशेषरूपेषु घटवृत्तित्वाभाव उच्यते येनाऽयोग्यता स्यात् केषु चिद्रूपेषु च न घटवृत्तित्वा-भावस्य बाध— घटे सकलरूपसमवायाभावात्, 'घटे न सर्वाणि रूपाणि' इत्यादि नञ्सम-भिव्याहारस्थले सर्वपदेनाऽशेषत्वभानास्वीकारेपि क्षतिर्नास्तीत्याशङ्क्याह— न चेति। परिहारहेतु माह— एवमिति, तत्र= 'घटे न सर्वाणि रूपाणि' इत्यत्र यदि रूपत्वसामानाधिकरण्येन घटवृत्तित्वाभावः प्रतीयते निर्धार्यते वा तदा रूपस्यैवोद्देश्यत्वं स्याद् न तु घटस्य न चैतदि-ष्टम्— अत्र घटस्यैवोद्देश्यत्वात्। ननु भवतु तत्र रूपस्यैवोद्देश्यत्वं को दोष इत्याशङ्क्याह— न चेति। परिहारहेतुमाह— प्रथममिति, प्रथमं निर्दिष्टस्यैवोद्देश्यत्वं भवति न चात्र रूपं प्रथमं निर्दिष्टमस्ति तदुक्तम्— "यच्छब्दयोग प्राथम्यमतद्धुद्देश्यलक्षणम्" इति। न च 'रूपाणि सर्वाणि न घटे' इत्यत्रापि वाक्यवचने रूपस्य प्राथम्यं समाधनीयम्— अन्वयबोधकाले घट स्यैव प्राथम्यप्रसङ्गादित्यर्थः।

उक्तरूपेण बहुविधानुपपत्तिं प्रदर्श्य समाधातुमुपक्रमते— अत्रोच्यत इत्यादिना। उद्देश्येति— उद्देश्यतावच्छेदकव्यापिका सती विधेयव्याप्या या पर्याप्ति (वृत्ति) तादृशपर्याप्तिक =तादृशपर्याप्तिवान् यो धर्मः स सर्वपदप्रवृत्तिनिमित्तं विज्ञेयं, 'सर्वे घटा रूपवन्तः' इत्यत्र तथाविधधर्मः =उक्तपर्याप्तिको धर्मो घटनिष्ठयावत्त्वमेवेति तादृशयावत्त्वरूपेण घटत्वावच्छिन्नस्य सर्वपद-

मेव. तस्य व्यासज्यवृत्तितया तत्पर्याप्तेर्घटत्वव्यापकत्वाद् रूपादिव्याप्यत्वाच्च शब्दाद् घटत्वादिव्यापके रूपादिव्याप्यत्वलाभे तयोरपि व्याप्यव्यापकभावोऽर्थाल्लभ्यते । द्रव्यत्वादिव्यापकपर्याप्ते रूपाद्यऽव्याप्यत्वात् 'सर्वाणि द्रव्याणि रूपवन्ति' इत्यादावऽयोग्यता ।

उद्देश्यतावच्छेदकव्यापकत्वं च तत्समानाधिकरणाऽन्योन्याभावप्रतियोगितान-

---

वच्छेदकत्वं विधेयमित्यर्थः । विधेये रूपे उद्देश्यतावच्छेदकव्यापकत्वमानोपायमाह—तस्येति, तस्य=यावत्त्वस्य, तद्धि यावत्त्वं सकलघटेषु व्यासज्य वर्तते न तु प्रत्येकं पर्याप्त्येति यत्र यत्र घटत्वं तत्र तत्र तादृशयावत्त्वपर्याप्तिरस्त्येवेति तत्पर्याप्तेः=तादृशयावत्त्वपर्याप्तेर्घटत्वव्यापकत्वं प्राप्तं यत्र यत्र रूपमस्ति तत्र तत्र घटनिष्ठयावत्त्वपर्याप्तिनियमो नास्ति— पटादौ व्यभिचारादिति तादृशपर्याप्तौ रूपादिविधेयव्याप्यत्वमपि प्राप्तमिति शब्दाद् घटत्वादिव्यापके यावत्त्वे रूपादिव्याप्यत्वस्य लाभे जाते तयोरपि=घटत्वरूपयोरपि व्याप्यव्यापकभावोऽर्थादेव लभ्यते इत्यन्वयः । सर्वपदस्योद्देश्यतावच्छेदकव्यापकविधेयव्याप्यपर्याप्तिकयावत्त्वे शक्तिस्वीकारेण सर्वपदादेव तादृशयावत्त्वे घटत्वादिव्यापकत्वं रूपादिव्याप्यत्वं च लभ्यते इत्यभिप्रायेणोक्तम्— शब्दादिति । यदि यावत्त्वं व्यासज्यवृत्ति न स्यात्तदा प्रत्येकघटेषु पृथक् पृथग्यावत्त्वापत्त्या कस्मिंश्चिदपि यावत्त्वे घटत्वादिव्यापकत्वं न स्यात्. व्यासज्यवृत्तित्वे तु सकलघटेष्वेकस्यैव यावत्त्वस्य संभवात्तादृशयावत्त्वे घटत्वव्यापकत्वं संभवतीत्यभिप्रायेणोक्तम्— व्यासज्यवृत्तितयेति । 'सर्वेषु घटेषु रूपम्' इत्यत्रापि घटस्योद्देश्यत्वाद् घटत्वव्यापक रूपव्याप्यं यावत्त्वमेव सर्वपदप्रवृत्तिनिमित्तमित्युक्तरीत्या रूपे घटत्वव्यापकत्वभानानुपपत्तिर्नास्ति । 'घटे न सर्वाणि रूपाणि' इत्यत्र सर्वपदस्य रूपपदसमानाधिकरणत्वाद् रूपत्वव्यापकयावत्त्वं सर्वपदप्रवृत्तिनिमित्तमिति तादृशयावत्त्वावच्छिन्नरूपाभावो घटे प्रतीयते । द्रव्यत्वव्यापकपर्याप्तिस्तु रूपव्याप्या न भवति— आकाशादौ व्यभिचारादिति रूपे द्रव्यत्वव्यापकत्वस्य बाधात् 'सर्वाणि द्रव्याणि रूपवन्ति' इत्यादि प्रयोगो न भवतीत्याह— द्रव्यत्वादीति । द्रव्यत्वव्यापकपर्याप्तौ रूपव्याप्यत्वस्य बाधादयोग्यता ।

उक्तयावत्त्वपर्याप्तेर्यदुद्देश्यतावच्छेदकव्यापकत्वमुक्तं तत् परिष्करोति— उद्देश्यतेति, व्यापकत्वं द्विविधं भवति तत्रैकम्— 'व्याप्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्' यथा पर्वते धूमसमानाधिकरणात्यन्ताभावो घटादेर्भवतीति तादृशात्यन्ताभावप्रतियोगितावच्छेदकधर्मो घटत्वादिकं तद्वत्त्वं घटादौ प्राप्त वह्नेस्तु धूमाधिकरणेऽत्यन्ताभावो न भवतीति वह्नित्वे धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वं प्राप्तं तादृशवह्नित्वधर्मवत्त्वं वह्नौ यत्प्राप्त तदेव धूमव्यापकत्वम्. द्वितीयं च— 'व्याप्यसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वम्' यथा पर्वते धूमसमानाधिकरणः 'पर्वतो जलवान्न' इत्याकारक एवान्योन्याभावः संभवति तत्प्रतियोगी जलवान् प्रतियोगितावच्छेदकत्वं जलवद्विशेषणत्वाज्जले प्राप्तम् 'वह्निमान्न' इत्याकारकस्तु पर्वतेऽन्योन्याभावो न भवतीति वह्नौ यत् तादृशाऽन्योन्याभावप्रतियोगितानवच्छेदकत्वं प्राप्तं तदपि धूमव्यापकत्वमेव प्रकृते च यद्यत्यन्ताभावघटितं व्यापकत्वं गृहीतं स्यात्तदा

एवम् ' घटे न सर्वाणि रूपाण्यऽपि तु कानिचिदेव ' इत्यादौ रूपनिष्ठभेदप्रतियोगिरूपत्वावच्छिन्नाभावो घटादौ बाधित एवेत्यऽयोग्यतापत्तिः ।

न च तादृशरूपत्वादिसामानाधिकरण्येन घटादिवृत्तित्वाभावः प्रतीयते स चाऽबाधित एव नञ्समभिव्याहारस्थलेऽशेषत्वभानानुपगमे क्षतिविरहादिति वाच्यम्, एवं सति तत्र घटस्योद्देश्यत्वाऽनिर्वाहात् । न च तत्र रूपस्योद्देश्यत्वम् प्रथममऽनिर्दिष्टत्वात् ।

अत्रोच्यते— उद्देश्यतावच्छेदकव्यापकविधेयव्याप्यपर्याप्तिको धर्मः सर्वपदप्रवृत्तिनिमित्तम् ' सर्वे घटा रूपवन्तः ' इत्यादौ तथाविधधर्मो घटादिनिष्ठयावत्त्व-

---

उक्तसर्वपदार्थे दोषान्तरमाह— एवमिति, ' घटे न सर्वाणि रूपाणि ' इत्यत्र त्वदुक्तरीत्या रूपत्वसमानाधिकरणभेदप्रतियोगित्वमेव सर्वपदार्थ स्यात्तस्य च रूपपदार्थेनान्वय कर्तव्य इत्यत्र रूपनिष्ठभेदप्रतियोगि यद्रूपत्वावच्छिन्न तदभाव =रूपत्वावच्छिन्नप्रतियोगिताकाभावो नञा बोधनीयः स च घटे बाधित एव घटे कस्यचिदपि रूपस्य सत्त्वेन रूपत्वावच्छिन्नप्रतियोगिताकाभानस्य बाधित त्वादयोग्यतापत्तिरित्यर्थः । बाधाभावो हि योग्यता ।

ननु ' घटे न सर्वाणि रूपाणि ' इत्यत्र तादृशरूपत्वादिसामानाधिकरण्येन नाम रूपनिष्ठो यस्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताको भेदस्तादृशभेदप्रतियोगि रूपमेव तद्वृत्ति यद्रूप च तत्सामानाधिकरण्येन नाम केषुचिद्रूपेषु घटवृत्तित्वाभाव प्रतीयते न तु रूपत्वावच्छेदेनाऽशेषरूपेषु घटवृत्तित्वाभाव उच्यते येनाऽयोग्यता स्यात् केषु चिद्रूपेषु च न घटवृत्तित्वाभावस्य बाध — घटे सकलरूपसमवायाभावात्, ' घटे न सर्वाणि रूपाणि ' इत्यादि नञ्समभिव्याहारस्थले सर्वपदेनाऽशेषत्वभानास्वीकारेऽपि क्षतिर्नास्ती त्याशङ्क्याह— न चेति । परिहारहेतुमाह— एवमिति, तत्र= ' घटे न सर्वाणि रूपाणि ' इत्यत्र यदि रूपत्वसामानाधिकरण्येन घटवृत्तित्वाभाव प्रतीयते निर्धार्यते वा तदा रूपस्यैवोद्देश्यत्व स्याद् न तु घटस्य न चैतदिष्टम्— अत्र घटस्यैवोद्देश्यत्वात् । ननु भवतु तत्र रूपस्यैवोद्देश्यत्व को दोष इत्याशङ्क्याह— न चेति । परिहारहेतुमाह— प्रथममिति, प्रथम निर्दिष्टस्यैवोद्देश्यत्व भवति न चात्र रूप प्रथम निर्दिष्टमस्ति तदुक्तम्—" यच्छब्दयोग प्राथम्यमेतदुद्देश्यलक्षणम् " इति । न च ' रूपाणि सर्वाणि न घटे ' इत्येवमपि वाक्यरचन रूपस्य प्राथम्य समानेनीयम्— अन्वयबोधकाले घटस्यैव प्राथम्यप्रसङ्गादित्यर्थः ।

उक्तरूपेण बहुविधानुपपत्ति प्रदर्श्य समाधातुमुपक्रमते— अत्रोच्यत इत्यादिना । उद्देश्येति— उद्देश्यतावच्छेदकव्यापिका सती विधेयव्याप्या या पर्याप्ति ( वृत्ति ) तादृशपर्याप्तिक =तादृशपर्याप्तिवान् यो धर्म स सर्वपदप्रवृत्तिनिमित्त विज्ञेय, ' सर्वे घटा रूपवन्त ' इत्यत्र तथाविधधर्म =उक्तपर्याप्तिको धर्मो घटनिष्ठ यावत्त्वमेवेति तादृशयावत्त्वरूपेण घटत्वावच्छिन्नस्य सर्वपद—

मेव. तस्य व्यासज्यवृत्तितया तत्पर्याप्तेर्घटत्वव्यापकत्वाद् रूपादिव्याप्यत्वाच्च शब्दाद् घटत्वादिव्यापके रूपादिव्याप्यत्वलाभे तयोरपि व्याप्यव्यापकभावो-ऽर्थाल्लभ्यते । द्रव्यत्वादिव्यापकपर्याप्ते रूपाद्यऽव्याप्यत्वात् 'सर्वाणि द्रव्याणि रूपवन्ति' इत्यादावऽयोग्यता ।

उद्देश्यतावच्छेदकव्यापकत्वं च तत्समानाधिकरणाऽन्योन्याभावप्रतियोगितान-

---

वाच्छेदकत्वं विशेषमित्यर्थः । विधेये रूपे उद्देश्यतावच्छेदकव्यापकत्वभानोपायमाह–तस्येति, तस्य=यावत्त्वस्य, तद्धि यावत्त्वं सकलघटेषु व्यासज्य वर्तते न तु प्रत्येकं पर्याप्त्येति यत्र यत्र घटत्वं तत्र तत्र तादृशयावत्त्वपर्याप्तिरस्त्येवेति तत्पर्याप्ते=तादृशयावत्त्वपर्याप्तेर्घटत्वव्यापकत्वं प्राप्तं यत्र यत्र रूपमस्ति तत्र तत्र घटनिष्ठयावत्त्वपर्याप्तिनियमो नास्ति– पटादौ व्यभिचारादिति तादृशपर्याप्तौ रूपादिनिष्ठव्याप्यत्वमपि प्राप्तमिति शब्दाद् घटत्वादिव्यापके यावत्त्वे रूपादिव्याप्यत्वस्य लाभे जाते तयोरपि=घटत्वरूपयोरपि व्याप्यव्यापकभावोऽर्थादेव लभ्यते इत्यन्वयः । सर्वपदस्योद्देश्यतावच्छेदकव्यापकनिष्ठव्याप्यपर्याप्तिकयावत्त्वे शक्तिस्वीकारेण सर्वपदादेव तादृशयावत्त्वे घटत्वादिव्यापकत्वं रूपादिव्याप्यत्वं च लभ्यते इत्यभिप्रायेणोक्तम्– शब्दादिति । यदि यावत्त्वं व्यासज्यवृत्ति न स्यात्तदा प्रत्येकघटेषु पृथक् पृथग्यावत्त्वापत्त्या कस्मिंश्चिदपि यावत्त्वे घटत्वादिव्यापकत्वं न स्यात्, व्यासज्यवृत्तित्वे तु सकलघटेष्वेकस्यैव यावत्त्वस्य सम्भवात्तादृशयावत्त्वे घटत्वव्यापकत्वं सम्भवतीत्यभिप्रायेणोक्तम्– व्यासज्यवृत्तितयेति । 'सर्वेषु घटेषु रूपम्' इत्यत्रापि घटस्योद्देश्यत्वाद् घटत्वव्यापकं रूपव्याप्यं यावत्त्वमेव सर्वपदप्रवृत्तिनिमित्तमित्युक्तरीत्या रूपे घटत्वव्यापकत्वभानानुपपत्तिर्नास्ति । 'घटे न सर्वाणि रूपाणि' इत्यत्र सर्वपदस्य रूपपदसमानाधिकरणत्वाद् रूपत्वव्यापकयावत्त्वं सर्वपदप्रवृत्तिनिमित्तमिति तादृशयावत्त्वावच्छिन्नरूपाभावो घटे प्रतीयते । द्रव्यत्वव्यापकपर्याप्तिस्तु रूपव्याप्या न भवति– आकाशादौ व्यभिचारादिति रूपे द्रव्यत्वव्यापकत्वस्य बाधात् 'सर्वाणि द्रव्याणि रूपवन्ति' इत्यादि प्रयोगो न भवतीत्याह– द्रव्यत्वादीति । द्रव्यत्वव्यापकपर्याप्तौ रूपव्याप्यत्वस्य बाधादयोग्यता ।

उक्तयावत्त्वपर्याप्तेर्यदुद्देश्यतावच्छेदकव्यापकत्वमुक्तं तत् परिष्करोति– उद्देश्यतेति, व्यापकत्वं द्विविधं भवति तत्रैकम्– 'व्याप्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्' यथा पर्वते धूमसमानाधिकरणात्यन्ताभावो घटादेर्भवतीति तादृशात्यन्ताभावप्रतियोगितावच्छेदकधर्मो घटत्वादिकं तद्वत्त्वं घटादौ प्राप्तं वह्नेस्तु धूमाधिकरणेऽत्यन्ताभावो न भवतीति वह्नित्वे धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वं प्राप्तं तादृशवह्नित्वधर्मवत्त्वं वह्नौ यत्प्राप्तं तदेव धूमव्यापकत्वम्. द्वितीयं च– 'व्याप्यसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वम्' यथा पर्वते धूमसमानाधिकरणः 'पर्वतो जलवान्न' इत्याकारक एवान्योन्याभावः सम्भवति तत्प्रतियोगी जलवान् प्रतियोगितावच्छेदकत्वं जलवद्विशेषणत्वाज्जले प्राप्तम् 'वह्निमान्न' इत्याकारकस्तु पर्वतेऽन्योन्याभावो न भवतीति वह्नौ यत् तादृशाऽन्योन्याभावप्रतियोगितानवच्छेदकत्वं प्राप्तं तदपि धूमव्यापकत्वमेव प्रकृते च यद्यत्यन्ताभावघटितं व्यापकत्वं गृहीतं स्यात्तदा

एवम् 'घटे न सर्वाणि रूपाण्यपि तु कानिचिदेव' इत्यादौ रूपनिष्ठभेदप्रति-
योगिरूपत्वावच्छिन्नाभावो घटादौ बाधित एवेत्ययोग्यतापत्तिः ।

न च तादृशरूपत्वादिसामानाधिकरण्येन घटादिवृत्तित्वाभावः प्रतीयते स
चाऽबाधित एव नञ्समभिव्याहारस्थलेऽशेषत्वभानानुपगमे क्षतिविरहादिति
वाच्यम्, एवं सति तत्र घटस्योद्देश्यत्वाऽनिर्वाहात् । न च तत्र रूपस्योद्देश्यत्वम्–
प्रथममऽनिर्दिष्टत्वात् ।

अत्रोच्यते– उद्देश्यतावच्छेदकव्यापकविधेयव्याप्यपर्याप्तिको धर्मः सर्वपद-
प्रवृत्तिनिमित्तम् 'सर्वे घटा रूपवन्तः' इत्यादौ तथाविधधर्मो घटादिनिष्ठयावत्त्व-

---

उक्तसर्वपदार्थे दोषान्तरमाह– एवमिति, 'घटे न सर्वाणि रूपाणि' इत्यत्र त्वदुक्तरीत्या
रूपत्वसमानाधिकरणभेदप्रतियोगित्वमेव सर्वपदार्थः स्यात्तस्य च रूपपदार्थेनाभेदः कर्तव्यः
इत्यत्र रूपनिष्ठभेदप्रतियोगि यद्रूपत्वावच्छिन्नं तदभावः=रूपत्वावच्छिन्नप्रतियोगिताकाभावो नञा
बोधनीयः स च घटे बाधित एव घटे कस्यचिदपि रूपस्य सत्त्वेन रूपत्वावच्छिन्नप्रतियोगिताका-
भावस्य बाधितत्वादयोग्यतापत्तिरित्यर्थः । बाधाभावो हि योग्यता ।

ननु 'घटे न सर्वाणि रूपाणि' इत्यत्र तादृशरूपत्वादिसामानाधिकरण्येन नाम रूप-
निष्ठो यस्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताको भेदस्तादृशभेदप्रतियोगि रूपमेव तद्वृत्ति
यद्रूपत्वं तत्सामानाधिकरण्येन नाम केषुचिद्रूपेषु घटवृत्तित्वाभावः प्रतीयते न तु रूपत्वाव-
च्छेदेनाऽशेषरूपेषु घटवृत्तित्वाभाव उच्यते येनाऽयोग्यता स्यात् केषुचिद्रूपेषु च न घटवृत्तित्वा-
भावस्य बाधः– घटे सकलरूपसमवायाभावात्, 'घटे न सर्वाणि रूपाणि' इत्यादि नञ्सम-
भिव्याहारस्थले सर्वपदेनाऽशेषत्वभानास्वीकारेऽपि क्षतिर्नास्तीत्याशङ्क्याह– न चेति । परिहारहेतु-
माह– एवमिति, तत्र= 'घटे न सर्वाणि रूपाणि' इत्यत्र यदि रूपत्वसामानाधिकरण्येन
घटवृत्तित्वाभावः प्रतीयते निर्धार्यते वा तदा रूपस्यैवोद्देश्यत्वं स्यात् न तु घटस्य न चैतदि-
ष्टम्– अत्र घटस्यैवोद्देश्यत्वात् । ननु भवतु तत्र रूपस्यैवोद्देश्यत्वं को दोष इत्याशङ्क्याह– न
चेति । परिहारहेतुमाह– प्रथममिति, प्रथमं निर्दिष्टस्यैवोद्देश्यत्वं भवति न चात्र रूपं प्रथमं
निर्दिष्टमस्ति तदुक्तम्–"यच्छब्दयोगः प्राथम्यमेतदुद्देश्यलक्षणम्" इति । न च 'रूपाणि
सर्वाणि न घटे' इत्येवमपि वाक्यरचने रूपस्य प्राथम्यं समाननीयम्– अन्वयबोधकाले घट-
स्यैव प्राथम्यप्रसङ्गादित्यर्थः ।

उक्तरूपेण बहुविधानुपपत्तिं प्रदर्श्य समाधातुमुपक्रमते– अत्रोच्यत इत्यादिना । उद्देश्येति–
उद्देश्यतावच्छेदकव्यापिका सती विधेयव्याप्या या पर्याप्तिः (वृत्तिः) तादृशपर्याप्तिक=ताद-
शपर्याप्तिमान् यो धर्मः स सर्वपदप्रवृत्तिनिमित्तं विज्ञेयं, 'सर्वे घटा रूपवन्तः' इत्यत्र तथावि-
धधर्मः=उक्तपर्याप्तिको धर्मो घटनिष्ठयावत्त्वमेवेति तादृशयावत्त्वरूपेण घटत्वावच्छिन्नस्य सर्वपद-

मेव. तस्य व्यासज्यवृत्तितया तत्पर्याप्तेर्घटत्वव्यापकत्वाद् रूपादिव्याप्यत्वाच्च शब्दाद् घटत्वादिव्यापके रूपादिव्याप्यत्वलाभे तयोरपि व्याप्यव्यापकभावो ऽर्थाल्लभ्यते । द्रव्यत्वादिव्यापकपर्याप्ते रूपाद्यऽव्याप्यत्वात् 'सर्वाणि द्रव्याणि रूपवन्ति' इत्यादावऽयोग्यता ।

उद्देश्यतावच्छेदकव्यापकत्वं च तत्समानाधिकरणाऽन्योन्याभावप्रतियोगितान-

---

वाच्यत्व विशेषमित्यर्थं । विधेये रूपे उद्देश्यतावच्छेदकव्यापकत्वमानोपायमाह–तस्येति, तस्य= यावत्त्वस्य, तद्धि यावत्त्व सकलघटेषु व्यासज्य वर्तते न तु प्रत्येकं पर्याप्येतियत्र यत्र घटत्वं तत्र तत्र तादृशयावत्त्वपर्याप्तिरस्त्येवेति तत्पर्याप्ते =तादृशयावत्त्वपर्याप्तेर्घटत्वव्यापकत्वं प्राप्तं यत्र यत्र रूपमस्ति तत्र तत्र घटनिष्ठयावत्त्वपर्याप्तिनियमो नास्ति– पटादौ व्यभिचारादिति तादृशपर्याप्तौ रूपादिनिष्ठव्याप्यत्वमपि प्राप्तमिति शब्दाद् घटत्वादिव्यापके यावत्त्वे रूपादिव्याप्यत्वस्य लाभे जाते तयोरपि=घट रूपयोरपि व्याप्यव्यापकभावोऽर्थादेव लभ्यते इत्यन्वयः । सर्वपदस्योद्देश्यतावच्छेदकव्यापकविधेयव्याप्यपर्याप्तिकयावत्त्वे शक्तिस्वीकारेण सर्वपदादेव तादृशयावत्त्वे घटत्वादिव्यापकत्वं रूपादिव्याप्यत्वं च लभ्यते इत्यभिप्रायेणोक्तम्– शब्दादिति । यदि यावत्त्वं व्यासज्यवृत्ति न स्यात्तदा प्रत्येकघटेषु पृथक् पृथग्यावत्त्वापत्त्या कस्मिंश्चिदपि यावत्त्वे घटत्वादिव्यापकत्वं न स्यात्, व्यासज्यवृत्तित्वे तु सकलघटेष्वेकस्यैव यावत्त्वस्य सम्भवात्तादृशयावत्त्वे घटत्वव्यापकत्वं सम्भवतीत्यभिप्रायेणोक्तम्– व्यासज्यवृत्तितयेति । 'सर्वेषु घटेषु रूपम्' इत्यत्रापि घटस्योद्देश्यत्वाद् घटत्वव्यापकं रूपव्याप्यं यावत्त्वमत्र सर्वपदप्रवृत्तिनिमित्तमित्युक्तरीत्या रूपे घटत्वव्यापकत्वभानानुपपत्तिर्नास्ति । 'घटे न सर्वाणि रूपाणि' इत्यत्र सर्वपदस्य रूपपदसमानाधिकरणत्वाद् रूपत्वव्यापकयावत्त्वं सर्वपदप्रवृत्तिनिमित्तमिति तादृशयावत्त्वावच्छिन्नरूपाभावो घटे प्रतीयते । द्रव्यत्वव्यापकपर्याप्तिस्तु रूपव्याप्या न भवति– आकाशादौ व्यभिचारादिति रूपे द्रव्यत्वव्यापकत्वस्य बाधात् 'सर्वाणि द्रव्याणि रूपवन्ति' इत्यादि प्रयोगो न भवतीत्याह– द्रव्यत्वादीति । द्रव्यत्वव्यापकपर्याप्तौ रूपव्याप्यत्वस्य बाधादयोग्यता ।

उक्तयावत्त्वपर्याप्त्यर्थमुद्देश्यतावच्छेदकव्यापकत्वमुक्तं तत् परिष्करोति– उद्देश्यतेति, व्यापकत्वं द्विविधं भवति तत्रैकम्– 'व्याप्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्' यथा पर्वते धूमसमानाधिकरणात्यन्ताभावो घटादेर्भवतीति तादृशात्यन्ताभावप्रतियोगितावच्छेदकधर्मो घटत्वादिकं तद्वत्त्वं घटादौ प्राप्तं वह्नेस्तु धूमाधिकरणेऽत्यन्ताभावो न भवतीति वह्नित्वे धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वं प्राप्तं तादृशवह्नित्वधर्मवत्त्वं वह्नौ यत्प्राप्तं तदेव धूमव्यापकत्वम्. द्वितीयं च– 'व्याप्यसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वम्' यथा पर्वते धूमसमानाधिकरणः 'पर्वतो जलवान्न' इत्याकारक एवान्योन्याभावः सम्भवति तत्प्रतियोगी जलवान् प्रतियोगितावच्छेदकत्वं जलवद्विशेषणत्वाज्जले प्राप्तम् 'वह्निमान्न' इत्याकारकस्तु पर्वतेऽन्योन्याभावो न भवतीति वह्नौ यत् तादृशाऽन्योन्याभावप्रतियोगितानवच्छेदकत्वं प्राप्तं तदपि धूमव्यापकत्वमेव प्रकृते च यद्यत्यन्ताभावघटितं व्यापकत्वं गृहीतं स्यात्तदा

वच्छेदकत्वं तेन रूपादिव्याप्यपर्याप्तेर्द्रव्यत्वादिमन्निष्ठात्यन्ताभावप्रतियोगितानव-च्छेदकधर्मवत्त्वेपि न क्षतिः। घटत्वादिव्यापकयावत्त्वपर्याप्तिश्च न घटादिव्यक्तिभे-दाद् भिद्यते. अतो न घटत्वादिव्यापकताया अनुपपत्तिः।

विधेयव्याप्यत्वं च व्यभिचारित्वसंबन्धावच्छिन्नप्रतियोगिताकतत्तद्विधेयताव

---

' सर्वाणि द्रव्याणि रूपवन्ति ' इत्यपि प्रयोग स्यात्– अत्रोद्देश्यतावच्छेदक द्रव्यत्व तदधिकरणे नीरूपे आकाशेपि ' रूप नास्ति ' इत्याकारकरूपात्यन्ताभावसत्त्वेपि ' प्रमेय नास्ति ' इत्याकारकप्रमेयात्यन्ताभावस्तु नास्त्येव– आकाशे शब्दस्य सत्त्वादेव शब्दस्यापि प्रमेयत्वात् तथा च प्रमेयत्व द्रव्यत्ववदाकाशनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकमेव धर्मस्तादृशप्रमे-यत्वधर्मवत्त्व च रूपव्याप्यपर्याप्तावस्त्येवेति रूपव्याप्यपर्याप्तौ द्रव्यत्वव्यापकत्वलाभात् ' सर्वाणि द्रव्याणि रूपवन्ति' इतिप्रयोगापत्ति प्राप्ता न चैव प्रयोगो भवतीत्यत्रान्योन्याभावघटित व्यापकत्व प्राह्य तथा च द्रव्यत्वाधिकरणे आकाशे ' आकाश रूपव्याप्यपर्याप्तिमन्न ' इत्या-कारकोऽन्योन्याभावोस्त्येव– आकाशे रूपाभावात् तादृशान्योन्याभावप्रतियोगि रूपव्याप्यपर्या-प्तिमत् तद्विशेषणीभूतरूपव्याप्यपर्याप्तौ तादृशान्योन्याभावप्रतियोगितावच्छेदकत्वमेव प्राप्तमिति रूपव्याप्यपर्याप्तौ द्रव्यत्वव्यापकत्वाऽलाभात् ' सर्वाणि द्रव्याणि रूपवन्ति ' इतिप्रयोगस्यापत्ति-र्नास्ति– रूपव्याप्यपर्याप्तावाकाशादौ द्रव्यत्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्व-स्य कथमप्यऽसभवात्, ' सर्वे घटा रूपवन्त ' इत्यत्र तु घटत्वावच्छिन्ने ' रूपव्याप्यपर्याप्ति-मन्न ' इत्याकारकोऽन्योन्याभावो न सभवति– घटेषु रूपसत्त्वादिति घटत्वसमानाधिकरणान्योन्या-भावप्रतियोगितानवच्छेदकत्वाद् रूपव्याप्यपर्याप्तौ तादृशानवच्छेदकत्वरूप घटत्वव्यापकत्व लब्धमिति 'सर्वे घटा रूपवन्त ' 'सर्वेषु घटेषु रूपम्' इत्यादिप्रयोग उपपद्यते। अन्योन्याभावघ-टितव्यापकत्वग्रहणस्य फलमाह– तेनेति। क्षतिरिति– ' सर्वाणि द्रव्याणि रूपवन्ति ' इत्यादिप्र-योगापत्तिरूपा क्षतिर्नास्तीत्यर्थः। यदि घटत्वादिव्यापकयावत्त्वपर्याप्तिर्घटादिव्यक्तिभेदाद् भिद्येत तदैतद्घटव्यक्तिवृत्तियावत्त्वपर्याप्त्यभाववत्यामपि घटान्तरव्यक्तौ घटत्वस्य सत्त्वात् तादृशघटत्वव्या-पकत्व यावत्त्वपर्याप्तौ न स्यादेव न च सा पर्याप्तिर्व्यक्तिभेदाद् भिद्यते इति न तादृशपर्याप्तौ घटत्वादिव्यापकत्वस्यानुपपत्तिरित्याह– घटत्वादीति।

उक्तयावत्त्वपर्याप्तौ यद् विधेयव्याप्यत्वमुक्त तत् परिष्करोति– विधेयव्याप्यत्वमिति, व्याप्यत्व विधेयाभाववद-वृत्तित्वरूप व्याप्यत्व विवक्षित स्यात्तदा ' सर्वे घटाः प्रमेया ' इत्यादिप्रमेयत्वादिकेवलान्वयिवि-धेयकस्थले प्रमेयत्वाभावस्य सर्वत्रैवाऽप्रसिद्धत्वात् सर्वपदार्थबोधानुपपत्ति स्यादित्यत्र विधेयव्या-व्यापकाभाववदऽवृत्तित्वमप्यस्ति– धूमादीनां वह्न्याद्यभाववदऽवृत्तित्वादित्यत्र यदि विधेयाभाववद-प्यत्व व्यभिचारित्वसबन्धावच्छिन्नेत्यादिरूप विज्ञेयम्, व्यभिचारित्वेति– व्यभिचारित्वसबन्धा-वच्छिन्ना प्रतियोगिता यस्य तथा तत्तद्विधेयतावच्छेदकावच्छिन्ना प्रतियोगिता यस्यैतादृशो यो व्यभिचारित्वसबन्धावच्छिन्नप्रतियोगिताकतत्तद्विधेयतावच्छेदकावच्छिन्नप्रतियोगिताकस्तत्तद्विधेया-भावस्तादृशविधेयाभाववत्त्वमत्र विधेयव्याप्यत्व ग्राह्य व्यभिचारित्वसबन्धश्चात्र स्वाभाववद्वृत्तित्व-

च्छेदकावच्छिन्नप्रतियोगिताकतत्तद्विधेयाभाववत्त्वम्. अतो विधेयतावच्छेदकावच्छिन्नस्य यत्र केवलान्वयित्वं तत्र नाऽप्रसिद्धिः— व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकस्यैव तथाविधाभावस्य प्रसिद्धत्वात् ।

अत्रोद्देश्यतावच्छेदकविधेयतावच्छेदकघटत्वरूपत्वादीनामुपलक्षणतयाऽनुगमकं तादृशावच्छेदकत्वमेव अतो न शक्त्यानन्त्यं न वाऽपूर्वधर्मव्यापकत्वादिभानानुपपत्तिर्न वा तादृशावच्छेदकत्वभानापत्तिः ।

---

संबन्धो विज्ञेयस्तथा च स्वाभाववद्वृत्तित्वसंबन्धावच्छिन्नप्रतियोगिताकव्यापकाभाववत्त्वं व्याप्यत्वमितिलब्धं यथा धूमे वह्न्यभाववद्वृत्तित्वं नास्तीति तादृशसंबन्धेन धूमे वह्निस्तु न संभवति किंतु वन्ह्यभाव एव वर्तेत इति वह्न्यभाववद्वृत्तित्वसंबन्धेन धूमे यद् वह्न्यभाववत्त्वं तद् वह्निव्याप्यत्वमेव तथा ' सर्वे घटाः प्रमेयाः ' इत्यत्र विधेयं प्रमेयत्वं सर्वत्र स्वरूपसम्बन्धेनैव वर्तते न तु स्वाभाववद्वृत्तित्वसंबन्धेनेति स्वाभाववद्वृत्तित्वसंबन्धेनोक्तपर्याप्तौ यत् प्रमेयत्वाभाववत्त्वं तदेव प्रमेयत्वव्याप्यत्वमस्तीति न सर्वपदार्थबोधानुपपत्तिरित्याह— अत इति । अत्र च स्वपदं परिचायकमात्रं न तु प्रमेयत्वपरामर्शकमऽन्यथा प्रमेयत्वाभावस्याप्रसिद्धया शाब्दबोधानुपपत्तिस्तदवस्थैव स्यात्, किंवा व्यभिचारित्वसंबन्धस्य स्वाभाववद्वृत्तित्वसंबन्धेति व्याख्या न कार्या व्याप्ये व्यापकव्यभिचारित्वं नास्त्येवेति तेन संबन्धेन व्यापकाभाववत्त्वं सुलभमेव तथोक्तपर्याप्तौ प्रमेयत्वव्यभिचारित्वं नास्तीति व्यभिचारित्वसंबन्धेन प्रमेयत्वाभाववत्त्व विज्ञेयम् । ' सर्वे घटा रूपवन्तः ' इत्यत्र च घटत्वव्यापकपर्याप्तावुक्तसंबन्धेन रूपाभाववत्त्वमस्त्येव— उक्तपर्याप्तावुक्तसंबन्धेन रूपस्यासंभवादित्यर्थः । उक्ताभावस्य प्रसिद्धिमाह— व्यधिकरणेति, यथा पटसत्त्वेपि घटत्वेन पटो नास्तीति व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकः पटाभावः प्रसिद्धस्तथा व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकोप्यभावः प्रसिद्ध एव यथा भूतले संयोगेन घटसत्त्वेपि समवायसंबन्धेन घटाभावः प्रसिद्धस्तथा प्रकृतेपि विधेयतावच्छेदकसंबन्धेन तथाविधाभावस्य=विधेयाभावस्याऽप्रसिद्धत्वेपि व्यधिकरणेन व्यभिचारित्वसंबन्धेन तु विधेयाभावः प्रसिद्ध एव । यो यस्य यत्र संबन्धो न भवति स तस्य व्यधिकरणसंबन्धः, यो यस्य धर्मो न भवति स तस्य व्यधिकरणधर्म इति परिभाषा । वह्न्याद्यभाववति घटादीनां सत्त्वात्तत्र स्वाभाववद्वृत्तित्वसंबन्धस्य च प्रसिद्धिः ।

उद्देश्यतावच्छेदकघटत्वादीनामनुगमकमुद्देश्यतावच्छेदकत्वं विधेयतावच्छेदकरूपत्वादीनामनुगमकं विधेयतावच्छेदकत्वमतो न सर्वपदशक्तेरानन्त्यापत्तिः. न चापूर्वधर्मव्यापकत्वादिभानानुपपत्तिः— पूर्वमगृहीतस्यापि पटत्वादिधर्मस्योद्देश्यतावच्छेदकत्वेन रूपेण सुग्रहत्वात्, तादृशोद्देश्यतावच्छेदकत्वविधेयतावच्छेदकत्वयोः शाब्दबोधे मानापत्तिरपि नास्ति— तयोरुपलक्षणत्वस्वीकाराद् उपलक्षणस्य च शाब्दबोधे मानास्वीकारादित्याह— अत्रेति । एतत्सर्वं पूर्वमेव तदादिपदस्थले स्पष्टीकृतमस्ति ।

यद्यपि सामान्यत उद्देश्यतावच्छेदकत्वमऽव्यावर्तकमेव, उद्देश्यतावच्छेदक-
विधया स्वसमभिव्याहृतपदप्रतिपाद्यत्वं च तादृशपदजन्यशाब्दबोधात् प्राग्
दुर्ग्रहम्, तथापि तादृशपदप्रतिपाद्यत्वेन वक्तृबुद्धेर्वक्तृतात्पर्यस्य वा विषयत्वं
तथा वाच्यं तच्च प्रकरणादिना पूर्वमपि सुग्रहम् । स्वत्वाननुगमः पूर्ववत्समाधेयः ।
उद्देश्यविधेयभावश्च न विशेष्यविशेषणभावनियतोऽतः 'सर्वेषु घटेषु रूपम्'
इत्यादावपि घटत्वादिरूपत्वाद्योरुद्देश्यविधेयतावच्छेदकभावोऽक्षत एवेति न घटत्वा-
दिव्यापकरूपत्वाद्यवच्छिन्नव्याप्यपर्याप्तिकयावत्त्वभानानुपपत्तिः । इयं च व्युत्प-
त्तिरुद्देश्यवाचकपदसमानाधिकरणसर्वपदे ।

---

यद्यपीति- यद्यपि सामान्यत उद्देश्यतावच्छेदकत्वमऽव्यावर्तकमेव- सर्वेषामेव धर्माणामुद्देश्य-
तावच्छेदकत्वसम्भवात्, उद्देश्यतावच्छेदकविधया=उद्देश्यतावच्छेदकतया नामोद्देश्यतावच्छेदकत्वेन
रूपेण स्वसमभिव्याहृतपदप्रतिपाद्यत्वम्= स्व सर्वपदम्, स्वघटितानुपूर्वीघटकपदजन्यप्रतीतिविषयत्व
नाम सर्वपदेन सह समभिव्याहृतं यद् घटादिपदं तज्जन्यप्रतीतिविषयत्वं च तादृशपदजन्यशाब्द-
बोधात्=सर्वपदसमभिव्याहृतघटादिपदजन्यशाब्दबोधात् प्राग् दुर्ग्रहमेव यतो घटादिपदजन्यशा-
ब्दबोधे जाते एव घटादिपदजन्यप्रतीतिविषयत्वं ग्रहीतुं शक्यते न तु पूर्वमपि तथापि तादृशपद-
प्रतिपाद्यत्वेन=सर्वपदसमभिव्याहृतघटादिपदप्रतिपाद्यत्वेन रूपेण यद् वक्तृबुद्धिविषयत्वं वा वक्तृता-
त्पर्यविषयत्वं वा तदेव तथा नामोद्देश्यतावच्छेदकत्वं वक्तव्यं तच्च=वक्तृबुद्धेर्वक्तृतात्पर्यस्य वा
विषयत्वं च प्रकरणादिना पूर्वमपि=सर्वपदसमभिव्याहृतघटादिपदजन्यशाब्दबोधात् पूर्वमपि
सुग्रहमिति न काचिदनुपपत्तिरित्यर्थः । ननु "स्वसमभिव्याहृतपदप्रतिपाद्यत्वम्" इत्यत्र
स्वपदार्थनिवेशेनाऽननुगम स्यादेव- स्वपदस्य तत्तद्व्यक्तिपरत्वादित्याशङ्क्याह-स्वत्वेति ।
पूर्ववत्=तदादिपदस्थलोक्तरीत्यैवेत्यर्थः । तथा हि- 'स्वोद्देश्यतावच्छेदकव्यापकतादृशोद्देश्यताव-
च्छेदकावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयव्याप्यपर्याप्तिकयावत्त्वावच्छिन्नविषयताकत्वस्वजन्यत्वै-
तदुभयसम्बन्धेन सर्वपदविशिष्टो बोधो भवतु' इत्येव पदप्रकारकबोधविशेष्यक शक्तिज्ञान
स्वीकार्यमत्र च स्वपदार्थस्य सर्वपदघटकत्वान्नाऽननुगमः, सर्वपदजन्यबोधे चोक्तयावत्त्वावच्छिन्न-
विषयताकत्व सर्वपदजन्यत्वं चास्त्येवेत्यर्थः । उद्देश्येति, विशे-
"एव विशेष्यतावच्छेदकव्यापकताया १६४" इत्याद्युक्ताशङ्का समाधत्ते-
ष्यस्यैवोद्देश्यत्वं विशेषणस्यैव च विधेयत्वं भवतीति नियमो नास्ति येन 'सर्वेषु घटेषु रूपम्'
इत्यत्र घटस्योद्देश्यत्वं न स्यात् विशेष्यत्वाभावात् रूपस्य च विधेयत्वं न स्याद् विशेषणत्वा-
भावात् किं तु विशेषणस्याप्युद्देश्यत्वं विशेष्यस्यापि च विधेयत्वं भवतीति 'सर्वेषु घटेषु रूपम्'
इत्यत्र घटत्वस्योद्देश्यतावच्छेदकत्वं रूपत्वस्य च विधेयतावच्छेदकत्वमक्षतमेव यत्र घटत्व-
व्यापकरूपत्वाव्याप्यपर्याप्तिकयावत्त्वस्य सर्वपदेन भानानुपपत्तिर्नास्तीत्यर्थः । नन्वेवम् 'द्रव्ये
सर्वाणि रूपाणि' इत्यत्रापि सर्वपदेन द्रव्यत्वव्यापकरूपत्वव्याप्यपर्याप्तिकयावत्त्वस्य भानं स्याद्
[illegible] द्रव्यत्वव्याप्यपर्याप्तिद्रव्यत्वव्यापकताभावाद् आकाशादौ व्यभिचारादित्याशङ्क्याह-

विधेयवाचकपदसमानाधिकरणसर्वपदस्य च विधेयतावच्छेदकव्यापकोद्देश्यतावच्छेदकावच्छिन्नसंबन्धव्याप्यपर्याप्तिकं यावत्त्वमर्थः. अतः 'काले सर्वे वृत्तिमन्तः' 'कालः सर्वधर्मवान्' इत्यादौ सर्वपदेन वृत्तिमत्त्वादिव्यापककालादिसंबन्धव्याप्यपर्याप्तिकं यावत्त्वं प्रतीयते ।

अथ वा स्वार्थान्वयितावच्छेदकधर्मव्यापकतादृशधर्मावच्छिन्नान्वयितावच्छेदकधर्मावच्छिन्नव्याप्यपर्याप्तिकधर्मावच्छिन्नं सर्वपदार्थ इत्युद्देश्यविधेयभावं वि-

ह-इयं चेति । इयम्="उद्देश्यतावच्छेदकव्यापकविधेयव्याप्यपर्याप्तिको धर्मः सर्वपदप्रवृत्तिनिमित्तम् १३८" इत्याद्युक्ता व्युत्पत्तिः ।

'पृथिव्यां सर्वाणि रूपाणि' इत्यादिविधेयवाचकपदसमानाधिकरणसर्वपदस्य व्युत्पत्तिमाह— विधेयवाचकेति । विधेयतावच्छेदकव्यापिका उद्देश्यतावच्छेदकावच्छिन्नसंबन्धव्याप्या च या पर्याप्तिस्तादृशपर्याप्तिमद् यावत्त्वं विधेयवाचकपदसमानाधिकरणसर्वपदस्य प्रवृत्तिनिमित्तमित्यन्वयः । उदाहरणं तत्र समन्वयं चाह— अत इति । अत्र विधेयतावच्छेदकव्यापकत्वं हि विधेयतावच्छेदकसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वरूपं ग्राह्यम् । उद्देश्यतावच्छेदकावच्छिन्नसंबन्धश्चोद्देश्यानुयोगिकविधेयतावच्छेदकसंबन्धः स चोक्तस्थलयोः कालिकसंबन्धरूपः, रूपस्य विधेयत्वे समवायसंबन्धः । तादृशसंबन्धव्याप्यत्वं च तदभाववदवृत्तित्वरूपं ग्राह्यं किं वा पूर्ववद् व्यभिचारित्वसंबन्धावच्छिन्नप्रतियोगिताकतत्तदुद्देश्यतावच्छेदकावच्छिन्नप्रतियोगिताकतत्तदुद्देश्याभाववत्त्वरूपं ग्राह्य तथा च 'प्रमेयत्वं सर्वान्वयि' इत्यादिकेवलान्वय्युद्देश्यकस्थले अन्वयित्वव्यापकयावत्त्वपर्याप्तौ प्रमेयत्वसंबन्धव्याप्यत्वमानस्य नानुपपत्तिः । एवम् 'द्रव्ये सर्वाणि रूपाणि' 'पृथिव्यां सर्वाणि रूपाणि' इत्यादौ रूपव्यापकपृथिवीत्वादिव्याप्यपर्याप्तिकयावत्त्वं सर्वपदेन प्रतीयते— रूपव्यापकपर्याप्तेः पृथिवीत्वादिव्याप्यत्वादिति ।

उक्तरीत्योद्देश्यवाचकपदसमानाधिकरणसर्वपदस्य विधेयवाचकपदसमानाधिकरणसर्वपदस्य च पृथक् पृथग् व्युत्पत्तिमुक्त्वा लाघवाय तदुभयसाधारणामेकां व्युत्पत्तिमाह— अथ वेति । स्वार्थः सर्वपदार्थः । 'सर्वे घटा रूपवन्तः' इत्यत्र स्वार्थस्य घटे उद्देश्येऽन्वयोऽस्तीति स्वार्थान्वयितावच्छेदकधर्मो घटत्वं तद्व्यापिका तथा तादृशधर्मावच्छिन्नस्य=स्वार्थान्वयितावच्छेदकधर्मावच्छिन्नस्य नानोद्देश्यस्य योऽन्वयितावच्छेदकधर्मः=विधेयतावच्छेदकधर्मो रूपत्वं तदवच्छिन्नव्याप्या या पर्याप्तिस्तादृशपर्याप्तिको यो धर्मो यावत्त्वं तदवच्छिन्नं सर्वपदार्थः, अत्र घटस्यान्यसंबन्धेन रूपेऽन्वयो भवतीत्युद्देश्यस्य घटस्यान्वयितावच्छेदकधर्मो रूपत्वमिति ज्ञेयम् । 'पृथिव्यां सर्वाणि रूपाणि' इत्यत्र सर्वपदार्थस्य रूपेऽन्वयोऽस्तीति स्वार्थान्वयितावच्छेदकधर्मो रूपत्वं तद्व्यापिका तथा रूपत्वावच्छिन्नस्यान्वयितावच्छेदकधर्मः पृथिवीत्वं तदवच्छिन्नव्याप्या या पर्याप्तिस्तादृशपर्याप्तिको यो धर्मो यावत्त्वं तदवच्छिन्नं सर्वपदार्थः, [illegible]

शिष्याऽनिवेश्य सर्वसाधारण्येका व्युत्पत्तिः स्वीक्रियते। अन्वयित्वं च विशेष्य-विशेषणभावसाधारणम्।

'सर्वं प्रमेयम्' इत्यादौ वस्त्वादिपदाध्याहारमन्तरेण बोधोपगमे तदनुरोधेनाऽन्योन्याभावप्रतियोगितानवच्छेदकविधेयव्याप्यपर्याप्तिकयावत्त्वार्थकतापि सर्वपदस्य स्वीकार्या।

'अयं सर्वं घटं वेत्ति' इत्यादावेतदीयज्ञानविषयत्वत्वादिना विषयताऽनन्वयात् तादृशधर्मो नाऽन्वयितावच्छेदकः अन्वयितावच्छेदकविषयत्वत्वाद्यवच्छिन्नव्याप्यत्वप्रतिमसञ्जकमिति तत्रापि व्युत्पत्त्यन्तरं स्वयमूहनीयम्।

---

यितावच्छेदकधर्मः पृथिवीत्वम्, रूपसमुदायव्यापकपर्याप्ति पृथिवीत्वव्याप्यैव। नन्वऽन्वयित्वं तु विशेष्यस्यैव भवतीति कथमत्र विशेषणीभूतरूपादेरपि स्यादित्याशङ्कयाह—अन्वयित्वमिति।

ननु 'सर्वं प्रमेयम्' इत्यादिस्थले उद्देश्यवाचकवस्त्वादिपदाभावेनोद्देश्यतावच्छेदकधर्मोपस्थितिर्नास्तीति कथमुक्तपर्याप्तावुद्देश्यतावच्छेदकव्यापकत्वभानं स्यादित्याशङ्कयाह—सर्वमिति, तदनुरोधेन='सर्वं प्रमेयम्' इत्यादावुद्देश्यवाचकवस्त्वादिपदाध्याहारं विनापि जायमानसर्वपदार्थविषयकबोधानुरोधेन। घटत्वपटत्वाद्यवच्छिन्नप्रतियोगिताकभेदस्तु पटघटादौ सर्वत्रैव भवति केवलान्वयिप्रमेयत्वादिधर्मावच्छिन्नप्रतियोगिताको भेदस्तु क्वचिदपि न भवति—सर्वस्यैव प्रमेयत्वादिलऽन्योन्याभावप्रतियोगितानवच्छेदकभूतं यद् विधेयं प्रमेयत्वादि तद्व्याप्यपर्याप्तिकयावत्त्वमत्र सर्वपदस्य शक्यतावच्छेदकं निश्चेयमित्यर्थः। यावत्त्वपर्याप्ति प्रमेयत्वव्याप्येति शाब्दबोधः। 'सर्वं प्रमेयम्' इत्यादौ यत्रोद्देश्यवाचकपदं न भवति न च तस्याध्याहारोपि क्रियते तत्र यावत्त्वपर्याप्तावुद्देश्यतावच्छेदकव्यापकत्वस्य भानं न भवतीत्यभिप्रायः। 'सर्वं वस्तु प्रमेयम्' इत्यादौ यत्रोद्देश्यवाचकं वस्त्वादिपदं भवति तत्र तु पूर्ववदेव वस्तुत्वादिव्यापकप्रमेयत्वादिव्याप्यपर्याप्तिकयावत्त्वं सर्वपदेन प्रतीयते।

अयमिति—'अयं योगी सर्वं घटं वेत्ति' इत्यत्र घटमुद्दिश्य योगिज्ञानविषयत्वं विधीयते, अन्वयित्वं च विशेष्यविशेषणभावसाधारणमित्युक्तमेव विषयताया उपस्थितिश्च घटपदोत्तरद्वितीयया भवति। एतदीयज्ञानविषयत्वत्वेन रूपेण चात्र विषयताया द्वितीयया उपस्थितिर्न सम्भवति द्वितीयाया विषयतामात्रे शक्तिस्वीकारादित्येतदीयज्ञानविषयतात्वेन रूपेण विषयताया घटेऽन्वयोपि न सम्भवति तेन रूपेणानुपस्थितत्वाद् उपस्थितरूपेणैवान्वयसम्भवादिति तादृशधर्मः=एतदीयज्ञानविषयत्वत्वरूपधर्मो नाऽन्वयितावच्छेदकः सम्भवति येनात्र सर्वपदेन घटव्यापकैतदीयज्ञानविषयतात्वावच्छिन्नव्याप्यपर्याप्तिकयावत्त्वस्य पूर्वोक्तरीत्या भानं स्यात् किं तु विषयताया अत्र विषयतात्वेनैव रूपेणोपस्थितिर्घटेऽन्वयश्च सम्भवतीत्यन्वयितावच्छेदकं विषयतात्वमेव तादृशविषयतात्वावच्छिन्नव्याप्यत्वं यदि चोक्तपर्याप्तावुक्तं स्यात्तदा कतिपयघटज्ञानदशायामपि तादृशपर्याप्तौ घटत्वव्यापकत्वस्य विषयताव्याप्यत्वस्य च सत्त्वात् 'अयं सर्वं घटं वेत्ति' इतिप्रयोगातिप्रसङ्गः

'अत्र न सर्वाणि रूपाणि' इत्यादौ नञर्थप्रतियोगिविशेषणार्थकसर्वपदस्य स्वार्थान्वयितावच्छेदकरूपत्वादिव्यापकपर्याप्तिनिरूपकयावत्त्वार्थकतया तदवच्छिन्नाभाव एव प्रतीयते । व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकस्तादृशाभावो घटादावऽबाधित एवेति नाऽयोग्यता ।

न चाऽव्यासज्यवृत्तिगुणत्वादिपर्याप्तेरपि रूपत्वादिव्यापकतया गुणत्वादिसाधारणरूपत्वादिव्यापकपर्याप्तिकधर्मावच्छिन्नाभावो न घटादाविति कथमत्र

---

स्यादेव न चैतदिष्टमित्येतादृशस्थले सर्वपदस्य व्युत्पत्त्यन्तरं स्वयमूहनीयमित्यन्वयः । स्वयमूहनीयमिति– तथा हि विषयताया निरूपकत्वसम्बन्धेन यद्रूपावच्छिन्नेऽन्वयस्तद्रूपावच्छिन्नविषयताव्याप्यत्वं पर्याप्तौ विशेषमत्र च विषयताया निरूपकत्वसम्बन्धेनैतदीयज्ञानत्वावच्छिन्नेऽन्वय इत्येतदीयज्ञानविषयताव्याप्यघटत्वव्यापकपर्याप्तिकयावत्त्वमत्र सर्वपदार्थ इत्यर्थः ।

"एव घटे न सर्वाणि रूपाणि १३८" इत्याद्युक्तशङ्का समाधत्ते–अत्रेति, 'अत्र घटे न सर्वाणि रूपाणि' इत्यत्र नञर्थस्याभावस्य प्रतियोगिभूतं यद्रूपं तद्विशेषणीभूतं यद् यावत्त्वं तदर्थकं सर्वपदमस्तीति स्वार्थस्य सर्वपदार्थस्यान्वयितावच्छेदकं यद् रूपत्वं तद्व्यापकपर्याप्तिनिरूपकं यद् यावत्त्वं सर्वपदस्यात्र तादृशयावत्त्वार्थकतया नञा तदवच्छिन्नाभावः=तादृशयावत्त्वावच्छिन्नरूपाभाव एव प्रतीयते 'रूपसमुदायाभाववान् घट' इतिप्रतीतेः, तादृशाभावप्रतीतिश्च नानुपपन्ना । न तु तत्रोक्तो रूपत्वावच्छिन्नाभावः प्रतीयते इत्युच्यते येन घटादौ रूपत्वावच्छिन्नाभावस्य बाधादयोग्यता स्यादित्यर्थः । घटादौ रूपसमुदायाभावस्याऽबाधितत्वमाह–व्यासज्येति, यथा घटसत्त्वेऽपि 'घटपटौ न स्तः' इत्यत्र व्यासज्यवृत्ति यद् द्वित्वं तादृशद्वित्वावच्छिन्नप्रतियोगिताकोऽभावः प्रतीयते तथा प्रकृते घटे एकरूपसत्त्वेऽपि व्यासज्यवृत्ति यत् समुदायत्वं तादृशसमुदायत्वावच्छिन्नप्रतियोगिताको रूपसमुदायाभावो घटादावऽबाधित एवेति नाऽयोग्यतेत्यर्थः । समुदायत्वस्य सकलव्यासक्तत्वाद् व्यासज्यवृत्तित्वं विज्ञेयं द्वित्ववदिति । किंवात्र व्यासज्यवृत्तिधर्मो यावत्त्वमेव तच्चापि व्यासज्यवृत्तिर्मतात् ।

'अत्र न सर्वाणि रूपाणि' इत्यत्र यदुक्तम् 'रूपत्वव्यापकपर्याप्तिकयावत्त्वावच्छिन्नाभावः प्रतीयते तादृशाभावो घटादावऽबाधित एवेति नाऽयोग्यता' इति तत्राशङ्कते– न चेति, गुणत्वं प्रत्येकगुणपर्याप्तमस्ति न तु सर्वव्यासक्तमित्यऽव्यासज्यवृत्ति यद् गुणत्वं तद् रूपत्वव्यापकमस्ति–सकलरूपेषु गुणत्वसत्त्वादिति गुणत्वपर्याप्तिरपि रूपत्वव्यापिकेति तथा च गुणत्वसाधारणा या रूपत्वव्यापिका पर्याप्तिस्तादृशपर्याप्तिको यो धर्मो यावत्त्वं तादृशयावत्त्वावच्छिन्नरूपाभावो घटादौ बाधित एवेति कथं तस्य नञा प्रतीतिः स्यादित्यत्र='अत्र घटे न सर्वाणि रूपाणि' इत्यत्र कथं योग्यता ? योग्यताया बाधाभावरूपत्वादित्यन्वयः । गुणत्वपर्याप्ती रूपत्वव्यापिकास्तीति रूपादौ गुणत्वसाधारणरूपत्वव्यापकपर्याप्तेः सत्त्वात् तादृशपर्याप्तिकयावत्त्वमप्यस्ति घटादौ च तादृशयावत्त्वावच्छिन्नरूपस्यैव सत्त्वात् तादृशयावत्त्वावच्छिन्नप्रतियोगिताकरूपाभावो

योग्यतेति वाच्यम्, अव्यासज्यवृत्तिगुणत्वादेरेकैकमात्रवृत्तिधर्मावच्छिन्नपर्याप्ति-कूटस्यैव 'सर्वाणि रूपाणि गुणाः' इतिप्रतीत्याऽवगाहनात् सर्वसाधारणैकप-र्याप्तौ मानाभावात् प्रत्येकवृत्तिधर्मावच्छिन्नपर्याप्तिषु रूपत्वादेर्निरुक्तव्याप-कत्वाभावात् ।

'सर्वं द्रव्यं न रूपवत्' इत्यादौ द्रव्यत्वादिव्यापकयावत्त्वसामानाधिकरण्यमभा-वस्य प्रतीयतेऽतो नाऽयोग्यता । अनुयोगिविशेषणावच्छेदेनैव नञाऽभावः प्रत्या-

---

न सम्भवति येन तादृशाभावस्य योग्यता स्याद् यथा भूतले घटो घटे च घटत्वमिति भूतले घट-त्वावच्छिन्नाभावो न सम्भवति तथेति भावः । परिहरति–, अव्यासज्येति, 'सर्वाणि रूपाणि गुणाः' इति प्रतीत्या प्रत्येकस्मिन् रूपे गुणत्वपर्याप्तिः पृथक् पृथगेव प्रतीयते न तु सकलरूप-साधारणैका. तथा च 'सर्वाणि रूपाणि गुणाः' इतिप्रतीत्या ह्यव्यासज्यवृत्तिगुणत्वस्यैकैकमात्रवृ-त्ति =एकैकरूपव्यक्तिमात्रवृत्तिर्यो धर्मस्तद्व्यक्तित्व सामानाधिकरण्येन तदवच्छिन्नानां गुणत्वप-र्याप्तीनां कूटस्य=समुदायस्यैवावगाहनं भवतीति सर्वसाधारणैकपर्याप्तौ=सकलरूपसाधारणैकगुणत्व-पर्याप्तौ मानाभावाद् उक्तप्रत्येकवृत्तिधर्मावच्छिन्नगुणत्वपर्याप्तिषु रूपत्वनिरूपितव्यापकत्वमेव न सम्भवति येन त्वदुक्ता शङ्का सङ्गता स्यादित्यर्थः । यदि गुणत्वपर्याप्ती रूपत्वव्यापिका स्याच्चदा गुणत्वसाधारणरूपत्वव्यापकपर्याप्तिकयावत्त्वस्य रूपे सत्त्वात् तादृशयावत्त्वावच्छिन्नप्रतियोगि-ताकरूपाभावो घटादौ बाधितः स्यादपि न चैवमस्ति– उक्तप्रतीत्या गुणत्वपर्याप्ते रूपत्व-व्यापकत्वासम्भवादिति भावः । "रूपत्वादे" इतिपञ्चम्यर्थो निरूपितत्वं तस्य व्यापकत्वेऽन्वयः ।

सर्वमिति– 'सर्वं द्रव्यं न रूपवत्' इत्यत्र द्रव्यत्वव्यापकपर्याप्तिकयावत्त्वसामानाधिकरण्येन रूपाभावः प्रतीयते– आकाशादिनीरूपद्रव्ये द्रव्यत्वव्यापकयावत्त्वस्य रूपाभावस्य च सत्त्वादे-वेति नाऽयोग्यतेत्यर्थः । यदि द्रव्यत्वव्यापकयावत्त्वावच्छेदेन रूपाभाव उच्यते तदा योग्यता न स्यादपि द्रव्यत्वव्यापकयावत्त्वस्य पृथिव्यादौ सत्त्वेपि रूपाभावस्य बाधाद् न चैवमुच्यते इत्यर्थः । नञ्अनुयोगिनि यो धर्मो विशेषणं भवति तदवच्छेदेनैव नञाऽभावः प्रत्याय्यते यथा 'आकाशं न रूपवत्' इत्यत्राकाशत्वावच्छेदेन रूपाभावः प्रतीयते तथा 'सर्वं द्रव्यं न रूपवत्' इत्य-त्रापि द्रव्यत्वावच्छेदेन वा द्रव्यत्वव्यापकयावत्त्वावच्छेदेन वा नञा रूपाभावः प्रत्यायनीयो न तु द्रव्यत्वव्यापकयावत्त्वसामानाधिकरण्येन. द्रव्यत्वव्यापकयावत्त्वावच्छेदेन च रूपाभावो बाधितः एव पृथिव्यादौ तादृशयावत्त्वसत्त्वेपि रूपाभावस्याभावादिति 'सर्वं द्रव्यं न रूपवत्' इत्यत्र कथं योग्यता स्यात्?, यद्यनुयोगिविशेषणसामानाधिकरण्येनापि नञाऽभावः प्रत्याय्येत तदा 'द्रव्यं न रूपवत्' इत्यत्र द्रव्यत्वसामानाधिकरण्येन रूपाभावः प्रत्याय्येत द्रव्यत्वसामानाधि-करण्येन चाकाशादौ रूपाभावो न बाधित इति 'द्रव्यं न रूपवत्' इत्यपि प्रयोगः स्याद् न

यते- 'द्रव्यं न रूपवत्' इत्यादिप्रयोगादर्शनादिति कथमेतदुपपद्यताम् ? इति तु नाशङ्कनीयम्- व्यासज्यवृत्तिधर्माऽविशेषितानुयोगिकाभावबोधे तथानियमोपगमात् ।

यत्तु स्वरूपसंबन्धात्मकमभावानुयोगितावच्छेदकत्वमनुयोगिविशेषणे नञ्पदजन्याभावप्रतीत्या गृह्यते द्रव्यत्वादौ न तादृशं रूपवद्भेदानुयोगितावच्छेदकत्व-

च्चेन प्रयोगो भवतीति "अनुयोगिविशेषणावच्छेदेनैव नञाऽभावः प्रत्याय्यते" इतिनियमः स्वीकार्यस्तया च द्रव्यत्वावच्छेदेन रूपाभावस्य बाध एव पृथिव्यादौ रूपाभावस्याऽसत्त्वादिति 'द्रव्यं न रूपवत्' इतिप्रयोगापत्तिर्नास्ति प्रकृते च द्रव्यत्वव्यापकयावत्त्वावच्छेदेन रूपाभावस्य बाध एवेति 'सर्वं द्रव्यं न रूपवत्' इत्यत्र कथं योग्यतोपपद्येतेत्याशङ्क्याह- अनुयोगीति । उत्तरमाह- व्यासज्येति, यत्र व्यासज्यवृत्तिधर्मेणाऽनुयोगी विशेषितो न भवति तादृशानुयोगिकाभावबोधस्थले एव तथा=" अनुयोगिविशेषणावच्छेदेनैव नञाऽभावः प्रत्याय्यते " इत्येवं नियमः स्वीक्रियते यथा 'आकाशं न रूपवत्', 'द्रव्यं न रूपवत्' इत्यादौ- अत्रानुयोगिद्रव्यादिकं केनचिद् व्यासज्यवृत्तिधर्मेण विशेषितं नास्ति, 'सर्वं द्रव्यं न रूपवत्' इत्यत्र त्वनुयोगिभूतं द्रव्यं व्यासज्यवृत्तिधर्मेण यावत्त्वेन सर्वपदप्रयोगाद्विशेषितमस्तीत्यत्रोक्तनियमस्य समन्वयाभावाद् द्रव्यत्वव्यापकयावत्त्वसामानाधिकरण्येनैव नञा रूपाभावः प्रत्याय्यते न तु तादृशयावत्त्वावच्छेदेन येन बाधः स्यादित्यर्थः ।

परिहाराय मतान्तरमनुवदति- यत्त्वित्यादिना । अयमर्थः- अवच्छेदकत्वं द्विविधं भवति स्वरूपसंबन्धरूपमऽनतिप्रसक्तत्वरूपं च यथा 'घटो रूपवान्' इत्यत्र रूपपर्याप्त्यनुयोगितावच्छेदके घटत्वे यद् रूपपर्याप्त्यनुयोगितावच्छेदकत्वं तद् अनतिप्रसक्तत्वरूपमस्ति- यत्राकाशादौ रूपपर्याप्त्यनुयोगिता नास्ति तत्र घटत्वस्याप्यभावात्, 'द्रव्यं रूपवत्' इत्यत्र द्रव्यत्वे यद् रूपपर्याप्त्यनुयोगितावच्छेदकत्वं तद् अनतिप्रसक्तत्वरूपं नास्ति- आकाशे रूपपर्याप्त्यनुयोगिताया असत्त्वेपि द्रव्यत्वस्य सत्त्वात् किं तु स्वरूपसंबन्धरूपमेव- पृथिव्यादौ रूपपर्याप्त्यनुयोगितायाः द्रव्यत्वस्य च सत्त्वात्, सामानाधिकरण्यात् ),अनुयोगिविशेषणीभूतधर्मे च यदऽभावानुयोगितावच्छेदकत्वं तत् स्वरूपसंबन्धात्मकमेव नञ्पदजन्याभावप्रतीत्या गृह्यते द्रव्यत्वे च 'द्रव्यं न रूपवत्' इत्याकारको यो रूपवद्भेदस्तादृशभेदानुयोगितायास्तादृशम्=स्वरूपसंबन्धात्मकमवच्छेदकत्वं नास्ति अन्यथाऽऽकाशादौ रूपवद्भेदस्य द्रव्यत्वस्य च सत्त्वाद् द्रव्यत्वे स्वरूपसंबन्धात्मकस्य रूपवद्भेदानुयोगितावच्छेदकत्वस्यापत्त्या 'द्रव्यं न रूपवत्' इत्यपि प्रयोगः स्याद् न चैवं प्रयोगो भवतीति "स्वरूपसंबन्धात्मकमभावानुयोगितावच्छेदकत्वमनुयोगिविशेषणे नञ्पदजन्याभावप्रतीत्या गृह्यते" इतिस्वीकार्यं द्रव्यत्वे च स्वरूपसंबन्धात्मकं रूपवद्भेदानुयोगितावच्छेदकत्वं न स्वीक्रियते व्यर्थत्वाद्व्यावर्तकत्वाद्वा इति 'द्रव्यं न रूपवत्' इत्यादिप्रयोगस्यापत्तिर्नास्ति, द्रव्यत्वे रूपवद्भेदानुयोगितावच्छेदकत्वमनतिप्रसक्तत्वरूपं तु नास्त्येव- रूपवद्भेदा-

मतः 'द्रव्यं न रूपवत्' इत्यादयो न प्रयोगाः । व्यासज्यवृत्तिधर्मावच्छिन्नानु-
योगिताकाऽभावाभ्युपगमेन च 'सर्वं द्रव्यं न रूपवत्' इत्यादिप्रयोगा
उपपादनीयाः ।

न च व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाऽभावाभ्युपगमे कस्यापि रूपादेः
सर्वघटादिषु पर्याप्तिर्नास्तीति सर्वघटत्वाद्यवच्छिन्नेपि रूपादिमद्भेदसत्त्वेन 'सर्वे
घटा न रूपवन्तः' इत्यादिप्रयोगापत्तिरितिवाच्यम्, रूपादिपर्याप्तित्वेनानुगतपर्या-
प्तीनामनतिप्रसक्तेन घटादिनिष्ठयावत्त्वादिनाप्यवच्छेदात् तदवच्छेदेन रूपादिमद्-
भेदवृत्तौ विरोधात्, द्रव्यत्वादिव्यापकयावत्त्वस्य चातिप्रसक्ततया रूपादिपर्याप्ति-
त्वावच्छिन्नानामनवच्छेदकतया तदवच्छेदेन रूपादिमद्भेदवृत्तावऽविरोधादिति ।

नुयोगिताया अनधिकरणेपि पृथिव्यादौ द्रव्यत्वस्य सत्त्वेनातिप्रसक्तादित्यर्थ । 'सर्वं द्रव्य न
रूपवत्' इत्यादिप्रयोगाणामुपपत्तिमाह— व्यासज्येति, यथा घटे घटत्वसत्त्वेपि घटपटयोर्द्वि
योस्तु घटत्वं न वर्तत इति 'घटपटौ न घटत्ववन्तौ' इत्यत्र व्यासज्यवृत्तिधर्मो यद् द्वित्वं ता-
वद्धित्वावच्छिन्नानुयोगिताको घटत्वप्रतियोगिकभेद प्रतीयते— तादृशं दानुयोगिताया घटपट-
द्रव्यनिष्ठाया द्वित्वावच्छिन्नत्वात् तथा 'सर्वं द्रव्य न रूपवत्' इत्यत्रापि व्यासज्यवृत्तिधर्मो यद
यावत्त्व तादृशयावत्त्वावच्छिन्नानुयोगिताको रूपवत्प्रतियोगिकभेदो नञा प्रतीयते स च सम-
वत्येवेति 'सर्वं द्रव्य न रूपवत्' इत्यादिप्रयोगे न काचिदनुपपत्ति — पृथिव्यादिद्रव्ये रूपसत्त्व-
ऽप्याकाशादिसाधारणद्रव्यसमुदाये रूपस्याऽसत्त्वादित्यर्थ ।

ननु यद्युक्तरीत्या व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकोपि भेद स्वीक्रियते तदा तत्तद्रूपस्य वर्तमान
तत्तद्घटव्यक्तिष्वेव पर्याप्तत्वात् कस्यापि रूपस्य सकलघटेषु पर्याप्तिर्नास्तीति सर्वघटत्वावच्छे=
यावत्त्वसमानाधिकरणघटत्वावच्छिन्ने घटसमुदायेपि चालनीन्यायेन रूपवद्भेदसत्त्वेन नाम यावत्त्वाव-
च्छिन्नानुयोगिताकस्य रूपवत्प्रतियोगिकभेदस्य सम्भवेन 'सर्वे घटा न रूपवन्त' इत्यपि प्रयोग-
स्याद् न चैतदिष्टमित्याशङ्क्याह— न चेति । यदि व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताको भेदो
न स्वीक्रियते तदा शुद्धघटत्वावच्छेदेन रूपवद्भेदासम्भवात् 'सर्वे घटा न रूपवन्त' इतिप्रयोग-
स्यापत्तिर्नास्तीति । परिहारमाह— रूपादीति, रूपादिपर्याप्तित्वेन रूपेणानुगताना रूपादिपर्या-
प्तीना घटनिष्ठयावत्त्वमनतिप्रसक्तत्वादवच्छेदकमस्ति—यत्राकाशादौ रूपपर्याप्तिर्नास्ति तत्र घटनिष्ठ
यावत्त्वस्याभावादिति तदवच्छेदेन=घटनिष्ठयावत्त्वावच्छेदेन नाम यावत्त्वसमानाधिकरणघटत्वाव
च्छिन्न घटसमुदाये रूपवद्भेदो न सम्भवति— रूपवत्त्वस्यैव सत्त्वेन तद्विरोधादिति 'सर्वे घटा न
रूपवन्त' इतिप्रयोगस्यापत्तिर्नास्तीत्यर्थ । 'सर्वं द्रव्य न रूपवत्' इत्यादिप्रयोगस्योपपत्तिमाह—
द्रव्यत्वादीति, द्रव्यत्वव्यापकयावत्त्वम्=द्रव्यनिष्ठ यावत्त्व तु रूपपर्याप्त्यऽभाववत्याकाशेप्यस्तीत्य
तिप्रसक्तत्वाद् रूपपर्याप्तीनामवच्छेदक न सम्भवतीति तदवच्छेदेन=द्रव्यत्वव्यापकयावत्त्वाव-
च्छेदेन रूपवद्भेदसत्त्वे विरोधाभावात् 'सर्वं द्रव्य न रूपवत्' इतिप्रयोग उपपद्यते इत्यर्थ ।

तदसत्– उक्तरीत्यैवोपपत्तौ प्रतियोगितावच्छेदकादिमति तच्छून्यसाधारणव्यासज्यवृत्तिधर्मावच्छेदेनाऽन्योन्याभावादिवृत्तौ मानाभावात् । तादृशाभावोपगमे प्रतिबन्धकसमवहितेऽपि देशे व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकप्रतिबन्धकाभावबलात् कार्यापत्तेः, तत्र कारणतावच्छेदककोटौ विशेषणान्तरं प्रक्षिप्याऽऽपत्तिवारणे तु गौरवात् ।

---

यत्त्वित्यादिना प्रदर्शितं परिहरति– तदसदित्यादिना । उक्तरीत्या="द्रव्यत्वव्यापकयावत्त्वसामानाधिकरण्यमभावस्य प्रतीयते १४६" इत्याद्युक्तरीत्यैव 'सर्वं द्रव्यं न रूपवत्' इत्यादिप्रयोगोपपत्तौ सम्भवत्यां व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावो न स्वीकर्तव्य – गौरवादित्यर्थः । प्रतियोगितेति– 'सर्वं द्रव्यं न रूपवत्' इत्यत्र भेदप्रतियोगि रूपवत् प्रतियोगितावच्छेदकं रूपं तादृशरूपवति पृथिव्यादौ तादृशरूपशून्याकाशादौ च द्रव्यत्वव्यापकं यावत्त्वं साधारण्येन वर्तते इति तच्छून्यसाधारण = प्रतियोगितावच्छेदकीभूतरूपशून्याकाशादिसाधारणो यो व्यासज्यवृत्तिधर्मो यावत्त्वं तदवच्छेदेन प्रतियोगितावच्छेदकादिमति=रूपवत्पृथिव्यादौ अन्योन्याभावादिवृत्तौ=रूपवद्भेदसत्त्वे मानं नास्ति येन "द्रव्यत्वादिव्यापकयावत्त्वस्य चातिप्रसक्ततया १४८" इत्यादि त्वदुक्तं सङ्गतं स्यादित्यर्थः । व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावस्वीकारे दोषमाह– तादृशाभावेति, यदि व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकोऽप्यभावः स्वीक्रियेत तदा महानसे दाहप्रतिबन्धकमणिसत्ताकाले महानसत्वावच्छिन्नानुयोगिताकस्य दाहप्रतिबन्धकाभावस्याऽसम्भवेऽपि मठमहानसयोरुभयोस्तु प्रतिबन्धकमणिर्नास्त्येवेति मठमहानसोभयत्र व्यासज्यवृत्ति यद् द्वित्वं तादृशद्वित्वावच्छिन्नानुयोगिताकस्य प्रतिबन्धकाभावस्य महानसे सत्त्वादेव प्रतिबन्धकसत्त्वेऽपि दाहादिकार्यं स्यादेव, न चैवं भवतीति न व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकोऽभावः स्वीक्रियते इत्यर्थः । अभावपदेनाऽत्यन्ताभावोऽन्योन्याभावश्च ग्राह्यः । व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकस्त्वभावः स्वीक्रियते इत्यवधार्यम् । प्रतिबन्धकसमवहिते=प्रतिबन्धकविशिष्टे । ननु व्यासज्यवृत्तिधर्माऽनवच्छिन्नानुयोगिताकस्यैव प्रतिबन्धकाभावस्य प्रकृते कारणत्वं वक्ष्यमाणतया च प्रतिबन्धकसमवहिते देशे उक्तरीत्या व्यासज्यवृत्तिद्वित्वादिधर्मावच्छिन्नानुयोगिताकस्य प्रतिबन्धकाभावस्य सत्त्वेऽपि व्यासज्यवृत्तिधर्मानवच्छिन्नानुयोगिताकस्य महानसत्वाद्यवच्छिन्नानुयोगिताकस्य कारणीभूतस्य प्रतिबन्धकाभावस्याऽसत्त्वादेव दाहादिकार्योत्पत्तिर्नास्तीति 'सर्वं द्रव्यं न रूपवत्' इत्युक्तरीत्या व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावस्वीकारे न काचिदापत्तिरित्याशङ्क्याह– तत्रेति । तत्र=उक्तकार्यापत्तिस्थले । कारणतावच्छेदककोटौ=प्रतिबन्धकाभावादौ । विशेषणान्तरम्=व्यासज्यवृत्तिधर्मानवच्छिन्नानुयोगिताकत्वाभावत्वादिविशेषणम् । उक्तं गौरवदोषमाह– गौरवादिति, एवं हि गुरुधर्मस्य कारणतावच्छेदकत्वापत्त्या गौरवं स्यादिति व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभाव एव न स्वीकार्य इत्यर्थः ।

अथ 'सर्वं द्रव्यं न रूपवत्' इत्यादौ द्रव्यत्वादिव्यापकपर्याप्तौ विधेयीभूतरूपवद्भेदव्याप्यत्वस्य बाधितत्वादयोग्यत्वं दुर्वारमेवेतिचेत् ? न—तत्र विधेयव्याप्यत्वभानानुपगमात्, खण्डशो विभिन्नशक्त्युपगमेन कचित् तदंशपरित्यागेन बोधे विरोधविरहात् ।

'सर्वं गगनम्' इत्यादिप्रयोगाभावाद् यावत्त्ववदनेकत्वमपि सर्वपदार्थः, तच्च स्वार्थाभेदान्वय्युद्देश्यतावच्छेदकसमानाधिकरणभेदप्रतियोगित्वमेव । भेदश्च सामानाधिकरण्यनिरूपकत्वोभयसंबन्धेन प्रतियोगिताविशिष्टान्यो ग्राह्योऽतो न

ननु ' सर्वं द्रव्य न रूपवत् ' इत्यत्र द्रव्यमुद्देश्य रूपवद्भेदश्च विधेयोस्तीति द्रव्यत्वव्यापक-
पर्याप्तावुक्तरीत्या विधेयीभूतरूपवद्भेदव्याप्यत्वमपेक्षितमस्ति तन्नोपपद्यते रूपवद्भेदाभावस्यापि
पृथिव्यादौ द्रव्यत्वव्यापकपर्याप्ते सत्त्वात्. प्रत्युत द्रव्यत्वव्यापकपर्याप्तौ रूपवद्भेदव्यापकत्वम-
बास्तीत्याशङ्कते— अथेति । परिहरति— नेति, तत्र='सर्वं द्रव्य न रूपवत् ' इत्यत्र द्रव्यत्वव्या-
पकपर्याप्तौ विधेयव्याप्यत्वभान न स्वीक्रियते इति रूपवद्भेदव्याप्यत्वस्य बाधेपि क्षतिर्नास्ती-
त्यर्थः । ननूक्तरीत्योद्देश्यतावच्छेदकव्यापकविधेयव्याप्यपर्याप्तिरूपयावत्त्वे सर्वपदस्य शक्तिरस्तीति
पर्याप्तौ विधेयव्याप्यत्वांशापरित्याग कथ स्यादित्याशङ्क्याह—खण्डश इति, सर्वपदस्योद्देश्यतान-
च्छेदकव्यापकपर्याप्तिरूपयावत्त्वे पृथक् शक्तिरस्ति विधेयव्याप्यपर्याप्तिरूपयावत्त्वे च पृथक् शक्ति-
रस्तीति खण्डशो विभिन्नशक्त्युपगमेन कचित्='सर्वं द्रव्य न रूपवत्' इत्यादौ तदंशपरित्यागेन=
व्यापकत्वव्याप्यत्वयोर्मध्ये एकांशापरित्यागनापि बोधे विरोधो नास्तीत्यर्थः ।

सर्वशब्दस्य व्युत्पत्त्यन्तरमाह—सर्वमिति, यदि सर्वशब्दस्यानेकत्वमप्यर्थो न स्यात्तदाऽशेषत्व-
रूपस्य यावत्त्वस्य गगनेपि सम्भवात् यावत्त्वपर्याप्तौ च गगनत्वव्यापकत्वस्य शब्दव्याप्यत्वस्य च सम्भ-
वात् 'सर्वं गगन शब्दवत्' इत्यपि प्रयोग स्याद् न चैव प्रयोगो भवतीत्यनेकत्वमपि सर्वपदार्थ
स्तादृशवक्ष्यमाणस्वरूपस्यानेकत्वस्य चाकाशेऽसम्भवात् 'सर्वं गगनम्' इत्यादिप्रयोगापत्तिर्नास्ती-
त्यर्थः । अनेकत्व परिष्करोति—तच्चेति, स्वार्थस्य=सर्वपदार्थस्य योऽभेदा न्वयस्तादृशाभेदान्वयस्य
यद् उद्देश्यतावच्छेदक तत्समानाधिकरणो यो भेद =तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदस्तत्प्रति-
योगित्वमेवाऽनेकत्व गगने च गगनव्यक्त्यन्तरत्वावच्छिन्नप्रतियोगिताको भेदो न सम्भवति—
गगनव्यक्तेरेकत्वादिति 'सर्वं गगनम्' इत्यादिप्रयोगापत्तिर्नास्ति. घटादौ च तद्व्यक्तित्वावच्छिन्न
प्रतियोगिताको भेद सम्भवतीति 'सर्वे घटा ' इत्यादिप्रयोग उपपद्यते इत्यर्थ । ननु गगनेपि
घटगगनोभयभेदस्य द्वित्वावच्छिन्नप्रतियोगिताकस्य सम्भवेन तत्प्रतियोगित्वस्य गगनेपि सत्त्वा-
त्तादृशभेदमादाय 'सर्वं गगनम्' इतिप्रयोगापत्तिरस्तीत्याशङ्क्याऽनेकत्वघटकभेद परिष्करोति—
भेदश्चेति, अत्र भेदपदेन सामानाधिकरण्यनिरूपकत्वैतदुभयसम्बन्धेन प्रतियोगिताविशिष्टो यो भेद-
स्तदन्यो भेदो ग्राह्य स च तद्व्यक्तित्वावच्छिन्नप्रतियोगिताको भवति उक्तप्रतियोगिताविशिष्टस्तु
भेदो द्वित्वावच्छिन्नप्रतियोगिताको भवति तथा हि—यत्र घटे द्वित्वावच्छिन्नप्रतियोगिताको घटगगनोभ-

द्वित्वाद्यवच्छिन्नभेदमादायातिप्रसङ्गः । एतादृशोभयधर्मावच्छिन्ने शक्तिरेकैवातो नैकधर्मं परित्यज्यापरमादाय बोधः कदाचिदपीति न कतिपयानेकतात्पर्येणाऽशेषकतात्पर्येण वा सर्वशब्दः प्रयुज्यते ।

'चैत्रो दधि भुङ्क्ते, मैत्रः पयो भुङ्क्ते, देवदत्तो घृतं भुङ्क्ते, विष्णुमित्रः सर्वमेव' इत्यादौ सर्वपदेन प्रत्येकं दधिपयोघृतानां भोजनकर्मतया प्रतिपादनाद् यद्रूपावच्छिन्ने पदान्तरोपस्थाप्यार्थे स्वार्थान्वयस्तद्रूपावच्छिन्नान्विततया यावद्धर्मा-

---

यभेदो भवति तत्र तत्प्रतियोगिताऽपि भवत्येव घटस्यापि तादृशभेदप्रतियोगित्वादिति तादृशभेदे सामानाधिकरण्यम्=स्वप्रतियोगितासामानाधिकरण्यमपि प्राप्तं तादृशप्रतियोगिताया निरूपकत्वात् निरूपकत्वमपि प्राप्तमिति द्वित्वावच्छिन्नप्रतियोगिताकभेदः सामानाधिकरण्यनिरूपकत्वैतदुभयसंबन्धेन प्रतियोगितानिविशिष्टो जातः स चात्र भेदपदेन न ग्राह्यो येन द्वित्वावच्छिन्नभेदमादाय 'सर्वं गगनम्' इत्यादिप्रयोगातिप्रसङ्गः स्यात्, तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदस्तूक्तसंबन्धद्वयेन प्रतियोगिताविशिष्टो न भवति तत्प्रतियोगिताया अन्यघटादिव्यक्तौ सत्त्वात् तस्य चान्यघटादिव्यक्तौ सत्त्वात्. आकाशे च तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगित्वस्य बाधात् 'सर्वं गगनम्' इतिप्रयोगापत्तिर्नास्तीत्यर्थः । तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदेपि किंचिद्भेदीयप्रतियोगितासामानाधिकरण्यं केवलमस्त्येव—तादृशभेदाधिकरणघटे स्वभेदप्रतियोगितायाः सत्त्वात्, तथा स्वप्रतियोगितानिरूपकत्वमपि केवलमस्त्येवेत्यभिप्रायेण तद्व्यवच्छेदाय सामानाधिकरण्यनिरूपकत्वैतदुभयसंबन्धस्य निवेशः कृतः । अत्र 'भेदश्च सामानाधिकरण्यसंबन्धेन स्वप्रतियोगिताविशिष्टान्यो ग्राह्यः' इत्यपि साधुः। एतादृशेति—एतादृशोभयधर्मावच्छिन्ने=यावत्त्वावच्छिन्नेऽनेकत्वावच्छिन्ने च सर्वपदस्यैकैव शक्तिरस्तीति नैकधर्मं परित्यज्यापरधर्ममादाय कदाचिदपि सर्वपदजन्यबोधो भवति तथा च कतिपयानेकनीलघटेष्वनेकत्वस्य सत्त्वेपि तादृशानेकत्वतात्पर्येण 'सर्वे घटा नीलाः' इतिप्रयोगो न भवति—तत्र यावत्त्वस्याभावात्, तथा गगनेऽशेषत्वरूपोक्तयावत्त्वस्य सत्त्वेपि तादृशयावत्त्वतात्पर्येण 'सर्वं गगनम्' इतिप्रयोगो न भवति—गगने उक्तानेकत्वस्याभावात्। 'सर्वे घटा रूपवन्तः' इत्यत्र तु घटेष्वनेकत्वमप्यस्ति यावत्त्वमप्यस्तीत्येतादृशस्थले सर्वशब्दः प्रयुज्यते इति न काचिदनुपपत्तिरापत्तिर्वेत्यर्थः । अनेकत्वयावत्त्वयोरेकशक्तिस्वीकारेण सर्वशब्दस्यानेकार्थत्वापत्तिरपि नास्ति—अनेकशक्तिमत एवानेकार्थत्वस्वीकारादित्यवधेयम् ।

सर्वशब्दस्य व्युत्पत्त्यन्तरमाह— चैत्र इत्यादिना । 'विष्णुमित्रः सर्वं भुङ्क्ते' इत्यत्र सर्वपदेन दधिपयोघृतानामेव भोजनकर्मत्वं प्रतिपाद्यते न तु पदार्थमात्रस्य. तदपि दधिपयोघृतेषु प्रत्येकमेव नाम कदाचित् दधि कदाचित् पयः कदाचित् घृतं कदाचिद् द्वय कदाचित् त्रितयमपि भुङ्क्ते इति. न तु विष्णुमित्रो यदा भुङ्क्ते तदोक्तदध्यादित्रयमेव भुङ्क्ते इति प्रतिपाद्यते. तथा चात्र यद्रूपावच्छिन्ने=भोजनत्वावच्छिन्ने पदान्तरोपस्थाप्यार्थे=भुजधातूपस्थाप्ये भोजने स्वकर्मकत्वसंबन्धेन स्वार्थान्वयः=उक्तदध्यादिसर्वपदार्थान्वयस्तद्रूपावच्छिन्नान्वित-

किंपदस्य जिज्ञासितेे शक्तिः, अत एव स्वीयजिज्ञासाज्ञापनाय किंपदघटितं प्रश्नवाक्यं प्रयुज्यते । तत्रोद्देश्यवाचककिंपदस्य स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकधर्मावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन वक्तृजिज्ञासितो धर्मः प्रवृत्तिनिमित्तम्, उपस्थाप्यतावच्छेदकानान्तमुपलक्षणतयाऽनुगमकम्— शाब्दबोधे तद्भानात् । एवं च 'कः पचति' इत्यादितः 'पाककृतित्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन वक्तृजिज्ञासितो यो धर्मस्तद्वान् पचति' इत्याकारकोऽन्वयबोधः, 'किंचिद्धर्मावच्छिन्नोद्देश्यकपाककर्तृत्वविधेयकज्ञानं भवतु' इत्याकारकजिज्ञासायास्तादृग्बोधविषयकतया तादृशेच्छाविषयीभूतज्ञानजनकात् 'ब्राह्मणः पचति' इत्याद्युत्तरवाक्यात् तन्निवृत्तिरिति तादृशप्रश्नानन्तरं तथैवोत्तरं प्रयुज्यते ।

---

कामायाऽऽह्रियन्ते सर्वेभ्यो ज्योतिष्टोम " इति । तदेतत्सर्वं पूर्वमीमांसाचतुर्थाध्यायतृतीयपादस्य दशमैकादशाधिकरणयोर्द्रष्टव्यम् । तथा च प्रकृते 'विष्णुमित्र सर्वम्' इत्यादावपि सर्वपदस्य साहित्यप्रकारेणोपस्थितौ तत्र पदार्थवाचकत्वं न सम्भवति किंतु प्रत्येकमेवेत्यर्थः ॥ इति सर्वपदम् ॥

---

अथ

## ॥ किंपदम् ॥

सम्प्रति किंपदशक्तिनिरूपणमारभते—किंपदस्येति । अत इति— यत किंपदस्य जिज्ञासाविषये शक्तिरत एव स्वीयजिज्ञासाबोधनाय किंपदघटितम् 'क पचति' इत्यादिप्रश्नवाक्यं प्रयुज्यते इत्यन्वयः । उद्देश्यबोधककिंपदस्य प्रवृत्तिनिमित्तमाह— तत्रेति । यथा 'कः पचति' इत्यत्र स्व किंपदं तत्समभिव्याहृतपदं पचतीतिपदं तदुपस्थाप्या पाककृतिरेव— आख्यातस्य लाघवार्थं कृतावेव तार्किकैः शक्तिस्वीकारात् ( तदेतत्सर्वं व्युत्पत्तिवादे द्रष्टव्यम् ) उपस्थाप्यतावच्छेदकधर्मः पाककृतित्वं तदवच्छिन्ना या पाककृतौ विधेयता तादृशविधेयतानिरूपिता या पाककर्तुरुद्देश्यता तादृशोद्देश्यताया अवच्छेदकत्वेन रूपेण वक्तृजिज्ञासितो यो धर्मो ब्राह्मणत्वादिः तदेवोद्देश्यवाचककिंपदस्य प्रवृत्तिनिमित्तं तादृशधर्मवान् जिज्ञासितः किंपदार्थ इत्यन्वयः । अत्र स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकस्य किंपदजन्यशाब्दबोधे भानं न भवतीति तत् विधेयतावच्छेदकपाककृतित्वादिधर्माणामुपलक्षणविधयैवानुगमकं भवति न तु विशेषणत्वेन— विशेषणस्य शाब्दबोधे भाननियमादित्याह— उपस्थाप्येति । तथा च 'स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन वक्तृजिज्ञासितो धर्मः किंपदप्रवृत्तिनिमित्तम्' इति निर्गलितम् । स्वयमेव समन्वयमाह— एवं चेति । यो धर्मः=ब्राह्मणत्वादिधर्मः । अन्वयबोधः=शाब्दबोधः, स चोत्तरदातुः श्रोतुर्भवति । जिज्ञासायाः स्वरूपमाह— किंचिदिति

न चैवम् 'प्रमेयः पचति' इत्युत्तरवाक्यमेव न कथं तादृशप्रश्नानन्तरं प्रयुज्यते ?– तज्जन्यज्ञानस्यापि तादृशेच्छाविषयत्वादितिवाच्यम्, स्वसमभिव्याहृतपदोपस्थाप्यविधेयन्यूनवृत्तिधर्मावच्छिन्ने एव तादृशकिंपदस्य शक्त्युपगमात् ।

अभेदेन स्वार्थान्वितोद्देश्यवाचकपदान्तरसमभिव्याहृतकिंपदशक्यतावच्छेदकगर्भे च स्वार्थाभेदान्वयितावच्छेदकत्वोपलक्षितधर्मन्यूनवृत्तित्वमपि धर्मांशे विशेषणं देयमतः 'को ब्राह्मणः पचति' इत्यादिप्रश्नानन्तरम् 'चैत्रः पचति' इत्याद्याकारकोत्तरवाक्यं प्रयुज्यते न तु 'मनुष्यः पचति' इत्यादिकम्– मनुष्य-

---

तादृशबोधविषयकतया=ब्राह्मणत्वावच्छिन्नविषयकबोधविषयकतया । तादृशेच्छाविषयीभूतम्= 'किंचिद्धर्मावच्छिन्नोद्देश्यकपाककर्तृत्वविधेयकज्ञानं भवतु' इत्याकारकेच्छाविषयीभूतं यज्ज्ञानं तादृशज्ञानजनकम्=ब्राह्मणत्वावच्छिन्नविषयकज्ञानजनकं यत् 'ब्राह्मणः पचति' इत्याद्युत्तरवाक्यं तादृशोत्तरवाक्यात् तन्निवृत्तिः=उक्तजिज्ञासानिवृत्तिर्भवतीति तादृशप्रश्नानन्तरम्= 'कः पचति' इत्यादिप्रश्नानन्तरं तथैव= 'ब्राह्मणः पचति' इत्येवमेवोत्तरं प्रयुज्यते इत्यन्वयः । स्पष्टमन्यत् ।

ननु पाककर्तरि ब्राह्मणत्ववत् प्रमेयत्वस्यापि सत्त्वात् तादृशप्रश्नानन्तरम्='कः पचति' इति प्रश्नानन्तरम् 'प्रमेयः पचति' इत्युत्तरवाक्यं कथं न प्रयुज्यते ? तज्जन्यज्ञानस्यापि='प्रमेयः पचति' इतिवाक्यजन्यज्ञानस्यापि तादृशेच्छाविषयत्वात्=उक्तप्रश्नवाक्यज्ञाप्यजिज्ञासाविषयत्वसंभवादित्याशङ्क्याह–न चेति । परिहारमाह–स्वसमभिव्याहृतेति, स्वं किंपदं तत्समभिव्याहृतपदं पचतीतिपदं तदुपस्थाप्यं यद् विधेयं पाककृतिस्तदपेक्षया न्यूनवृत्तिर्यो धर्मस्तदवच्छिन्ने एव तादृशकिंपदस्य=उद्देश्यवाचककिंपदस्य शक्तिः स्वीक्रियते प्रमेयत्वं तु न पाककृत्यपेक्षया न्यूनवृत्तीति 'प्रमेयः पचति' इत्युत्तरं न प्रयुज्यते ब्राह्मणत्वं तु न्यूनवृत्तीति 'ब्राह्मणः पचति' इत्युत्तरं प्रयुज्यते इत्यर्थः ।

'को ब्राह्मणः पचति' इत्यादिप्रश्नानन्तरम् 'चैत्रः पचति' इत्याद्येवोत्तरं प्रयुज्यते न तु 'मनुष्यः पचति' इत्याद्यपि त्वदुक्तनियमेन तन्नोपपद्यते मनुष्यत्वस्य पाककृत्यपेक्षया न्यूनवृत्तित्वादेवेत्याशङ्क्य तन्नियामकमाह–अभेदेनेति, अभेदेन=अभेदसम्बन्धेन स्वार्थान्वितं किंपदार्थान्वितं यद् उद्देश्यं तद्वाचकपदान्तरेण ब्राह्मणादिपदेन सह समभिव्याहृतं यत् किंपदं तच्छक्यतावच्छेदकगर्भे स्वार्थाभेदान्वयितावच्छेदकत्वोपलक्षितधर्मापेक्षया न्यूनवृत्तित्वमपि धर्मांशे=किंपदशक्यतावच्छेदकधर्मे विशेषणं देयं तथाऽभेदेन स्वार्थान्वितोद्देश्यवाचकपदान्तरसमभिव्याहृतकिंपदस्य स्वार्थाभेदान्वयितावच्छेदकत्वोपलक्षितधर्मन्यूनवृत्तिधर्मावच्छिन्ने शक्तिः स्वीकार्या तथा च 'को ब्राह्मणः पचति' इत्यत्र स्वार्थस्य किंपदार्थस्य जिज्ञासितस्य ब्राह्मणेन सहाऽभेदान्वयोऽस्तीति तद्वाचकब्राह्मणपदेन समभिव्याहृतस्य किंपदस्य स्वार्थाभेदान्वयी ब्राह्मणः स्वार्थाभेदान्वयितावच्छेदकं ब्र

त्वादेर्ब्राह्मणत्वाद्यन्यूनवृत्तित्वात् तदवच्छिन्नोद्देश्यकत्वेन ज्ञानविषयकेच्छायास्तत्राऽप्रतीतेः ।

एवं यत्रोद्देश्यतावच्छेदके किंपदार्थस्याऽभेदान्वयस्तत्र तदन्वयितावच्छेदकधर्मावच्छिन्ने विशेषणतापन्नतदन्वयितावच्छेदकधर्मन्यूनवृत्तिधर्मावच्छिन्नोद्देश्यतावच्छेदकताकप्रकृतविधेयज्ञानगोचरेच्छा किंपदेन बोध्यते एवं च प्रकृतसत्तानिष्ठविधेयतानिरूपितघटवृत्त्युद्देश्यतावच्छेदकतानिरूपितसंख्यात्वन्यूनवृत्तिधर्मनिष्ठावच्छेदकत्वेन जिज्ञासितो यो धर्मस्तद्वान् किंपदार्थः, अतः 'कति घटाः सन्ति' इत्यादौ डतिप्रत्ययार्थसंख्यादौ किंपदार्थस्य जिज्ञासितधर्मावच्छिन्नस्याऽभेदेनाऽन्वयात् संख्यात्वन्यूनवृत्तिदशत्वत्वाद्यवच्छिन्नोद्देश्यतावच्छेदकताकबोधजनकम् 'दशसंख्याका घटाः सन्ति' इत्याद्युत्तरं प्रयुज्यते ।

---

ब्राह्मणत्वे स्वार्थाभेदान्वयितावच्छेदकत्वोपलक्षितधर्मो ब्राह्मणत्व तदपेक्षया न्यूनवृत्तिर्या धर्मश्चैत्रत्वादि तदवच्छिन्ने शक्तिस्वीकारात् 'को ब्राह्मण पचति' इत्यादिप्रश्नानन्तरम् 'चैत्र पचति' इत्याद्याकारकमेवोत्तरं प्रयुज्यते न तु 'मनुष्य पचति' इत्याद्याकारक मनुष्यत्वादिधर्माणां ब्राह्मणत्वादिधर्मापेक्षया न्यूनवृत्तित्वाभावात् तदवच्छिन्नोद्देश्यकत्वेन=मनुष्यत्वाद्यवच्छिन्नोद्देश्यकत्वेन रूपेण जिज्ञासायास्तत्र='को ब्राह्मण पचति' इत्यादिप्रश्नस्थले प्रतीत्यभावादित्यर्थ ।

अभेदेनोद्देश्यतावच्छेदकान्वितकिंपदार्थबोधककिंपदस्यार्थमाह—एवमिति, तदन्वयितावच्छेदकधर्मावच्छिन्ने=किंपदार्थान्वयितावच्छेदको यो धर्मस्तदवच्छिन्ने विशेषणतापन्नो यस्तदन्वयितावच्छेदकधर्मस्तदपेक्षया न्यूनवृत्तिर्यो धर्मस्तदवच्छिन्ना उद्देश्यतावच्छेदकता यस्य यस्मिन् वा तादृश यत् प्रकृतविधेयविषयक ज्ञान तादृशज्ञानगोचरेच्छा किंपदेन तत्र बोध्यते इत्यन्वय । समन्वयमाह—एवं चेति, 'कति घटा सन्ति' इत्यत्रोद्देश्यो घट उद्देश्यतावच्छेदक च डतिप्रत्ययार्थभूता द्वित्वादिरूपासंख्या तादृशसंख्यायामेव किंपदार्थस्य जिज्ञासितधर्मावच्छिन्नस्य ( जिज्ञासितस्य ) अभेदेनान्वयोऽस्तीत्यत्र तदन्वयितावच्छेदकधर्म =किंपदार्थान्वयितावच्छेदकधर्म संख्यात्व तदवच्छिन्नाया संख्याया विशेषणतापन्नो यस्तदन्वयितावच्छेदकधर्म =किंपदार्थान्वयितावच्छेदकधर्म संख्यात्व तन्न्यूनवृत्तिधर्मो द्वित्वत्व त्रित्वत्व दशत्वत्वमित्यादिक तदवच्छिन्ना या द्वित्वत्रित्वादिसंख्यानिष्ठोद्देश्यतावच्छेदकता तादृशोद्देश्यतावच्छेदकताक यत् प्रकृतसत्तारूपविधेयविषयक ज्ञान तादृशज्ञानगोचरेच्छा=संख्याविषयकज्ञानगोचरेच्छा किंपदेनात्र बोध्यते इति प्रकृतसत्तानिष्ठा या विधेयता तन्निरूपिता या घटवृत्त्युद्देश्यता तादृशोद्देश्यताया या संख्यानिष्ठाऽवच्छेदकता तादृशावच्छेदकतानिरूपित यत् संख्यात्वन्यूनवृत्तिद्वित्वत्वत्रित्वत्वदशत्वत्वादिधर्मनिष्ठमवच्छेदकत्वम्=उद्देश्यतावच्छेदकतावच्छेदकत्व तेन रूपेण नाम संख्यात्वन्यूनवृत्तिधर्मनिष्ठोद्देश्यतावच्छेदकतावच्छेदकत्वेन रूपेण जिज्ञासितो यो धर्मो द्वित्वत्वदशत्वत्वादिधर्मस्तद्वानत्र किंपदार्थ इति 'कति घटा सन्ति' इत्यादिप्रश्ना नन्तर संख्यात्वन्यूनवृत्तिदशत्वत्वादिधर्मावच्छिन्ना या दशत्वादिसंख्यानिष्ठोद्देश्यतावच्छेदकता

यत्र चोद्देश्यतावच्छेदकीभूतविभक्त्याद्यर्थे भेदेन किंपदार्थान्वयः 'कस्य पुत्रः सुन्दरः' इत्यादौ तत्र यादृशसंबन्धेन यदवच्छिन्ने तदन्वयस्तादृशसंबन्धेन विशेषधर्मावच्छिन्नविशेषिततदवच्छिन्ननिष्ठोद्देश्यतावच्छेदकताकप्रकृतविधेयज्ञानगोचरेच्छा प्रतीयते ।

एवं विधेयवाचककिंपदस्य स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकतया जिज्ञासितो यो विशेषधर्म-

---

तादृशोद्देश्यतावच्छेदकताकबोधजनकम् 'दशसंख्याका घटाः सन्ति' इत्याद्युत्तरं प्रयुज्यते इत्यन्वयः । द्वित्वादिसंख्यायामत्रोद्देश्यतावच्छेदकताप्यस्ति द्वित्वत्वादिकमप्यस्तीत्युद्देश्यतावच्छेदकतासंख्यात्वन्यूनवृत्तिद्वित्वत्वादिधर्मावच्छिन्ना जातेत्यवधेयम् ।

भेदेनोद्देश्यतावच्छेदकान्वितकिंपदार्थबोधककिंपदस्यार्थमाह— यत्र चेति, 'कस्य पुत्रः सुन्दरः' इत्यत्रोद्देश्यं पुत्रः उद्देश्यतावच्छेदकं च षष्ठ्यर्थो जन्यत्वम्— किंचिज्जन्यत्वविशिष्टपुत्रस्योद्देश्यत्वात् तादृशविभक्त्यर्थजन्यत्वे किंपदार्थस्य जिज्ञासितस्य निरूपितत्वरूपभेदसम्बन्धेनान्वयोऽस्ति— 'किंनिरूपितजन्यत्वविशिष्टपुत्रः सुन्दरः' इतिबोधोदयात्, तथा चात्र यादृशसंबन्धेन=निरूपितत्वसम्बन्धेन यदवच्छिन्ने=षष्ठ्यर्थसम्बन्धत्वावच्छिन्ने जन्यत्वे तदन्वयः=किंपदार्थस्य जिज्ञासितस्यान्वयस्तादृशसम्बन्धेन=निरूपितत्वसम्बन्धेन (अस्य विशेषितेत्यनेनान्वयः) विशेषधर्मो यश्चैत्रत्वादिकं तदवच्छिन्नेन चैत्रादिना विशेषितं यत् तदवच्छिन्नम्=षष्ठ्यर्थसम्बन्धत्वावच्छिन्नं जन्यत्वं तन्निष्ठा उद्देश्यतावच्छेदकता यस्य यस्मिन् वा तादृशं जन्यत्वनिष्ठोद्देश्यतावच्छेदकताकं यत् प्रकृतविधेयज्ञानम्=सौन्दर्यविषयकज्ञानं तादृशज्ञानगोचरेच्छा 'कस्य पुत्रः सुन्दरः' इत्यादौ प्रतीयते इत्येतादृशप्रश्नानन्तरं तादृशजिज्ञासानिवर्तकम् 'चैत्रस्य पुत्रः सुन्दरः' इत्याद्युत्तरं प्रयुज्यते— 'चैत्रनिरूपितजन्यतावान् पुत्रः सुन्दरः' इत्यर्थः । जन्यत्वे चोद्देश्यतावच्छेदकतात्र स्पष्टैव ।

माधवेनाप्युक्तम्— "निषेकद्वारा जन्यतावान् पुत्रपदार्थः षष्ठ्यर्थश्च जन्यत्वं तत्र निरूपितत्वसंबन्धेन किंपदार्थान्वयस्तथा च सौन्दर्यत्वावच्छिन्नविधेयतानिरूपिता पुत्रत्वावच्छिन्नोद्देश्यता तन्निरूपिता या जन्यत्वावच्छिन्नावच्छेदकता तन्निरूपिता निरूपितत्वसम्बन्धावच्छिन्नावच्छेदकता तदवच्छेदकं येन जिज्ञासितनिरूपितत्वसम्बन्धप्रतियोगित्वन्यूनवृत्तिर्यो धर्मो निरूपितत्वसम्बन्धेन तदवच्छिन्नजन्यतावान् पुत्रः सुन्दर इत्यन्वयबोधः" इति ।

सम्प्रति विधेयवाचककिंपदस्य शक्तिमाह— एवमिति, यथा 'अयं कः' इत्यत्रेदम्पदेन पुरोवर्तिव्यक्तिमुद्दिश्य किंपदेन ब्राह्मणत्वादिविशेषधर्मविषयकजिज्ञासा क्रियते तथा च एवं किंपदं तत्समभिव्याहृतं पदम् 'अयम्' इतिपदं तदुपस्थाप्यो यः पुरोवर्तिब्राह्मणादिपिण्डस्तन्निष्ठोपस्थाप्यतावच्छेदकत्वं ब्राह्मणत्वादिधर्मे वर्तते इति तादृशोपस्थाप्यतावच्छेदकत्वोपलक्षितधर्मो ब्राह्मणत्वादिस्तदवच्छिन्ना या पुरोवर्तिनिष्ठोद्देश्यता तन्निरूपिता या किंपदार्थनिष्ठा विधेयता तादृशविधेयताया अवच्छेदकतया जिज्ञासितो यो विशेषधर्मो ब्राह्मणत्वादिः तदवच्छिन्नेन किंपदस्य शक्तिरस्तीति

"किमिन्दुः किं पद्मम्" इत्यादौ चाऽव्ययकिमो वाशब्दस्येव वितर्कोर्थः। वितर्कश्च मयोक्तः संभावनात्मकं ज्ञानं तदर्थस्य च विशेष्यतासंबन्धेन प्रथमान्तपदोपस्थाप्ये विशेष्ये. प्रकारितासंबन्धेन च तत्र विशेषणस्य चन्द्रादेरन्वयः--नामार्थेनाऽव्ययार्थस्य भेदान्वयेऽविरोधात्।

यत्र विशेषणवाचकपदमपि प्रथमान्तं तत्राभेदसंबन्धावच्छिन्नप्रकारिता संसर्गः, यत्र च प्रकृत्यर्थविशेष्यतया स्वार्थबोधकविभक्त्यन्तं पदं तत्र किंपदासत्त्वे तादृशविभक्त्यन्तसमुदायार्थस्य विशेष्ये यादृशसंबन्धेनान्वयस्तादृशसंसर्गावच्छिन्नप्रकारितेव तादृशार्थस्य किंपदार्थे संसर्गोऽतः 'किमिन्दु' इत्यादावभेदेन चन्द्रा-

---

"भवान् कस्य पुत्र.' इत्यत्रापि किंपदस्य मनुष्यत्वाद्यपेक्षया न्यूनवृत्तिचैत्र आद्यवच्छिन्ने शक्तिरस्ति तस्य चैत्रस्य निरूपितत्वसम्बन्धेन विधेयतावच्छेदके पष्ठ्यर्थजन्यत्वे ज नकत्वस्य चाश्रयतासम्बन्धेन पुत्रेऽन्वयो भवतीत्येतादृशप्रश्नानन्तरम् 'अहं चैत्रस्य पुत्र' इत्याद्युत्तरं प्रयुज्यते इत्यर्थः।

अव्ययकिंपदस्यार्थमाह—किमिन्दुरित्यादिना । सम्भावना चानेकधर्मिकविरुद्धानेककोटयवगाहिसंशयरूपा विज्ञेया । 'मुखं किमिन्दु' इत्यादौ तदर्थस्य=किंपदार्थस्य सम्भावनाया विशेष्यतासम्बन्धेन प्रथमान्तपदोपस्थाप्ये विशेष्यभूते मुखेऽन्वयो भवति—मुखे विशेष्यताया सत्त्वात्, तत्र=किंपदार्थसम्भावनाया च प्रकारितासम्बन्धेन विशेषणीभूतचन्द्रादेरन्वयोस्ति—चन्द्रादिनिष्ठप्रकारतानिरूपितप्रकारितायाः सम्भावनाया सत्त्वादिति चन्द्रादिप्रकारकसम्भावनाविशेष्यतया मुखादेर्बोधो जायते । ननु नामार्थेन मुखेन नामार्थस्योक्तवितर्कस्य कथं विशेष्यतारूपभेदसम्बन्धेनान्वयः स्यात् ? नामार्थयोरभेदान्वयस्यैवेष्टत्वादित्याशङ्क्याह—नामार्थेनेति, नामार्थेनाऽव्ययार्थस्य भेदान्वयेपि विरोधो नास्ति—अव्ययातिरिक्तनामार्थयोरेव भेदान्वये विरोधात्. अत्र च किंपदमव्ययमेवेति तदर्थस्य मुखे भेदसम्बन्धेनान्वये न कोपि विरोध इत्यर्थः । एवमेवात्र किंपदार्थेन चन्द्रादेरप्युक्तभेदसम्बन्धेनान्वये विरोधाभावो विज्ञेयः ।

उक्तव्यवस्था द्विधा विभजते—यत्रेति, यत्र="मुखं किमिन्दु" इत्यादौ विशेषणवाचकमिन्द्रादिपदमपि प्रथमान्तं भवति तत्रोक्तप्रकारिता ह्यभेदसम्बन्धावच्छिन्नैव संसर्गो भवति—अत्र किंपदाभावे 'मुखमिन्दु.' इत्यादावभेदसम्बन्धेनैवेन्दोर्विशेष्ये मुखेऽन्वयसम्भवात् तथा चात्राऽभेदसम्बन्धावच्छिन्नप्रकारितासम्बन्धेनेन्दो· सम्भावनाया तादृशसम्भावनायाश्च विशेष्यतासम्बन्धेन मुखेऽन्वयो भवतीत्यऽभेदेन चन्द्रादिप्रकारिका सम्भावना नियमेन प्रतीयते । यत्र चेति—'धनमिदं किं चैत्रस्य' इत्यत्र प्रकृत्यर्थचैत्रनिरूपितविशेष्यता षष्ठ्यर्थस्वत्वेऽस्ति—चैत्रस्य स्वनिरूपितत्वसम्बन्धेन तादृशस्वत्वेऽन्वयादिति प्रकृत्यर्थविशेष्यतया स्वार्थबोधिका या षष्ठी विभक्तिस्तादृशविभक्त्यन्तं चैत्रस्येतिपदमत्रास्तीत्यत्र किंपदासत्त्वे 'धनमिदं चैत्रस्य' इत्येवमुक्ते तादृशविभक्त्यन्तसमुदायार्थस्य=चैत्रस्वत्वस्य विशेष्ये धने यादृशसम्बन्धेन=आश्रयतासम्बन्धेनान्वयो भवति तत्र किंपदसत्त्वे 'धनमिदं किं चैत्रस्य' इत्यत्र तादृशसंसर्गावच्छिन्नैव=आश्रयतासम्बन्धावच्छिन्नैव प्रकारिता तादृशार्थस्य=चैत्रस्वत्वस्य किंपदार्थे सम्भावनायां संसर्गो भवतीत्याश्रयतासम्बन्धावच्छिन्नप्रकारितासं

दिप्रकारिका 'धनमिदं किं चैत्रस्य' इत्यादावाऽऽश्रयत्वादिसंबन्धेन चैत्रस्वत्वादिप्रकारिका संभावना नियमतः प्रतीयते । 'किमिन्दुः' इत्यादौ संभावनाबोधोत्तर तत्प्रयोजकाल्हादकत्वादिसाधर्म्यप्रतीतिस्त्वर्थादिति ।

कुत्सार्थकमपि क्वचित् किंपदं यथा ' किं गौः' इत्यादौ ॥

तत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने यत्पदस्य शक्तिः अत एव यत्पदेनार्थप्रत्यायने नियमतस्तत्पदाऽपेक्षा— तत्पदसमभिव्याहारज्ञानं विनोक्तानुगमकधर्माऽग्रहेण शक्तिपरिच्छेदस्यैवासंभवात् । तच्छब्दजन्यप्रतीतिपूर्वमपि तत्प्रतिपाद्यतया वक्तुरभिसन्धिः प्रकरणादिना सुग्रह इति न तच्छब्दजन्यप्रतीतेर्यत्पदशक्तिग्रहेऽपेक्षा ।

---

न्धेन चैत्रस्वत्वस्य विषयार्थसंभावनाया तादृशसंभावनायाश्च विशेष्यतासम्बन्धेन विशेष्येधने-
ऽन्वयो भवतीत्यत आश्रयत्वसम्बन्धेन चैत्रस्वत्वप्रकारिका संभावना नियमत प्रतीयते इत्यन्वय ।
"किमिन्दु " इत्यादौ तादृशसंभावनाबोधोत्तर या तादृशसंभावनाप्रयोजिका मुखचन्द्रयोराल्हा
दकत्वादिसाधर्म्यप्रतीतिर्जायते साऽर्थादेव जायते न तु व्यञ्जनया येन व्यञ्जनाख्यवृत्तेरस्वीकारे
स्वीकारापत्ति स्यादित्याह—किमिन्दुरिति ।

निन्दार्थकांकिंपदमाह—कुत्सार्थकमिति । किं गौ =निन्दितो गौरित्यर्थ ।

अत्र च 'उक्तजिज्ञासितविषयकत्वस्वत्व यत्नैतदुभयसम्बन्धेन किंपदविशिष्टो बोधो भवतु' इत्याकारक पदप्रकारकबोधविशेष्यकशक्तिज्ञान विज्ञेयमिति ॥ ॥ इति किंपदम् ॥

अथ

## ॥ यत्पदम् ॥

सम्प्रति यत्पदशक्तिनिरूपणमारभते— तत्पदेति । निगदव्याख्यातोऽय ग्रन्थ । यच्छब्द
प्रक्रम्यमाणपरामर्शक प्रक्रान्तपरामर्शकश्च भवति तत्र प्रथमस्यार्थमाह— तत्पदेति । वर्तमानका-
लिकोपक्रमविषय प्रक्रम्यमाण , भूतकालिकोपक्रमविषय प्रक्रान्त इतिविवेक । तत्पदप्रतिपाद्य
सन् यो वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मेण=घटत्वादिनाऽवच्छिन्नस्तस्मिन् प्रक्रम्यमाणपरा
मर्शकयत्पदस्य शक्तिरितिसार । अत एवेति— यतस्तत्पदप्रतिपाद्यतयैव वक्तृबुद्धिविषयतावच्छेद-
कत्वोपलक्षितधर्मावच्छिन्ने यत्पदस्य शक्तिरत एवेत्यर्थ । तत्पदापेक्षाया हेतुमाह— तत्पदेति,
तत्पदसमभिव्याहारज्ञानम्=यत्पदघटितवाक्यघटकत्वेन तत्पदश्रवण मितियावत्, उक्तानुगमकध
र्माग्रहेण=तत्पदप्रतिपाद्यत्वरूपधर्माग्रहेण । शक्तिपरिच्छेदस्य=शक्तिग्रहस्य । तत्पदश्रवणानन्तरमेव
घटादौ तत्पदप्रतिपाद्यत्वग्रह सम्भवति तत्पदप्रतिपाद्यत्वग्रहे जात एव च यत्पदशक्तिग्रह सम्भवति—
तत्पदप्रतिपाद्ये एव प्रक्रम्यमाणपरामर्शकयत्पदस्य शक्तिस्वीकारादित्यर्थ । ननु तत्पदप्रतिपाद्ये
यत्पदस्य यत्पदप्रतिपाद्ये च वक्ष्यमाणरीत्या तत्पदस्य शक्तिरिति परस्परशक्तिग्रहे परस्परार्थज्ञाना-

इयं च व्युत्पत्तिः प्रक्रम्यमाणपरामर्शकयच्छब्दस्य-'चैत्रः समागतो यस्तत्रावलोकितः' इत्यादौ चैत्रादिपदेनाप्युपस्थापितस्य यच्छब्देन बोधनात्, अत एव "साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके" इत्यादौ तत्पदासत्त्वेपि न दोषः- पूर्वप्रक्रान्तस्य कृतपदोपस्थाप्यव्यापारस्यैवाऽभेदेन मीलनान्वयितया यच्छब्देन बोधनात् । एवम् "यं सर्वशैलाः" इत्यादावपि, तदनुरोधेन पूर्वप्रयुक्तपदोपस्थापितेपि तस्य शक्त्यन्तरं स्वीकरणीयम् । अतिप्रसङ्गश्च स्वप्रयोजकबुद्धिस्थत्वमन्तर्भाव्य वारणीयः ।

---

क्षयाऽन्योन्याश्रयदोषः स्यादित्याशङ्क्य समाधत्ते-तच्छब्दजन्येति, तत्प्रतिपाद्यतया=तत्पदप्रतिपाद्यतया । यत्पदशक्तिग्रहे तत्पदसमभिव्याहारज्ञानस्यापेक्षितत्वेपि तत्पदजन्यतदर्थप्रतीतेरपेक्षा तु नास्ति- तत्पदप्रतिपाद्यत्वानुकूलवक्तृतात्पर्यस्य तत्पदजन्यप्रतीतेः पूर्वमपि प्रकरणादिना सुग्रहत्वात् तथा च प्रकरणादिगृहीततत्पदप्रतिपाद्यत्वानुकूलवक्तृतात्पर्यविषये यत्पदशक्तिग्रहे नोक्तदोषापत्तिरित्यर्थः । अभिसन्धिः=तात्पर्यम् ।

इयं चेति-उक्ता व्युत्पत्तिः प्रक्रम्यमाणपरामर्शकस्यैव यत्पदस्यास्ति न तु प्रक्रान्तपरामर्शकस्यापि- प्रक्रान्तपरामर्शकयत्पदस्य नियमेन तत्पदापेक्षाऽभावात् । उक्ते हेतुमाह-चैत्र इति, अस्मिन् वाक्ये यत्पदं प्रक्रान्तपरामर्शकमेव न तु प्रक्रम्यमाणपरामर्शकमऽत एव चैत्रपदेनाप्युपस्थापितस्य चैत्रस्य यत्पदेन बोधो जायते. यद्युक्ता व्युत्पत्तिः प्रक्रम्यमाणपरामर्शकमात्रयत्पदस्य न स्यात्तदा "चैत्रः" इत्याद्युदाहरणेषु तत्पदाभावाच्चैत्रादिपदेनोपस्थापितस्य यत्पदेन परामर्शो न स्यादेव न चैवमस्तीत्युक्ता व्युत्पत्तिः प्रक्रम्यमाणपरामर्शकस्यैव यत्पदस्येतिसिद्धम् । अत एवेति-यत उक्ता व्युत्पत्तिः प्रक्रम्यमाणपरामर्शकस्यैव यत्पदस्य अत एव "साधु" इत्युदाहरणे न तत्पदापेक्षेत्यर्थः । उक्ते हेतुमाह-पूर्वेति, पूर्वमक्रान्तस्य कृतमितिपदोपस्थाप्यस्यैव व्यापारस्याऽभेदेन मीलितपदोपस्थाप्यमीलनान्वयितया यच्छब्देन बोधनात्, अत्र कृतमितिपदोपस्थाप्यव्यापारस्य मीलितमितिपदोपस्थाप्ये मीलनेऽभेदसम्बन्धेनाऽन्वयो भवति, मीलनाभिन्नव्यापारवन्ति पुष्कराणीत्यन्वयबोधः । 'स्वापेक्षयाऽभिरामताधिके चन्द्रमस्युदये प्राप्ते सति पुष्करैः=कमलैर्यद् मीलितं तत् साधु कृतम्' इत्युदाहरणार्थः । एवम् "य सर्वशैलाः प्रनिकल्प्य वत्सम्" इत्यत्रापि यत्पदं प्रक्रान्तपरामर्शकमेव न तु प्रक्रम्यमाणपरामर्शकमिति पूर्वपद्यघटकहिमालयपदोपस्थाप्यस्यापि हिमालयस्य यत्पदेन बोधो जायते इत्याह- एवमिति । तदनुरोधेन=तत्पदं विनाप्युक्तोदाहरणेषु यत्पदेन जायमानप्रक्रान्तविषयकबोधानुरोधेन तस्य=प्रक्रान्तपरामर्शकस्य यत्पदस्य पूर्वप्रयुक्तेन तत्पदातिरिक्तपदेनोपस्थापिते शक्त्यन्तरं स्वीकार्यमित्याह-तदनुरोधेनेति । ननु यदुक्तम् 'पूर्वप्रयुक्तपदोपस्थापिते यत्पदस्य शक्तिः' तत्र पूर्वप्रयुक्तानि बहूनि पदानि भवन्ति तदुपस्थाप्यार्था अपि बहव इति कथमभीष्टे हिमालयादावेव यत्पदशक्तिनियमः स्यादित्याशङ्क्याह-अतिप्रसङ्गश्चेति, अभीष्टातिरिक्ते यत्पदशक्त्यतिप्रसङ्गश्च स्व ( यत्पद ) प्रयोजकबुद्धिस्थत्वमन्त-

एवं यत्पदोपस्थाप्ये तत्पदशक्तिर्बोध्या, अत एव प्रक्रम्यमाणपरामर्शकतच्छब्देनापि नियमतो यत्पदमपेक्ष्यते– 'तमानय य इहास्ति' इत्यादाविव 'तमानय घट इहास्ति' इत्यादितो घटानयनादिप्रतीतेरनुभवविरुद्धत्वात्। प्रक्रान्तपरामर्शकस्य च न तदपेक्षानियमः– "तदन्वये शुद्धिमति" इत्यादौ वैवस्वतादिपदोपस्थाप्यस्यापि तच्छब्देन परामर्शात्, तदनुरोधेन च तच्छब्दस्यापि पूर्ववत् पूर्वप्रयुक्तपदोपस्थापिते शक्त्यन्तरमङ्गीकार्यम्।

---

भोऽथ धारणीयो नाम पूर्वप्रयुक्तपदोपस्थाप्यतावच्छेदको यो यत्पदोच्चारणानुकूलबुद्धिस्थधर्मस्तदवच्छिन्ने प्रक्रान्तपरामर्शकयत्पदस्य शक्तिस्तया च यत्पदोच्चारणानुकूलबुद्धिस्थहिमालयत्वादिधर्मावच्छिन्नत्वमभीष्टे हिमालयादावेव सम्भवति न पदार्थान्तरेपीति नाऽनभीष्टपदार्थे यत्पदवाच्यत्वातिप्रसङ्ग इत्यर्थः। प्रक्रम्यमाणपरामर्शकयत्पदस्य तु 'तमानय य इहास्ति' इत्यादिकं तत्पदघटितमुदाहरणं बोध्यम्। अत्र च 'उक्ताभीष्टार्थविषयकत्वस्वज-यत्वैतदुभयसम्बन्धेन यत्पदविशिष्टो बोधो भवतु' इत्याकारकं पदप्रकारकबोधविशेष्यकं शक्तिज्ञानमवधार्यम्। ॥ इति यत्पदम् ॥

---

अथ

## ॥ तत्पदम् ॥

---

उक्ततत्पदावशिष्टं किञ्चिदाह– एवमिति। तत्पदं प्रक्रम्यमाणप्रक्रान्तप्रसिद्धानुभूतार्थपरामर्शकभेदाच्चतुर्धा भवति तत्र प्रक्रम्यमाणपरामर्शकतत्पदस्य यत्पदोपस्थाप्ये शक्तिरिति तस्य नियमेन यत्पदापेक्षा– यत्पदसमभिव्याहारज्ञानं विना प्रक्रम्यमाणपरामर्शकतत्पदस्य शक्तिग्रहासम्भवादिति सर्वं यत्पदवद् विज्ञेयम्। यत्पदापेक्षाया हेतुमाह– तमिति, 'तमानय य इहास्ति' इत्यत्र यथा घटानयनादिप्रतीतिर्भवति तथा 'तमानय घट इहास्ति' इत्यत्र न भवतीति प्रक्रम्यमाणपरामर्शकतत्पदस्य नियमेन यत्पदापेक्षेतिसिद्धम्। 'घट इहास्ति तमानय' इत्यत्र स्पष्टं तत्पदेन घटबोधो जायते यद्यपि तथाप्यत्र प्रक्रम्यमाणपरामर्शकं तत्पदं नास्ति किं तु प्रक्रान्तपरामर्शकमेव घटपदेनोपक्रान्तस्यैव तत्पदेन परामर्शात् प्रक्रान्तपरामर्शकतत्पदस्य तु न नियमेन यत्पदापेक्षेति विशेष एतत्स्वयमप्याह– प्रक्रान्तेति, तदपेक्षानियमः=यत्पदापेक्षानियमः। उक्तनियमाभावे हेतुमाह– तदन्वये इति, अत्र पूर्वोक्तवैवस्वतपदोपस्थापितस्यापि वैवस्वतस्य प्रक्रान्तपरामर्शकतच्छब्देन परामर्शो भवतीति न तस्य यत्पदापेक्षानियमः। तदनुरोधेन=यत्पदं विनापि जायमानप्रक्रान्तविषयकबोधानुरोधेन। पूर्ववत्=यत्पदवत्। तथा च पूर्वप्रयुक्तपदोपस्थाप्यतावच्छेदको यस्तत्पदोच्चारणानुकूलबुद्धिस्थधर्मस्तदवच्छिन्ने प्रक्रान्तपरामर्शकतत्पदस्य शक्तिरिति। अत्रापि 'उक्ताभीष्टविषयकत्वस्वज-यत्वैतदुभयसम्बन्धेन तत्पदविशिष्टो बोधो भवतु' इत्याकारकं पदप्रकारकबोधविशेष्यकं शक्तिज्ञानमनुसन्धेयम्।

उपस्थितिश्च स्वविशेष्यकशक्तिज्ञानाधीना ग्राह्या। अतः 'पशुरस्ति तं पश्य' इत्यादौ पश्वादिपदोपस्थापितलोमादीनां तदादिशब्देन न परामर्शः ।

प्रसिद्धार्थकमपि तत्पदं यथा "कला च सा कान्तिमती" इत्यादौ ॥

इदमेतदोः प्रत्यक्षबुद्धिविषये शक्तिः ॥

अदसः परोक्षविषये शक्तिः ॥

स्वशब्दस्य स्वसमभिव्याहृतपदोपस्थाप्ये शक्तिः । समभिव्याहृतत्वं त्वेकवाक्यघटकत्वम् ।

---

उपस्थितिश्चेति— यस्य पदार्थस्य पूर्वप्रयुक्तपदेन विशेष्यतारूपेण शक्तिज्ञानाधीनोपस्थितिर्जायते तस्यैव तत्पदेन परामर्शो भवति न तु विशेषणत्वेनोपस्थितस्यापीति 'पशुरस्ति तं पश्य' इत्यत्र पशुपदेन विशेष्यतया पशुव्यक्तेरेवोपस्थितिर्जायते इति तत्पदेन पशोरेव परामर्शो भवति, पशुपदस्य लोमविशिष्टव्यक्तौ शक्तिस्वीकारेण पशुपदेन लोम्नां प्रकारतयैवोपस्थितिर्जायते न विशेष्यतयेत्यत्र तत्पदेन लोमपरामर्शो न भवतीत्यर्थः ।

प्रसिद्धार्थकतत्पदमुदाहरति—प्रसिद्धार्थकमिति । सा=जगत्प्रसिद्धेत्यर्थः ।

"ते लोचने प्रतिदिशं विधुरे क्षिपन्ती" इत्यादौ तत्पदमनुभूतार्थकम्, ते=अनुभूते इत्यर्थः ।

॥ इति तत्पदावशिष्टम् ॥

इदम्पदस्यैतत्पदस्य च शक्तिमाह— इदमिति । प्रत्यक्षबुद्धिविषये=वक्तृप्रत्यक्षज्ञाननिरूपितलौकिकविषयतावति । यथा— 'अयं घटः' 'एष घटः' इत्यादि । गगनात्मादेरप्रत्यक्षपदार्थस्योद्दिश्य 'अयमात्मा' 'इदं गगनम्' इत्यादिप्रयोगानुरोधाद् इदमेतदोः सन्निहितेऽपि शक्तिः स्वीकार्या । वस्तुतस्तु सन्निहित एव शक्तिर्युक्ता— प्रत्यक्षपदार्थस्यापि घटादेः सन्निहितत्वसंभवात् । किं वा प्रत्यक्षपदेनात्र लौकिकालौकिकसाधारणं प्रत्यक्षं ग्राह्यं तत्र घटादीनां लौकिकप्रत्यक्षविषयत्वमात्मादीनामलौकिकप्रत्यक्षविषयत्वमिति विवेकः । ॥ इति इदमेतत्पदे ॥

अदःशब्दस्य शक्तिमाह— अदस इति । परोक्षविषये=लौकिकविषयताशालिप्रत्यक्षभिन्नज्ञानविषये इत्यर्थः, अतः 'असावात्मा' इत्यादिप्रयोगोऽप्युपपद्यते— आत्मनोऽलौकिकप्रत्यक्षविषयत्वेऽपि लौकिकप्रत्यक्षविषयत्वाभावात् । प्रत्यक्षस्य लौकिकत्वं च बाह्येन्द्रियजन्यत्वम् । शक्तिज्ञानं च पूर्ववदेव पदप्रकारकबोधविशेष्यकमनुसन्धेयम् ॥ ॥ इति अदःपदम् ॥

अथ

## स्वपदम्.

स्वशब्दस्य शक्तिमाह— स्वशब्दस्येति । समभिव्याहृतपदार्थमाह— समेति । तथा च 'चैत्रः स्वपुत्रं पश्यति' इत्यत्र स्वं स्वपदं तत्समभिव्याहृतपदं चैत्रपदं तदुपस्थाप्ये चैत्रेऽत्र स्वपदस्य शक्तिरिति स्वपुत्रपदेन चैत्रपुत्रबोधो जायते ।

अन्वयम- 'चैत्रः स्वपुत्रं पश्यति' इत्यादाविव 'स्वं चैत्रपुत्रः पश्यति' 'चैत्रभ्राता स्वपुत्रं पश्यति' इत्यादौ कथं न स्वशब्देन चैत्रः प्रत्याय्यते ? । मुख्यविशेष्यवाचकत्वानुपपत्त्यभ्युपगमे 'स्वपुत्रदर्शिनं चैत्रं मैत्रः पश्यति' इत्यादौ चैत्रपुत्रशोभानुपपत्तिः ।

न च तत्राऽवान्तरवाक्यार्थबोधे चैत्रस्य मुख्यविशेष्यतया नेयमनुपपत्तिरिति वाच्यम्, अवान्तरवाक्यार्थबोधमन्तरेणाऽऽहत्यैव विशेष्ये विशेषणमितिरीत्या महावाक्यार्थबोधे यत्र तात्पर्यं तत्र तदनुपपत्तेर्दुर्वारत्वात् ।

---

ननु यदि स्वशब्दस्य स्वसमभिव्याहृतपदोपस्थाप्ये शक्तिस्तदा यथा 'चैत्रः स्वपुत्रं पश्यति' इत्यत्र स्वसमभिव्याहृतचैत्रपदोपस्थाप्यत्वात् स्वपदेन चैत्रः प्रतीयते तथा 'स्वं चैत्रपुत्रः पश्यति' 'चैत्रभ्राता स्वपुत्रं पश्यति' इत्यादावपि स्वपदेन चैत्रस्य प्रतीतिः स्यादेव— स्वसमभिव्याहृतचैत्रपदोपस्थाप्यत्वात् चैत्रपदस्यात्रापि स्वपदेन सह समभिव्याहृतत्वादित्याशङ्कते— अथेत्थमिति । ननु स्वसमभिव्याहृतमुख्यविशेष्यवाचकपदोपस्थाप्ये स्वपदस्य शक्तिरस्ति तथा च 'स्वं चैत्रपुत्रः पश्यति' 'चैत्रभ्राता स्वपुत्रं पश्यति' इत्यादौ चैत्रपुत्रादेरेव स्वसमभिव्याहृतमुख्यविशेष्यवाचकचैत्रपुत्रादिपदोपस्थाप्यत्वात् स्वपदेन प्रतीतिर्भवति न तु चैत्रस्य— तस्य स्वसमभिव्याहृतमुख्यविशेष्यवाचकपदोपस्थाप्यत्वाभावात् चैत्रपदस्यात्र स्वसमभिव्याहृतत्वेपि मुख्यविशेष्यवाचकत्वाभावात्, 'चैत्रः स्वपुत्रं पश्यति' इत्यत्र तु चैत्रः स्वसमभिव्याहृतमुख्यविशेष्यवाचकपदोपस्थाप्यत्वात् स्वपदेन प्रतीयते इति न कोपि दोष इत्याशङ्क्याह— मुख्येति । एवं हि 'स्वपुत्रदर्शिनं चैत्रं मैत्रः पश्यति' इत्यत्र स्वपदेन चैत्रपरामर्शो इष्टः स च न स्यात्— अत्र मैत्रस्यैव मुख्यविशेष्यत्वेन चैत्रस्य मुख्यविशेष्यत्वाभावात्, प्रथमान्तार्थस्यैव मुख्यविशेष्यत्वस्वीकारादित्यर्थः ।

ननु तत्र='स्वपुत्रदर्शिनं चैत्रं मैत्रः पश्यति' इत्यत्राऽवान्तरवाक्यार्थबोधे='स्वपुत्रदर्शिनं चैत्रम्' इत्याकारकावान्तरवाक्यस्य 'स्वपुत्रं पश्यतीति स्वपुत्रदर्शी चैत्रः' इत्याकारकबोधकाले चैत्रस्य मुख्यविशेष्यतयोक्तस्थले स्वपदेन चैत्रपरामर्शस्य नानुपपत्तिरित्याशङ्क्याह— न चेति । परिहारहेतुमाह— अवान्तरेति, यत्रावान्तरवाक्यार्थबोधं विनैव "आहत्यैव विशेष्ये विशेषणम्" इतिरीत्या महावाक्यार्थबोधो जायते तत्र तु चैत्रस्योक्तस्थले मुख्यविशेष्यत्वाभावात् स्वपदेन चैत्रपरामर्शानुपपत्तिर्दुर्वारैवेत्यर्थः । नाम खले कपोतन्यायेन

ननु स्वार्थस्य=स्वपदार्थस्य साक्षात् परम्परया वा यस्मिन् पदार्थे विशेषणत्वं भवति तादृशार्थवाचकत्वं स्वपदस्य स्वीक्रियते तथा च 'स्वपुत्रदर्शिनं चैत्रं मैत्रः पश्यति' इत्यत्रोक्तमहावाक्यार्थबोधदशायामपि स्वपदार्थस्य पुत्रकर्मकदर्शनद्वारा चैत्रे एव विशेषणत्वमस्तीति स्वपदेन चैत्रपरामर्शानुपपत्तिर्नास्ति, एवमेव 'चैत्रः स्वपुत्रं पश्यति' इत्यत्रापि 'स्वपुत्रकर्मकदर्शनाश्रयश्चैत्रः' इतिबोधोदयात् स्वपदार्थस्य परम्परया चैत्रे विशेषणत्वमस्त्येव, 'चैत्रः स्वं पश्यति' इत्यत्र तु

न च स्वार्थस्य साक्षात् परम्परया वा यदर्थे विशेषणत्वं तादृशार्थवाचकता-व्युत्पत्तेर्नायं दोष इतिवाच्यम्, एवमपि 'स्वपुत्रश्चैत्रेण दृश्यते' इत्यादौ चैत्रपुत्रबोधानुपपत्तेः ।

समभिव्याहृतक्रियान्वयिवाचकत्वमपि न विचारं सहते—परम्परया क्रियान्वयित्वस्य 'चैत्रभ्राता स्वं पश्यति' इत्यादौ चैत्रादिसाधारणत्वात्, साक्षात् क्रियान्वयित्वस्य 'चैत्रः स्वं पश्यति' इत्यादावप्यभावात्—तत्र विभक्त्यर्थद्वारैव नामार्थधात्वर्थयोर्भेदान्वयस्य व्युत्पन्नत्वात् ।

क्रियान्वयिप्रत्ययार्थे साक्षादन्वयित्वविवक्षणान्न दोष इतिचेत् ? एवमपि 'स्वव्यापकवह्निसमानाधिकरणधूमवान् पर्वतः' इत्यादौ स्वशब्देन धूमादिपराम-

---

स्वपदार्थस्य चैत्रे साक्षादेव विशेषणत्वमित्याशङ्क्याह— न चेति । परिहारहेतुमाह— एवमपीति, 'स्वपुत्रश्चैत्रेण दृश्यते' इत्यत्र 'चैत्रकर्तृकदर्शनविषयः स्वपुत्रः' इत्याकारकबोधोदयात् चैत्रस्यैव स्वपुत्रे विशेषणत्वमस्तीति स्वपदार्थस्य न साक्षात् न वा परम्परयापि चैत्रे विशेषणत्वमस्ति पुत्रे एव विशेषणत्वादित्यत्र स्वपदेन चैत्रबोधानुपपत्तिः स्वपुत्रपदेन चैत्रपुत्रबोधानुपपत्तिरित्यर्थः ।

ननु स्वसमभिव्याहृतक्रियान्वयिवाचकत्वं स्वपदस्योच्यते तथा च 'स्वपुत्रश्चैत्रेण दृश्यते' इत्यत्र स्वकर्तृकत्वसम्बन्धेन दर्शनक्रियायां चैत्रस्यान्वयोऽस्ति 'चैत्रः स्वं पश्यति' इत्यत्र तिङर्थाश्रयत्वसम्बन्धेन चैत्रे दर्शनक्रियाया अन्वयोऽस्ति 'स्वपुत्रदर्शिनं चैत्रम्' इत्यत्रापि चैत्रस्य दर्शनक्रियायामन्वयोऽस्तीति स्वपदेन न चैत्रपरामर्शानुपपत्तिरित्याशङ्क्याह— समभिव्याहृतेति । उक्ते दोषमुद्भावयति— परम्परयेति, यद्यत्र परम्परया क्रियान्वयित्वमुच्यते तदा 'चैत्रभ्राता स्वं पश्यति' इत्यत्र भ्रातृद्वारा दर्शनक्रियायाश्चैत्रस्याप्यन्वयोऽस्तीति स्वपदेन चैत्रस्यापि परामर्शः स्याद् न चैतदिष्टम्, एतद्दोषपरिजिहीर्षया यदि साक्षात् क्रियान्वयित्वमुच्यते तदा विभक्त्यर्थद्वारैव सर्वत्र नामार्थधात्वर्थयोर्भेदेनान्वयो भवति न साक्षादिति 'चैत्रः स्वं पश्यति' इत्यादावपि स्वपदेन चैत्रपरामर्शो न स्यादेव— अत्र तिङर्थाश्रयत्वद्वारैव दर्शनक्रियायाश्चैत्रेऽन्वयसम्भवादित्यसम्भव एव दोष इत्यर्थः । अभेदान्वयोऽपि बाधित एव ।

ननु क्रियान्वयिप्रत्ययार्थे यस्य पदार्थस्य साक्षादन्वयो भवति तद्वाचकत्वं स्वपदस्योच्यते तथा च न कोऽपि दोषो यथा 'चैत्रः स्वं पश्यति' इत्यत्र क्रियान्वयितिङ्प्रत्ययार्थे आश्रयत्वे चैत्रस्य साक्षादेवान्वयः 'स्वपुत्रश्चैत्रेण दृश्यते' इत्यत्र क्रियान्वयितृतीयाप्रत्ययार्थे कर्तृत्वे चैत्रस्य साक्षादेवान्वयः 'स्वपुत्रदर्शिनं चैत्रम्' इत्यत्र च क्रियान्वयिप्रत्ययार्थकर्तृत्वे चैत्रस्य साक्षादेवान्वय इति न स्वपदेन चैत्रपरामर्शानुपपत्तिः, 'चैत्रभ्राता स्वं पश्यति' इत्यत्र तु क्रियान्वयिप्रत्ययार्थे चैत्रस्य न साक्षादन्वय इति न स्वपदेन चैत्रपरामर्शापत्तिरित्याशङ्कते—क्रियान्वयीति । परिहरति—स्वव्यापकेति, 'स्वव्यापकवह्निसमानाधिकरणधूमवान् पर्वतः' इत्यत्राख्यातार्थक्रियान्वयिप्रत्ययार्थे पर्वतस्यैव साक्षादन्वयोऽस्ति न तु धूमस्येति स्वपदेन धूमपरामर्शो न स्यादेव, इष्टश्चात्र

अथैवम्- 'चैत्रः स्वपुत्रं पश्यति' इत्यादाविव 'स्वं चैत्रपुत्रः पश्यति' 'चैत्रभ्राता स्वपुत्रं पश्यति' इत्यादौ कथं न स्वशब्देन चैत्रः प्रत्याय्यते ? । मुख्यविशेष्यवाचकताव्युत्पत्त्यभ्युपगमे 'स्वपुत्रदर्शिनं चैत्रं मैत्रः पश्यति' इत्यादौ चैत्रपुत्रबोधानुपपत्तिः ।

न च तत्राऽवान्तरवाक्यार्थबोधे चैत्रस्य मुख्यविशेष्यतया नेयमनुपपत्तिरिति वाच्यम्, अवान्तरवाक्यार्थबोधमन्तरेणाऽऽहत्यैव विशेष्ये विशेषणमितिरीत्या महावाक्यार्थबोधे यत्र तात्पर्यं तत्र तदनुपपत्तेर्दुर्वारत्वात् ।

---

ननु यदि स्वपदस्य स्वसमभिव्याहृतपदोपस्थाप्ये शक्तिस्तदा यथा 'चैत्रः स्वपुत्रं पश्यति' इत्यत्र स्वसमभिव्याहृतचैत्रपदोपस्थाप्यत्वात् स्वपदेन चैत्रः प्रतीयते तथा 'स्वं चैत्रपुत्रः पश्यति' 'चैत्रभ्राता स्वपुत्रं पश्यति' इत्यादावपि स्वपदेन चैत्रस्य प्रतीतिः स्यादेव- स्वसमभिव्याहृतचैत्रपदोपस्थाप्यत्वात् चैत्रपदस्यात्रापि स्वपदेन सह समभिव्याहृतत्वादित्याशङ्कते- अथैवमिति । ननु स्वसमभिव्याहृतमुख्यविशेष्यवाचकपदोपस्थाप्ये स्वपदस्य शक्तिरस्ति तथा च 'स्वं चैत्रपुत्रः पश्यति' 'चैत्रभ्राता स्वपुत्रं पश्यति' इत्यादौ चैत्रपुत्रादेरेव स्वसमभिव्याहृतमुख्यविशेष्यवाचकचैत्रपुत्रादिपदोपस्थाप्यत्वात् स्वपदेन प्रतीतिर्भवति न तु चैत्रस्य- तस्य स्वसमभिव्याहृतमुख्यविशेष्यवाचकपदोपस्थाप्यत्वाभावात् चैत्रपदस्यात्र स्वसमभिव्याहृतत्वेऽपि मुख्यविशेष्यवाचकत्वाभावात्, 'चैत्रः स्वपुत्रं पश्यति' इत्यत्र तु चैत्रः स्वसमभिव्याहृतमुख्यविशेष्यवाचकपदोपस्थाप्यत्वात् स्वपदेन प्रतीयते इति न कोऽपि दोष इत्याशङ्क्याह- मुख्येति । एवं हि 'स्वपुत्रदर्शिनं चैत्रं मैत्रः पश्यति' इत्यत्र स्वपदेन चैत्रपरामर्श इष्टः स च न स्यात्- अत्र मैत्रस्यैव मुख्यविशेष्यत्वेन चैत्रस्य मुख्यविशेष्यत्वाभावात्, प्रथमान्तार्थस्यैव मुख्यविशेष्यत्वस्वीकारादित्यर्थः ।

ननु तत्र='स्वपुत्रदर्शिनं चैत्रं मैत्रः पश्यति' इत्यत्राऽवान्तरवाक्यार्थबोधे='स्वपुत्रदर्शिनं चैत्रम्' इत्याकारकावान्तरवाक्यस्य 'स्वपुत्रं पश्यतीति स्वपुत्रदर्शी चैत्रः' इत्याकारकबोधकाले चैत्रस्य मुख्यविशेष्यतयोक्तस्थले स्वपदेन चैत्रपरामर्शस्य नानुपपत्तिरित्याशङ्क्याह- न चेति । परिहारहेतुमाह- अवान्तरेति, यत्रावान्तरवाक्यार्थबोधं विनैव ''आहत्यैव विशेष्ये विशेषणम्'' इतिरीत्या नाम खले कपोतन्यायेन महावाक्यार्थबोधो जायते तत्र तु चैत्रस्योक्तस्थले मुख्यविशेष्यत्वासम्भवात् स्वपदेन चैत्रपरामर्शानुपपत्तिर्दुर्वारैवेत्यर्थः ।

ननु स्वार्थस्य=स्वपदार्थस्य साक्षात् परम्परया वा यस्मिन् पदार्थे विशेषणत्वं भवति तादृशार्थवाचकत्वं स्वपदस्य स्वीक्रियते तथा च 'स्वपुत्रदर्शिनं चैत्रं मैत्रः पश्यति' इत्यत्रोक्तमहावाक्यार्थबोधदशायामपि स्वपदार्थस्य पुत्रकर्मकदर्शनद्वारा चैत्रे एव विशेषणत्वमस्तीति स्वपदेन चैत्रपरामर्शानुपपत्तिर्नास्ति, एवमेव 'चैत्रः स्वपुत्रं पश्यति' इत्यत्रापि 'स्वपुत्रकर्मकदर्शनाश्रयश्चैत्रः' इतिबोधोदयात् स्वपदार्थस्य परम्परया चैत्रे विशेषणत्वमस्त्येव, 'चैत्रः स्वं पश्यति' इत्यत्र ॥

न च स्वार्थस्य साक्षात् परम्परया वा यदर्थे विशेषणत्वं तादृशार्थवाचकता-व्युत्पत्तेर्नायं दोष इतिवाच्यम्, एवमपि 'स्वपुत्रश्चैत्रेण दृश्यते' इत्यादौ चैत्रपुत्रबोधानुपपत्तेः ।

समभिव्याहृतक्रियान्वयिवाचकत्वमपि न विचारं सहते–परम्परया क्रियान्वयित्वस्य 'चैत्रभ्राता स्वं पश्यति' इत्यादौ चैत्रादिसाधारणत्वात्, साक्षात् क्रियान्वयित्वस्य 'चैत्रः स्वं पश्यति' इत्यादावप्यभावात्–तत्र विभक्त्यर्थद्वारैव नामार्थधात्वर्थयोर्भेदान्वयस्य व्युत्पन्नत्वात् ।

क्रियान्वयिप्रत्ययार्थे साक्षादन्वयित्वविवक्षणान्न दोष इतिचेत् ? एवमपि 'स्वव्यापकवह्निसमानाधिकरणधूमवान् पर्वतः' इत्यादौ स्वशब्देन धूमादिपराम-

---

स्वपदार्थस्य चैत्रे साक्षादेव विशेषणत्वमित्याशङ्क्याह– न चेति । परिहारहेतुमाह– एवमपीति, 'स्वपुत्रश्चैत्रेण दृश्यते' इत्यत्र 'चैत्रकर्तृकदर्शनविषयः स्वपुत्रः' इत्याकारकबोधोदयात् चैत्रस्यैव स्वपुत्रे विशेषणत्वमस्तीति स्वपदार्थस्य न साक्षात् न वा परम्परयापि चैत्रे विशेषणत्वमस्ति पुत्रे एव विशेषणत्वादित्यत्र स्वपदेन चैत्रबोधानुपपत्तिः स्वपुत्रपदेन चैत्रपुत्रबोधानुपपत्तिरित्यर्थः ।

ननु स्वसमभिव्याहृतक्रियान्वयिवाचकत्वं स्वपदस्योच्यते तथा च 'स्वपुत्रश्चैत्रेण दृश्यते' इत्यत्र स्वकर्तृकत्वसम्बन्धेन दर्शनक्रियायां चैत्रस्यान्वयोस्ति 'चैत्रः स्वं पश्यति' इत्यत्र तिङर्थाश्रयत्वसम्बन्धेन चैत्रे दर्शनक्रियाया अन्वयोस्ति 'स्वपुत्रदर्शिनं चैत्रम्' इत्यत्रापि चैत्रस्य दर्शनक्रिययाऽन्वयोस्तीति स्वपदेन न चैत्रपरामर्शानुपपत्तिरित्याशङ्क्याह– समभिव्याहृतेति । उक्तं दोषमुद्घाटयति–परम्परयेति, यद्यत्र परम्परया क्रियान्वयित्वमुच्यते तदा 'चैत्रभ्राता स्वं पश्यति' इत्यत्र भ्रातृद्वारा दर्शनक्रियायाश्चैत्रेप्यन्वयोस्तीति स्वपदेन चैत्रस्यापि परामर्शः स्याद् न चैतदिष्टम्, एतद्दोषपरिजिहीर्षया यदि साक्षात् क्रियान्वयित्वमुच्यते तदा विभक्त्यर्थद्वारैव सर्वत्र नामार्थधात्वर्थयोर्भेदेनाऽन्वयो भवति न साक्षादिति 'चैत्रः स्वं पश्यति' इत्यादावपि स्वपदेन चैत्रपरामर्शो न स्यादेव– अत्र तिङर्थाश्रयत्वद्वारैव दर्शनक्रियायाश्चैत्रेऽन्वयसम्भवादित्यऽसंभव एव दोष इत्यर्थः । अभेदान्वयोपि बाधित एव ।

ननु क्रियान्वयिप्रत्ययार्थे यस्य पदार्थस्य साक्षादन्वयो भवति तद्वाचकत्वं स्वपदस्योच्यते तथा च न कोपि दोषो यथा 'चैत्रः स्वं पश्यति' इत्यत्र क्रियान्वयितिङ्प्रत्ययार्थे आश्रयत्वे चैत्रस्य साक्षादेवान्वयः 'स्वपुत्रश्चैत्रेण दृश्यते' इत्यत्र क्रियान्वयितृतीयाप्रत्ययार्थे कर्तृत्वे चैत्रस्य साक्षादेवान्वयः 'स्वपुत्रदर्शिनं चैत्रम्' इत्यत्र च क्रियान्वयिकृत्प्रत्ययार्थकर्तृत्वे चैत्रस्य साक्षादेवान्वय इति न स्वपदेन चैत्रपरामर्शानुपपत्तिः, 'चैत्रभ्राता स्वं पश्यति' इत्यत्र तु क्रियान्वयिप्रत्ययार्थे चैत्रस्य न साक्षादन्वय इति न स्वपदेन चैत्रपरामर्शापत्तिरित्याशङ्क्यते–क्रियान्वयीति । परिहरति–स्वव्यापकेति, 'स्वव्यापकवह्निसमानाधिकरणधूमवान् पर्वतः' इत्यत्रास्तीत्यादिक्रियान्वयिप्रत्ययार्थे पर्वतस्यैव साक्षादन्वयोस्ति न तु धूमस्येति स्वपदेन धूमपरामर्शो न स्यादेव. इष्टश्चात्र

र्शानुपपत्तेर्वारणमशक्यमेव । एवम् 'चैत्रेणावलोकितं स्वपुत्रं मैत्रः पश्यति' इत्यादौ चैत्रपुत्रनोपापत्तिवारणमपि ।

न च स्वपदार्थो यदर्थघटितविशेषणस्य विशेष्यतावच्छेदककोटौ यदर्थस्य विशेषणकोटौ वा निविशते स एव पदार्थः स्वशब्दवाच्यो यथा 'चैत्रेण स्वपुत्रो दृश्यते' 'चैत्रः स्वपुत्रं पश्यति' इत्यादौ। 'चैत्रपुत्रः स्वं पश्यति' इत्यादौ 'चैत्रस्य भ्राता स्वपुत्रं पश्यति' इत्यादौ च, स्वपदार्थश्चैत्रस्य विशेषणकोटौ चैत्रघटितार्थस्य धर्मितावच्छेदककोटौ वा न निविशते इति नातिप्रसङ्गः ।

'चैत्रावलोकितं स्वपुत्रं मैत्रः पश्यति' इत्यादौ चैत्रपदस्य चैत्रकर्तृके लक्षणया चैत्रः पदार्थैकदेशो न तु पदार्थ इति स्वशब्दान्न तत्प्रतीतिः । 'चैत्रेणावलोकितम्' इत्यादौ तु तात्पर्यसत्त्वे इष्यत एव ततस्तत्प्रतीतिः ।

---

धूमपरामर्श , एवम् 'चैत्रेणावलोकित स्वपुत्र मैत्र पश्यति' इत्यत्राऽवलोकनक्रियान्वयितृतीयार्थे कर्तृत्वे चैत्रस्य साक्षादेवा न्वयात् स्वपदेन चैत्रबोध स्यादत्र न चैतदिष्टमित्यर्थ ।

शङ्कते—न चेति । एव हि 'चैत्रेण स्वपुत्रो दृश्यते' इत्यत्र चैत्रकर्तृकदर्शनस्य स्वपुत्रेऽन्वयात् 'यदर्थघटितविशे तादृशदर्शन विशेषण स्वपुत्रश्च विशेष्य इति विशेषणीभूतदर्शन चैत्रघटितमेवेति पणस्य=चैत्रघटितदर्शनस्य विशेष्य स्वपुत्रो विशेष्यताव-छेदक च स्वपदार्थ एवं यत्र न स्वपदेन चैत्रपरामर्शानुपपत्ति , 'चैत्र स्वपुत्र पश्यति' इत्यत्र पुत्रकर्मकदर्शनस्य चैत्रेऽन्वयाद् यदर्थस्य= चैत्रस्य विशेषणकोटौ=पुत्रकर्मकदर्शने स्वपदार्थस्य निवेशोस्तीत्यत्रापि न स्वपदेन चैत्रपरामर्शानुपपत्ति , एवम् 'स्वव्यापकवह्निसमानाधिकरणधूमवान्' इत्यत्रापि स्वपदार्थो धूमस्य विशेषणकोटौ निविशते इति न स्वपदेन धूमपरामर्शानुपपत्ति , 'स्वपुत्रदर्शिन चैत्रम्' इत्यत्रापि स्वपदार्थस्य चैत्रविशेषणकोटौ प्रवेशान्न स्वपदेन चैत्रपरामर्शानुपपत्ति । 'चैत्रपुत्र स्व पश्यति' 'चैत्रस्य भ्राता स्वपुत्र पश्यति' इत्यादौ च स्वपदार्थो न चैत्रस्य विशेषणकोटौ वा चैत्रघटितार्थस्य विशेषणीभूतस्य विशेष्यताव-छेदककोटौ वा निविशते इति न स्वपदेन चैत्रपरामर्शस्यातिप्रसङ्ग इत्यन्वय । 'चैत्रपुत्र स्व पश्यति' इत्यत्र स्वपदार्थ पुत्रविशेषणीभूतदर्शन 'चैत्रस्य भ्राता स्वपुत्र पश्यति' इत्यत्र च भ्रातृविशेषणीभूतदर्शनविशेषणीभूतपुत्रे एव विशेषणमिति पूर्वत्र स्वपदेन चैत्रपुत्रस्योत्तरत्र च चैत्रभ्रातु परामर्शो जायते ।

चैत्र इति—चैत्रपदस्य चैत्रकर्तृके लक्षणया 'चैत्रकर्तृकावलोकनकर्मभूत स्वपुत्र मैत्र पश्यति' इति वाक्यार्थ । तत्प्रतीति =चैत्रप्रतीति । स्वपदार्थस्य चैत्रेणान्वयोऽत्र न भवतीत्यस्य ''पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन'' इति न्याय एव मूलम् । 'चैत्रेणावलोकित स्वपुत्र मैत्र पश्यति' इत्यत्र तु स्वपदेन चैत्रपरामर्शविषयकतात्पर्यसत्त्वे तत =स्वपदात् तत्प्रतीति = चैत्रप्रतीतिरिष्यत एव, यदा च वस्तु स्वपदेन मैत्रपरामर्शे तात्पर्य तदा स्वपदेन मैत्रस्यापि प्रतीतिरिष्टैवेत्यर्थ ।

'स्वपुत्रदर्शिचैत्रधनम्' इत्यादौ चैत्रपुत्रदर्शिचैत्रसंबन्धित्वाद्यवच्छिन्ने चैत्रान्तस्य, वाक्ये लक्षणाविरहे तु पूर्वभागं परित्यज्य तादृशलक्ष्यार्थपरताकस्य केवलचैत्रादिपदस्यैव वा तत्र लक्षणा तत एव चैत्रपुत्रादिप्रतीत्युपपत्तिरिति वाच्यम्, एवं सति ' चैत्रस्य भ्राता स्वपुत्रो दृश्यते ' इत्यादौ स्वपदेन चैत्रप्रतीत्यापत्तेर्दुर्वारत्वात् ।

मैवम्– साक्षात् परम्परया वा यः स्वार्थस्य विशेष्यो यश्च समभिव्याहृतक्रियाकारकपदार्थस्तदुभयत्र स्वपदस्य शक्तिः । 'स्वव्यापकवह्निसामानाधिकरण्यं धूमे '

---

ननु यदि पदार्थैकदेशभूते चैत्रादौ स्वपदार्थस्यान्वयो न सम्भवति तदा 'स्वपुत्रदर्शिचैत्रधनम्' इत्यत्र स्वपदार्थस्य चैत्रेण कथमन्वयः स्यात्–चैत्रस्य पदार्थैकदेशत्वादिति स्वपदेन चैत्रबोधानुपपत्तिरित्याशङ्क्याह–स्वपुत्रेति, 'स्वपुत्रदर्शिचैत्रधनम्' इत्यत्र मीमांसकमतेन चैत्रान्तस्य='स्वपुत्रदर्शिचैत्र' इत्येतावन्मात्रवाक्यस्य चैत्रपुत्रदर्शिचैत्रसम्बन्धित्वावच्छिन्ने लक्षणा तस्य च धनेऽभेदान्वय इति लक्षणया स्वपुत्रपदेन चैत्रपुत्रबोधानुपपत्तिर्नास्ति, तार्किकमते तु वाक्ये लक्षणा न भवतीति पूर्वभागम्='स्वपुत्रदर्शि' इतिभागं परित्यज्य तादृशलक्ष्यार्थपरताकस्य=चैत्रपुत्रदर्शिचैत्रसम्बन्धित्वावच्छिन्नरूपलक्ष्यार्थपरस्य केवलचैत्रपदस्यैव तत्र=चैत्रपुत्रदर्शिचैत्रसम्बन्धित्वावच्छिन्ने लक्षणा तस्य चाभेदेन धनेऽन्वय इति ततः=लक्षणात एवात्र चैत्रपुत्रप्रतीतेरुपपत्तिर्विज्ञेया. अत्र पक्षे 'चैत्रपुत्रदर्शि' इति तात्पर्यग्राहकमित्यर्थः । न चेत्यादिनोपपादितं परिहरति–इतिवाच्यमित्यनेन । परिहारहेतुमाह–एवमिति, ' चैत्रस्य भ्राता स्वपुत्रो दृश्यते ' इत्यत्र चैत्रभ्रातृकर्तृकदर्शनस्य पुत्रपदार्थे विशेषणत्वेन चैत्रघटिततादृशदर्शनस्य विशेष्यभूतपुत्रे स्वपदार्थस्य विशेषणत्वाद् विशेष्यतावच्छेदककोटौ प्रवेशोऽस्तीति स्वपदेनात्र चैत्रप्रतीतिः स्यादेव न चैतदिष्टम्–चैत्रभ्रातृप्रतीतेरेवेष्टत्वादित्यर्थः । अत्र ' चैत्रभ्रातृकर्तृकदर्शनविषयताश्रयश्चैत्रभ्रातृपुत्रः ' इति शाब्दबोधः ।

अथेत्यादिनाऽऽशङ्कितं परिहरन् समाधत्ते–मैवमिति । स्वार्थस्य=स्वपदार्थस्य । स्पष्टमन्यत् । ' तादात्म्येन शुक्लरूपवान् घटः ' इत्यत्र स्वपदार्थस्य घटः साक्षादेव विशेष्य इति स्वपदं घटपरामर्शकम् । ' स्वव्यापकवह्निसमानाधिकरणधूमवान् पर्वतः ' इत्यत्र स्वपदार्थस्य धूमः परम्परया=व्यापकवह्न्यादिद्वारा विशेष्य इति स्वपदं धूमपरामर्शकम्, एवम् ' स्वपुत्रदर्शिचैत्रधनम् ' 'स्वपुत्रदर्शिनं चैत्रम् ' इत्यादावपि स्वपदार्थस्य चैत्रः परम्परया विशेष्य इति न स्वपदेन चैत्रपरामर्शानुपपत्तिः । ' चैत्रस्य भ्राता स्वपुत्रो दृश्यते ' इत्यत्र समभिव्याहृतदर्शनक्रियायाः कर्तृकारकत्वं भ्रातृपदार्थे एवेति स्वपदेन भ्रातृपरामर्शो जायते. चैत्रस्तु नात्र स्वपदार्थस्य विशेष्यो न वा समभिव्याहृतक्रियाकारक इति नात्र स्वपदेन चैत्रपरामर्शापत्तिः । ' चैत्रः स्वं पश्यति ' 'स्वपुत्रश्चैत्रेण दृश्यते ' इत्यादौ चैत्रस्य समभिव्याहृतदर्शनक्रियायाः कर्तृकारकत्वात् स्वपदेन परामर्शोऽस्त्येव, एवम् ' चैत्रस्य भ्राता स्वपुत्रं पश्यति ' 'चैत्रवञ्चकितः स्वपुत्रं चैत्रः पश्यति '

इत्यादौ ' अस्ति ' इतिक्रियाध्याहारात् स्वपदार्थस्य समभिव्याहृतक्रियाकारकत्वमक्षतमेवेति न स्वपदात् तत्प्रतीत्यनुपपत्तिः । एवम् " कलशो निजहेतुदण्डजः किमु चक्रभ्रमकारिता गुणः " इत्यादावपि ' अस्ति ' इति क्रियाऽध्याहारात् स्वपर्यायनिजपदात् कलशादिप्रतीतिः । ' स्वव्यापकवह्निसामानाधिकरण्यं धूमस्य' इत्यादयश्च न प्रयोगाः ।

इदं तु चिन्त्यते—यद्रूपेण समभिव्याहृतपदादुपस्थितिस्तद्रूपावच्छिन्नस्य स्वपदार्थत्वे एकेन ब्राह्मणेन ब्राह्मणान्तरपुत्रदर्शनदशायाम् ' ब्राह्मणः स्वपुत्रं न पश्यति ' इत्यादिप्रयोगानुपपत्तिः—अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताका-

---

इत्यादौ दर्शनक्रियान्तर्भावादेस्तत्र तत्र स्वपदेन परामर्शो विज्ञेय । ' स्वव्यापकवह्निसामानाधि-
करण्य धूमे ' इत्यादौ ' अस्ति ' इति क्रियाऽध्याहारात् स्वपदार्थस्य धूमस्य समभिव्याहृतास्तीति-
क्रियानिरूपितमधिकरणकारकत्वमक्षतमेवेति न स्वपदात् तत्प्रतीत्यनुपपत्ति =धूमप्रतीत्यनुपप-
त्तिरित्याह— स्वव्यापकेति । उदाहरणान्तरमाह— एवमिति, अध्याहृतास्तीतिक्रियानिरूपितमधि-
करणकारकत्व कलशोऽस्त्येवेत्यत्र स्वपर्यायनिजपदेन कलशपरामर्शस्य नानुपपत्तिरित्यन्वय ।
' स्वव्यापकवह्निसामानाधिकरण्य धूमस्य ' इत्यत्र धूमस्य न कारकत्व सभवति— षष्ठ्या कारक-
विभक्तित्वाभावाद् न वा स्वपदार्थविशेष्यत्व सभवति येनात्र स्वपदेन धूमपरामर्श स्यादित्येतादृश-
प्रयोग एवाऽशुद्ध इत्याह— स्वव्यापकेति ।
स्वपदसमभिव्याहृत-
स्वपदेन स्वपदार्थस्य केन रूपेणोपस्थितिर्भवतीति विविनक्ति—इदमित्यादिना । स्वपदसमभिव्याहृत-
तब्राह्मणादिपदाद् ब्राह्मणादेर्येन ब्राह्मणत्वादिरूपेणोपस्थितिर्जायते तादृशब्राह्मणत्वादिरूपावच्छिन्न
एव यदि स्वपदार्थस्तदैकेन ब्राह्मणेन ब्राह्मणान्तरपुत्रदर्शनदशायाम् ' ब्राह्मण स्वपुत्र न पश्यति '
इतीष्टोपि प्रयोगो न स्यादित्यन्वय । उक्ते हेतुमाह— अन्वयितेति, ब्राह्मणेन ब्राह्मणान्तर-
पुत्रदर्शनदशाया ब्राह्मणत्वावच्छिन्ने ब्राह्मणत्वानवच्छिन्नपुत्रकर्मकदर्शनाश्रयत्व विशेषणतया-
दन्वयि— अन्वयित्वस्य विशेष्यविशेषणसाधारणत्वात्, अन्वयितावच्छेदक च ब्राह्मणत्वान-
वच्छिन्नपुत्रकर्मकदर्शनाश्रयतात्व तथा चान्वयितावच्छेदकावच्छिन्नप्रतियोगिताकस्य=ब्राह्मणत्वाव-
च्छिन्नपुत्रकर्मकदर्शनाश्रयतात्वावच्छिन्नप्रतियोगिताकस्य ब्राह्मणत्वावच्छिन्नपुत्रकर्मकदर्शनाश्रयत्वा-
भावस्य विशेष्ये=ब्राह्मणत्वावच्छिन्ने बाधोस्तीति ' ब्राह्मण स्वपुत्र न पश्यति ' इतिप्रयोगो न
स्यादेव, अत्र समभिव्याहृतब्राह्मणपदेन ब्राह्मणस्य ब्राह्मणत्वेन रूपेणोपस्थितिर्जायते इति ब्राह्मण-
त्वावच्छिन्न एव स्वपदार्थ इति प्राप्त ब्राह्मणेन ब्राह्मणान्तरपुत्रदर्शनदशाया च ब्राह्मणत्वावच्छिन्ने
ब्राह्मणत्वानवच्छिन्नपुत्रकर्मकदर्शनाश्रयत्वस्य सत्त्वात् तदभावो न सभवतीत्यर्थ । ब्राह्मणेन स्वपुत्र-
दर्शनदशायां तु ' ब्राह्मण स्वपुत्र न पश्यति ' इतिप्रयोगो नेष्ट इत्यभिप्रायेण " ब्राह्मणान्तर-
पुत्रदर्शनदशायाम् " इत्युक्तम् । ननु समभिव्याहृतब्राह्मणादिपदस्य योऽर्थो ब्राह्मणादिस्तन्निष्ठ
...... तदवच्छिन्न एव स्वपदार्थ इति ब्राह्मणेन ब्राह्मणान्तरपुत्रदर्शनदशायां ब्राह्मणे

भावस्य विशेष्ये बाधात् । समभिव्याहृतपदार्थनिष्ठतत्तद्व्यक्तित्वावच्छिन्नस्य तदर्थत्वेपि वह्निकालीनद्रव्यवति ह्रदादौ 'स्वव्यापकवह्निकालीनद्रव्यं नास्ति' इति प्रयोगानुपपत्तिः । तत्र द्रव्यपदस्यापि लक्षणया तत्तद्व्यक्तित्वावच्छिन्नपरत्वे महानसादावपि तथा प्रयोगापत्तिः– तथाविधयत्किंचिद्व्यक्त्यभावस्य तत्राऽबाधात् ।

तादृशसमभिव्याहृतस्थले यद्यद्व्यक्तिव्यापकतावह्नेस्तत्तद्व्यक्तित्वावच्छिन्नाभावकूट एव नियमतः प्रतीयते इतिचेत् ? न– तथाविधसकलव्यक्तिनिष्ठतत्तद्व्यक्ति-

---

ब्राह्मणत्वावच्छिन्नपुत्रकर्मकदर्शनाश्रयत्वाभावस्य बाधेपि तद्व्यक्तित्वावच्छिन्नपुत्रकर्मकदर्शनाश्रयत्वाभावस्य नाम तद्ब्राह्मणव्यक्तिपुत्र ( स्वपुत्र ) कर्मकदर्शनाश्रयत्वाभावस्य तु बाधो नास्तीति ब्राह्मणेन ब्राह्मणान्तरपुत्रदर्शनदशायामपि ' ब्राह्मण स्वपुत्र न पश्यति ' इतिप्रयोगानुपपत्तिर्नास्तीत्याशङ्क्याह– समभिव्याहृतेति । तदर्थत्वे=स्वपदार्थत्वे । अस्मिन् पक्षेपि दोषमुद्घाटयति–वह्निकालीनेति, एव हि वह्निसमानकालिक यन्मीनशैवालादिद्रव्य तादृशद्रव्यवति ह्रदादौ नाम तादृशह्रदादिकमुद्दिश्य 'स्वव्यापकवह्निकालिकद्रव्य नास्ति' इतीष्टोपि प्रयोगो नोपपद्येत यतोऽत्रोक्तरीत्या द्रव्यपदसमभिव्याहारात् स्वपदेन यत्किंचिद्द्रव्यव्यक्तिरेव गृह्येतेति स्वपदेनात्र धूमव्यक्तेरपि ग्रहणसंभवात् तादृशधूमव्यापको यो वह्निस्तत्समानकालिकद्रव्यस्य मीनशैवालादेर्ह्रदे सत्त्वात् 'ह्रदे स्वव्यापकवह्निकालिकद्रव्य नास्ति' इतिप्रयोगानुपपत्तिरित्यर्थ । स्वपदस्यात्र द्रव्यत्वावच्छिन्नपरत्वे तु वह्नौ द्रव्यत्वावच्छिन्नव्यापकत्वमेव नास्तीति द्रव्यत्वावच्छिन्नव्यापकवह्निकालिकद्रव्यस्य ह्रदादावऽसत्त्वादेवोक्तप्रयोगानुपपत्तिर्नास्तीत्यय दोष स्वपदस्य तद्व्यक्तित्वावच्छिन्नपरत्वे प्रदर्शित इत्यनुसन्धेयम् । ननूक्तस्थले द्रव्यपदमपि लक्षणया तद्व्यक्तित्वावच्छिन्नपरमेव तथा च यत्किंचिद्द्रव्यव्यक्तिधूमादिव्यापकीभूतवह्निसमानकालिकस्य यत्किंचिद्घटादिद्रव्यव्यक्तेरभावस्य ह्रदादौ बाधाभावाद् वह्निकालिकद्रव्यवत्यपि ह्रदादौ 'स्वव्यापकवह्निकालिकद्रव्य नास्ति' इतिप्रयोगानुपपत्तिर्नास्तीत्याशङ्क्याह– तत्रेति । अत्रापि दोषमुद्घाटयति– महानसेति, एव हि तथाविधस्य=तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकस्य यत्किंचिद्व्यक्त्यभावस्य=स्वव्यापकवह्निकालिककिंचिद्द्रव्यव्यक्त्यभावस्य तत्र=महानसादावऽबाधात् महानसादावपि तथा='स्वव्यापकवह्निकालिकद्रव्य नास्ति' इति प्रयोगस्यापत्ति· स्यादेव न चैतदिष्टमित्यर्थ· ।

ननु यद्यद्व्यक्तिनिरूपितव्यापकता वह्नौ वर्तते तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावानां समुदाय एव तादृशसमभिव्याहृतस्थले='स्वव्यापकवह्निकालिकद्रव्य नास्ति' इत्यादिस्थले नियमत· प्रतीयते महानसे च तादृशाभावसमुदायस्य बाध एव– स्वव्यापकवह्निकालिककिंचिद्धूमादिद्रव्यव्यक्तेः सत्त्वादित्याशङ्कते– तादृशेति । परिहरति– नेति । तथेति–विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वादुक्तवह्निव्याप्यतद्व्यक्तित्वावच्छिन्नाभावकूटज्ञानार्थं तथाविधसकलव्यक्तिनिष्ठानाम्=उक्तवह्निव्याप्यसकलव्यक्तिनिष्ठाना सर्वेषां तद्व्यक्तित्वानां ज्ञानापेक्षा प्राप्ता न च सर्वेषा

त्वानां युगसहस्रेणापि ज्ञातुमशक्यत्वात्, कदाचित् कस्यचिज्ज्ञानसंभवेपि कतिपयतत्तद्व्यक्तित्वावच्छिन्नमात्रोपस्थितिदशाया कतिपयाभावमात्रगोचरप्रतीतेरप्यङ्गीकार्यतया तादृशनियमस्य सुदूरपराहतत्वादिति ।

अत्र केचित्- 'ब्राह्मणः स्वपुत्रं पश्यति' इत्यादौ स्वपदं ब्राह्मणत्वावच्छिन्नार्थकमेव विशेष्यीभूतब्राह्मणत्वाद्यवच्छिन्ने च स्वपदार्थघटितस्य ब्राह्मणपुत्रदर्शनकर्तृत्वादिरूपविशेषणस्य न केवलमाश्रयत्वादिसंबन्धेनान्वयः अपि तु स्वाश्रयत्वस्वनिरूपकदर्शनविषयपुत्रजनकत्वोभयसंबन्धेनैव. एवं च तत्र तत्र नञा तादृशोभयसंबन्धावच्छिन्नतदभाव एव प्रत्याय्यतेऽतो नोक्तदोषावसर इति वदन्ति ॥

---

तद्व्यक्तित्वाना युगसहस्रेणापि ज्ञान सम्भवतीत्यर्थ । उक्तसकलतद्व्यक्तित्वाना ज्ञानमभ्युपगम्यापि
दोषमाह- कदाचिदिति, कदाचित् कस्यचिदुक्तसकलतद्व्यक्तित्वज्ञानसम्भवेपि 'स्वव्यापकवह्निका-
लीनद्रव्य नास्ति' इत्यत्र कतिपयानामेव वह्निव्याप्यकतिपयव्यक्तिनिष्ठाना तद्व्यक्तित्वानामुपस्थि-
तिदशायामपि वह्निव्याप्यकतिपयव्यक्तयभावमात्रविषयक ज्ञान जायत एवेति तदङ्गीकार्यतया तादृश-
नियम =उक्ताभावकूटप्रतीतिनियम सुदूरपराहत इत्यर्थः ।

कस्यचिन्मतेन स्वपदार्थं समाधत्ते- अत्रेति । स्वपद ब्राह्मणत्वाद्यवच्छिन्नार्थकमेव नाम
स्वपदसमभिव्याहृतब्राह्मणादिपदेन ब्राह्मणादेर्येन ब्राह्मणत्वादिरूपेणोपस्थितिर्जायते तादृशब्राह्मण-
त्वाद्यवच्छिन्न एव स्वपदार्थो विज्ञेय । स्वाश्रयत्वेति- स्वमुक्तदर्शनादिकर्तृत्वादिक तदाश्रयत्व-
मपि ब्राह्मणेऽस्ति तादृशकर्तृत्वादिनिरूपक यद् दर्शन तद्विषय पुत्रस्तज्जनकत्वमपि 'ब्राह्मण'
स्वपुत्र पश्यति' इत्यत्र ब्राह्मणेऽस्तीत्येतदुभयसम्बन्धेन स्वपदार्थघटितस्य ब्राह्मणपुत्रदर्शनकर्तृत्वस्या-
न्वयो ब्राह्मणे भवतीति तत्र तत्र='ब्राह्मण स्वपुत्र न पश्यति' इत्यादौ नञा तादृशोभयसम्बन्धावच्छि-
न्न =उक्तोभयसम्बन्धेनैव तदभाव = ब्राह्मणपुत्रदर्शनकर्तृत्वाभाव प्रतीयते स च ब्राह्मणेन ब्राह्म-
णान्तरपुत्रदर्शनदशायामपि तादृशब्राह्मणे समवत्येव- ब्राह्मणपुत्रकर्मकदर्शनकर्तृत्वाश्रयत्वस्य ब्रा-
ह्मणे सत्त्वेपि तादृशदर्शनविषयपुत्रजनकत्वस्याभावात्- दृश्यमानपुत्रस्य तदन्यब्राह्मणजन्यत्वादिति
ब्राह्मणेन ब्राह्मणान्तरपुत्रदर्शनदशायामपि 'ब्राह्मण स्वपुत्र न पश्यति' इतिप्रयोगस्यानुपपत्तिर्नास्ती-
त्यर्थ । अत्र केवलाश्रयत्वसम्बन्धनिवेशे ब्राह्मणेन ब्राह्मणान्तरपुत्रदर्शनदशायामुक्तरीत्या 'ब्राह्मण.
स्वपुत्र न पश्यति' इतिप्रयोगानुपपत्ति - ब्राह्मणे ब्राह्मणान्तरपुत्रदर्शनकर्तृत्वाश्रयत्वस्यैव सत्त्वात्
स्वपदस्य ब्राह्मणत्वावच्छिन्नपरत्वात्, केवलस्वनिरूपकदर्शनविषयपुत्रजनकत्वसम्बन्धनिवेशे च स्वेना-
दृश्यमानस्वपुत्रस्याऽन्यकर्तृकदर्शनकालेपि 'ब्राह्मण स्वपुत्र पश्यति' इतिप्रयोग स्याद् ब्राह्मणे
सम्बन्धभूतजनकत्वस्य सत्त्वाद् न चैतदिष्टमित्युभयसम्बन्धनिवेश कृत । 'स्वव्यापकवह्निकालिक-
द्रव्य नास्ति' इत्यत्राप्येन रीत्या स्वपद द्रव्यपद च धूमादिव्यक्तिपरमेव तादृशधूमादिव्यक्तयभा-
वस्य हृदादौ सत्त्वात् 'हृदे स्वव्यापकवह्निकालिकद्रव्य नास्ति' इतिप्रयोगानुपपत्तिर्नास्ति महा-

एकशब्दस्य कैवल्यादिविशिष्टे शक्तिः । कैवल्यं च सजातीयद्वितीयराहित्यम्, तच्च सजातीयनिष्ठभेदाऽप्रतियोगित्वम् । सजातीयत्वं चोद्देश्यविशेषणवाचकैकशब्दात् कैवल्यघटकत्वेन प्रकृतविधेयवत्त्वरूपं प्रतीयते तथा च 'अत्रायमेको भुङ्क्ते' इत्यादौ 'एतद्देशाधिकरणकभोजनकर्तृनिष्ठभेदाप्रतियोग्ययमत्र भुङ्क्ते' इत्याद्या-

नसादौ च तादृशधूमादिव्यक्त्यभावस्य बाधात् 'महानसे स्वव्यापकवह्निकालिकद्रव्य नास्ति' इतिप्रयोगापत्तिर्नास्ति । 'चैत्रेण स्वपुत्रो दृश्यते' इत्यादावाख्यातार्थकर्मत्वस्य स्वाऽऽश्रयत्वस्वनिरूपकदर्शनकर्तृजन्यत्वेतदुभयसम्बन्धेन पुत्रादावन्वय. । 'चैत्रः स्वधन पश्यति' इत्यादौ स्वाश्रस्वस्वनिरूपकदर्शनविषयधनस्वामित्वेतदुभयसम्बन्धेन कर्तृत्वादेश्चैत्रादावन्वय. । 'ब्राह्मण. स्वं पश्यति' इत्यादौ स्वाश्रयत्वस्वनिरूपकदर्शनविषयव्यक्त्यभिन्नत्वसम्बन्धेन ब्राह्मणादौ कर्तृत्वाद्यन्वयस्तेन ब्राह्मणेन ब्राह्मणान्तरदर्शनदशायामपि 'ब्राह्मण· स्व न पश्यति' इत्यादिप्रयोगानुपपत्तिर्नास्तीत्यादि स्वयमनुसन्धेयम् ॥ इति स्वपदम् ॥

अथ

## ॥ एकपदम् ॥



एकशब्दस्य शक्तिमाह—एकेति । केवलस्य भाव कैवल्यम् । आदिपदादेकत्वादिविशिष्टेपि शक्ति । "एके मुख्यान्यकेवला" इत्यमर । कैवल्यपदार्थमाह— कैवल्य चेति । सजातीयद्वितीयराहित्यपदार्थमाह— तच्चेति । अनेकव्यक्तिका घटादय परस्पर सजातीया भवन्ति तत्रान्यघटव्यक्तिनिष्ठैतद्घटव्यक्तिप्रतियोगिकभेदस्य प्रतियोगित्वमेतद्घटव्यक्तौ वर्तते, यस्य च सजातीय द्वितीय न भवति तत्र सजातीयनिष्ठस्वप्रतियोगिकभेदप्रतियोगित्वमपि न भवति यथा मह्यादि । भेदपदेन चात्र तद्व्यक्तित्वावच्छिन्नप्रतियोगिताको भेदो ग्राह्य इति न द्वित्वावच्छिन्नप्रतियोगिताकभेदमादाय दोषापत्ति । एकपद चोद्देश्यविशेषणवाचकमपि भवति विधेयविशेषणवाचकमपि भवति तत्रोद्देश्यविशेषणवाचकैकशब्दार्थीभूतकैवल्यघटक साजात्यपदार्थमाह—सजातीयत्वमिति । कैवल्यघटकत्वेनेति—उद्देश्यविशेषणवाचकैकशब्दार्थभूत यत्कैवल्य तद्घटक यत् सजातीयत्वं तत् प्रकृतविधेयवत्त्वरूप प्रतीयते इत्यर्थ । उदाहरति—अत्रेति, 'अत्रायमेको भुङ्क्ते' इत्यत्रेदम्पदबोध्यव्यक्तिमुद्दिश्यैतद्देशाधिकरणकभोजनकर्तृत्व विधीयते तत्रेदम्पदबोध्यव्यक्तावेकपदार्थः कैवल्य विशेषणमतोऽत्रोद्देश्यविशेषणवाचकमेकपदम् । उक्तवाक्यजन्यशाब्दबोधस्वरूपमाह—एतद्देशेति । अत्रैतद्देशाधिकरणकभोजनकर्तृत्व प्रकृतविधेयमस्तीति तादृशभोजनकर्तृत्ववतस्तादृशभोजनकर्त्ता सजातीय· सम्भवति स चात्र नास्त्येव—द्वितीयस्यैतद्देशाधिकरणकभोजनकर्तुरभावादिति तादृशसजातीयनिष्ठभेदाप्रतियोगित्वमिदम्पदबोध्यव्यक्तौ प्राप्त तदेव कैवल्यमित्यर्थ· । अत्र सजातीयाऽप्रसिद्ध्या मरुल्लक्षणाप्रसिद्धिरित्यनुसन्धेयम् । अत्र 'प्रकृतविधेयवत्त्वेनैकत्वमस्याप्यस्त कैवल्यम्' इत्यपि वक्तु शक्यते एतद्देशाधिकरणकभोजनकर्तृत्ववत्त्वेनैकत्वमाप्यास्त्व चेद्-

कारको बोधः। शक्यतावच्छेदकानुगमश्चोक्तदिशा चिन्तनीयः।

'अयं फलमेकं भुङ्क्ते' 'फलमेकं भुञ्जानस्तिष्ठति' इत्यादौ विधेयतावच्छेदककोटिप्रविष्टार्थकैकपदाच्च यादृशार्थविशेषणतापन्ने यदवच्छिन्ने स्वार्थान्वयिनो विशेषणत्वं तादृशार्थानुयोगिकान्वयप्रतियोगित्वविशिष्टतद्रूपावच्छिन्नानुयोगिकान्वयप्रतियोगिनिष्ठभेदाप्रतियोगित्वरूपकैवल्यं प्रतीयते. अतस्तन्नैतत्कर्तृकभोजना-

---

पदबोध्यव्यक्तावन्यत्र च नास्तीति न कोपि दोषो न वा लक्षणघटकपदार्थानामप्रसिद्धिरपि। शक्यतेति—'अयमेक' इत्यादौ कैवल्यविशिष्टभोजन कैवाद्येव वाचकमेकपदं भवतीति चैत्रत्वादिकं शक्यतावच्छेदकं तदनुगमकं च सजातीयनिष्ठभेदप्रतियोगितानवच्छेदकत्वमुपलक्षणविधया विधेयं तथा च सजातीयनिष्ठभेदप्रतियोगितानवच्छेदकत्वोपलक्षितधर्मावच्छिन्ने एकपदस्य शक्तिरिति कल्प्यते। "स्वार्थान्वयितावच्छेदकधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नस्वनिष्ठभेदाप्रतियोगित्वावच्छिन्ने एकपदस्य शक्ति" इतिभाष्याभिप्रायः, अत्र स्वमेकपदम्, विधेयता चोक्तभोजनकर्तृत्वे विधेयतावच्छेदकत्वं चोक्तभोजनकर्तृतात्वे तदुपलक्षितधर्म उक्तभोजनकर्तृतात्वं तदवच्छिन्नमुक्तभोजनकर्तृत्वं तद्वान् भोजनकर्ता तन्निष्ठभेदाप्रतियोगित्वावच्छिन्ने एकपदस्य शक्तिरिति तदर्थः।

विधेयविशेषणवाचकैकपदमुदाहरति—अयमिति। 'अयं फलमेकं भुङ्क्ते' इत्यनेनेदम्पदबोध्यव्यक्तिमुद्दिश्यैकफलकर्मकभोजनकर्तृत्वं विधीयते, द्वितीयोदाहरणे चेदम्पदबोध्यव्यक्तिमुद्दिश्यैकफलकर्मकभोजनकर्तृत्वविशिष्टा स्थितिर्वा तादृशभोजनकालिका स्थितिर्वा विधीयते इत्येकपदं विधेयतावच्छेदककोटिप्रविष्टकैवल्यविशिष्टार्थकम्। एतादृशैकपदाद् यादृशं कैवल्यं प्रतीयते तन्निर्वक्ति—यादृशेति, अत्रेदम्पदबोध्यकर्तृकभोजनकर्मभूतमेव सजातीयं सम्भवतीति तादृशसजातीयद्वितीयराहित्यलक्षणं यत्कैवल्यं तादृशकैवल्यविशिष्टफलस्य द्वितीयार्थकर्मत्वेऽन्वयः कर्मत्वस्य च स्वनिरूपकत्वसम्बन्धेन भोजनव्यापारे तस्याश्रयत्वे तस्येदम्पदबोध्यव्यक्तावन्वयस्तथा च यादृशार्थपदेनैतत्कर्तृकभोजनं ग्राह्यं तत्र विशेषणतापन्ने कर्मत्वे यदवच्छिन्ने=कर्मतात्वावच्छिन्ने स्वार्थान्वयिनः=एकपदार्थकैवल्यान्वयिनः फलस्य विशेषणत्वं तादृशार्थानुयोगिकः=एतत्कर्तृकभोजनपदार्थानुयोगिको योऽन्वयः कर्मत्वान्वयस्तादृशान्वयप्रतियोगित्वविशिष्टं यत् तद्रूपावच्छिन्नम्=कर्मतात्वावच्छिन्नं कर्मत्वं तदनुयोगिको योऽन्वयः फलान्वयस्तादृशान्वयप्रतियोगिभूतं यत् फलान्तरं तन्निष्ठभेदस्याऽप्रतियोगित्वरूपं कैवल्यमत्रैकपदेन प्रतीयते इत्यन्वयः। अत्र भोजनपदार्थे कर्मत्वस्य योऽन्वयस्तस्यानुयोगि भोजनं प्रतियोगि च कर्मत्वम्, कर्मत्वे च यः फलान्वयस्तस्यानुयोगि कर्मत्वं प्रतियोगि च फलम्। समन्वयमाह—अत इति, तत्र=उक्तोदाहरणयोः, एतत्कर्तृकभोजननिष्ठो यः कर्मत्वसंसर्गस्तत्प्रतियोगिभूतं यत् कर्मत्वं तन्निष्ठो यो भोज्यफलादिसंसर्गस्तत्प्रतियोगिभूतं यत् भोज्यफलादिकं तन्निष्ठभेदस्याऽप्रतियोगित्वं फलादौ प्रतीयते इत्यर्थः। अना-

दिनिष्ठसंसर्गप्रतियोगिकर्मत्वादिनिष्ठसंसर्गप्रतियोगिनिष्ठभेदाप्रतियोगित्वं फलादौ प्रतीयते ।

एकसमानार्थकमात्रादिपदस्थलेप्येतादृशी प्रतीतिरिति कृतं पल्लवितेन ॥

गवादिशब्दात् संस्थानरूपाकृतेरपि बोधस्यानुभविकतया गोत्वादिजातिवत् सापि गवादिपदवाच्ये विशेषणम् । तस्याश्च वाच्यविशेषणत्वेपि न प्रवृत्तिनिमित्तता- साक्षात्संबन्धेन वाच्यवृत्तित्वाभावात्. अवयवसंयोगरूपायास्तस्याः सामानाधिकरण्यसंबन्धेनैव गवादौ सत्त्वात् । अत्र शक्त्या जात्याकृत्योरेक-

---

प्युक्तप्रतियोगिभूतफलाद्यप्रसिद्ध्या सर्वमप्रसिद्धं इत्यादिति चिन्त्यम् । अत्र 'स्वसमभिव्याहृतपदार्थनिरूपितविभक्त्यर्थवत्त्वेनैकत्वसंख्यावत्त्वं कैवल्यम्' इत्यपि वक्तुं शक्यते भोजननिरूपितद्वितीयार्थकर्मत्ववत्त्वेनैकत्वसंख्यावत्त्वं चात्र फलेऽक्षतमेव, एवम् 'अयमेकेन बाणेन हन्ति' इत्यत्र बाणे करणत्ववत्त्वेनैकत्ववत्त्वमक्षतमेव । 'एकस्य चैत्रस्य धनम्' इत्यत्र धननिरूपितषष्ठ्यर्थस्वामित्ववत्त्वेनैकत्ववत्त्वं चैत्रेऽस्त्येवेति बोध्यम् ।

एकसमानार्थकमात्रादिपदार्थमाह—एकसमानेति । एतादृशी प्रतीतिः=कैवल्यप्रतीतिः । यथा 'अयं फलमात्रं भुङ्क्ते' 'अत्र चैत्रमात्र वर्तते' इत्यादि ।

ग्रन्थकारोक्तदिशा शक्तिज्ञानमत्र 'सजातीयनिष्ठभेदाप्रतियोगित्वविशिष्टविषयकत्वस्वजन्यत्वैतदुभयसम्बन्धेनैकपदविशिष्टो बोधो भवतु' इत्याकारकं पदप्रकारकबोधविशेष्यकं विज्ञेयम् । किं वा 'उक्तविभक्त्यर्थवत्त्वे सत्येकत्वसंख्यावद्विषयकत्वस्वजन्यत्वैतदुभयसंबन्धेनैकपदविशिष्टो बोधो भवतु' इत्येवं वक्तव्यम् ॥ एव द्व्यादिशब्दाना द्वित्वादिविशिष्टे शक्तिरवगन्तव्या ॥ इत्येकपदम् ॥

उक्तग्रन्थेन सामान्यशब्दानां विशेषशब्दानां च शक्तिनिरूपणं समाप्य किंचित्सामान्यकाण्डावशिष्टमुपक्रमते—गवादिशब्दादिति । प्रायो निगदव्याख्यातोयं ग्रन्थः । संस्थानम्=अवयवसंयोगः । सा=आकृतिः । गवादिपदवाच्ये=गवादिपदवाच्यव्यक्तौ । तस्याः=आकृतेः । प्रवृत्तिनिमित्तलक्षणं च सामान्यकाण्डे ४० उक्तम् । आकृतौ वाच्यत्ववाच्योपस्थितिप्रकारत्वयोः सत्त्वेपि साक्षात्संबन्धेन वाच्यवृत्तित्वं नास्तीत्याह— साक्षादिति । साक्षात्सबन्धः संयोगसमवायादिरूपो विज्ञेयः । "यन्निष्ठसंसर्गतायां प्रतियोग्यनुयोगिविषयतानिरूपितत्वं स एव साक्षात्संबन्धः" इति हरिनाथमहाचार्यः । आकृतेः साक्षात्संबन्धेन वाच्यवृत्तित्वाभावे हेतुमाह— अवयवेति । तस्याः=आकृतेः । यत्रैवाऽवयवेष्वऽवयवसंयोगरूपाकृतिर्वर्तते तत्रैवाऽवयवेषु व्यक्तिरपि वर्तते इति सामानाधिकरण्यसंबन्धेनाकृतेर्गवादिव्यक्तिवृत्तित्वं प्राप्तं न तु समवायादिसाक्षात्संबन्धेन, किं वा [illegible] स्वसंबन्धेनाकृतेर्व्यक्तिवृत्तित्वं विज्ञेयं स्वमाकृतिस्तत्समवायी अवयसमुदायस्तत्र [illegible] वर्ततीति तेन संबन्धेनेत्यर्थः । जात्याकृतिविशिष्टव्यक्तौ गवादिपदानामेकैव [illegible] गवादिपदेन केवलजातिविशिष्टाया वा केवलाकृतिविशिष्टाया वा व्यक्तेर्भानं न [illegible] विशिष्टाया एवेति हेतोरुभयविशिष्टव्यक्तावेकशक्तिरित्यर्थः । किं [illegible]

ताविनिर्मोकेणाऽप्रमानविरहाल्लाघवाच्चोभयविशिष्टे गवादिपदस्यैकैव शक्तिः स्वीक्रियते–शक्यविशेषणभेदेऽपि पुष्पवन्तादिपदवद् धेन्वादिपदवच्च शक्त्यैक्यस्य दुरपवादत्वात् ।

यत्त्वेकविशिष्टापरावच्छिन्ने शक्तिरिति ? तदसत्–विशेष्यविशेषणभावे विनिगमनाविरहाद् गवाद्यंशे साक्षादुभयप्रकारकबोधस्यानुभवसिद्धस्य दुरपवादत्वाच्च ।

यत्र केवलाकृतिविशिष्टे गवादिपदस्य तात्पर्यं यथा " पिष्टकमय्यो गावः " इत्यादौ तत्र शुद्धगोत्वाद्यवच्छिन्नपरधेन्वादिपद इव लक्षणैव ।

जात्याकृतिविशिष्टायां व्यक्तौ शक्त्यैक्यम् " जात्याकृतिव्यक्तयः पदार्थः " इति न्यायसूत्रे बहुवचनमुपेक्ष्य " पदार्थ " इत्येकवचनान्तं निर्दिष्टवतो महर्षेरप्यनुमतम् ॥

---

शक्तिभेदे गौरवमपि स्यादित्याह–लाघवाच्चेति । ननु विशेषणभेदे कथं शक्त्यैक्यं स्यादित्याशङ्क्याह–शक्यविशेषणेति, यथा सूर्यत्वचन्द्रत्वरूपविशेषणभेदेऽपि चन्द्रसूर्ययोः पुष्पवन्तपदस्यैकैव शक्तिस्तथात्रापि शक्त्यैक्यमित्यर्थः । ननु पुष्पवन्तपदस्थले चन्द्रत्व चन्द्रे सूर्यत्वं च सूर्ये विशेषगमिति न विशेषणभेदो येन तद्दृष्टान्तेनात्र शक्तेरैक्यं स्यादित्याशङ्क्याह– धेन्वादीति, यथा घासकर्मत्वगोत्वरूपविशेषणभेदेऽपि धेनुपदस्य धेनुव्यक्तावेकैव शक्तिस्तथा प्रकृतेऽपि शक्त्यैक्यं दुरपवादमेवेत्यर्थः ।

यत्त्विति, एकेति– स्वा ( जात्या ) धाराधिकरणवृत्तित्वसम्बन्धेन जातिविशिष्टा याऽऽकृतिस्तदवच्छिन्नव्यक्तौ किं वा स्वा( आकृत्य )धिकरणवृत्ति( व्यक्ति )समवेतत्वसम्बन्धेनाकृतिविशिष्टा या जातिस्तदवच्छिन्नव्यक्तौ गवादिपदानां शक्तिः, विशेषणभेदेन शक्तिभेदापत्तिर्नास्ति– परिहरति–तदसदिति । हेतुमाह– विशेष्येति, जातावाकृतेः व्यक्तौ द्वयोर्विशेषणत्वाभावादित्यर्थः । यत्र विनिगमकाभावादेकविशिष्टापरावच्छिन्ने शक्तिर्न सम्भवतीऽऽकृतौ जातेर्वा विशेषणत्वं स्यादित्यत्र विनिगमकाभावादेकविशिष्टापरावच्छिन्ने शक्तिर्न सम्भवतीत्यर्थः । किं च गवादिविषयकबोधकाले जात्याकृतिद्वयमेव व्यक्तिविशेषणत्वेन भासते इति द्वयोर्व्यक्तिविशेषणत्वमेवेत्याह– गवाद्यंशेति ।

यत्रेति– पिष्टनिर्मितगोव्यक्तिषु गोत्वजातेरभावात्तत्राकृतेश्च सत्त्वाद् गवादिपदानां लक्षणैव शक्तिः शक्तेर्जात्याकृत्युभयविशिष्टव्यक्तावेव स्वीकारादित्यर्थः । प्रकृते दृष्टान्तमाह– शुद्धेति यथा धेनुपदस्य घासकर्मत्वगोत्वोभयविशिष्टव्यक्तौ शक्तिस्वीकारात् केवलगोत्वविशिष्टव्यक्तौ लक्षणैव तथा प्रकृतेऽपीत्यर्थः ।

जात्याकृतिविशिष्टव्यक्तौ शक्त्यैक्ये मानमाह– जात्याकृतीति । बहुवचनमुपेक्ष्येत्यस्य "पदार्थाः" इत्यऽनुक्त्वेत्यर्थः । उक्तसूत्रेण जात्याकृतिव्यक्तिष्वेकपदार्थत्वं तत्पदजन्यैकबोधविषयत्वं प्राप्तं तच्च शक्त्यैक्यं विना न सम्भवतीति भावः ॥

॥ इति सामान्यशक्तिनिरूपणम् ॥

मीमांसकास्तु गवादिपदानां जातिरेव वाच्या न तु व्यक्तिराकृतिर्वा— व्यक्तिशक्तिमतेऽपि स्वरूपतस्तस्या ग्रहासंभवेन शक्तिज्ञानप्रकारीभूतायां जातौ शक्तेस्तदवच्छेदकताया वाऽवश्यकल्पनीयतया व्यक्त्यादौ तत्कल्पनायां गौरवात् प्रयोजनविरहाच्च । व्यक्तिशक्तिमते जातेरुपलक्षणत्वासंभवः प्रागेव दर्शितः । यथा व्यक्तिशक्तिमते जात्यंशे शक्तिस्तदवच्छेदकता वा तद्विशेषणानवच्छिन्नैव तथा जातिशक्तिमतेऽपि सा तथैवेति न गोत्वत्वादिप्रवेशाद् गौरवशङ्कापि. न हि जातिशक्तिमतेऽपि शाब्दबोधे सा किंचिद्धर्मप्रकारेण भासते येन प्रकारभानार्थं प्रकारविशेषमन्तर्भाव्य शक्तिः कल्पनीया. अपि तु स्वरूपत एव ।

---

मीमांसकयोर्भट्टप्रभाकरयोर्मध्ये संमति शक्तिविचारे भट्टमतमनुवदति— मीमांसका इत्यादिना । मीमांसकमते गवादिपदानां गोत्वादिजातावेव शक्तिर्न तु व्यक्तौ गौरवात्, जातिश्च व्यक्तिं विना न तिष्ठत्याऽऽनयनादीनां च जातावन्वयासंभवाज्जातिर्व्यक्तिमाक्षिपति तादृशाक्षेपेण व्यक्तिबोधो जायते इतिसिद्धान्तः । मूलग्रन्थश्च विशेषतो निगदव्याख्यात एव । आकृतिर्वेति चिन्त्यम्— मीमांसकैराकृतेरेव जातित्वस्वीकारादिति । उक्ते हेतुमाह— व्यक्तिशक्तीति, तस्याः=व्यक्तेः । तदवच्छेदकतायाः=शक्त्यवच्छेदकतायाः शक्यतावच्छेदकताया इतियावत् । तत्कल्पनायाम्=शक्तिकल्पनायाम् । तार्किकैर्व्यक्तौ शक्तिस्वीकारेऽपि जातावपि शक्तिः स्वीक्रियते एव व्यक्तौ स्वरूपतः=जातिनैरपेक्ष्येण शक्तिग्रहासंभवाद् आनन्त्यव्यभिचारदोषादिति जातावेव शक्तिर्युक्तेत्यर्थः। प्रयोजनविरहादिति— व्यक्तौ शक्तिस्वीकारस्य व्यक्तिभानमेव प्रयोजनं तच्च व्यक्तौ शक्त्यसत्त्वेऽपि जात्याक्षेपेण सम्भवत्येवेत्यर्थः । ननु व्यक्तिशक्तिमते जातेरुपलक्षणत्वं वक्ष्यामस्तया च जातौ शक्त्यपेक्षाभावान्न गौरवमित्याशङ्क्याह— व्यक्तिशक्तिमत इति, गोत्वादिजातेरुपलक्षणत्वे उपलक्षणत्वाविशेषाद् गवादिपदजन्यशाब्दबोधे द्रव्यत्वादेरपि भानापत्तिः स्यादिति तद्वारणाय गोत्वादिजातेर्व्यक्तिविशेषणत्वमेव स्वीकार्यं तथा च जातावपि शक्तिस्वीकारापत्त्या गौरवं स्यादेवेत्यर्थः । प्राक्=सामान्यकाण्डान्ते । ननु गोत्वत्वावच्छिन्नायामेव गोत्वादिजातौ शक्तिः स्यादिति जातिशक्तिमते गोत्वत्वादिप्रवेशाद् गौरवमित्याशङ्क्याह— यथेति । तद्विशेषणानवच्छिन्नैवेति— तद्=गोत्वादिजातिस्तद्विशेषणीभूतं यद् गोत्वत्वादिकं तदनवच्छिन्नैवेत्यन्वयः । सा=शक्तिः । तथैव=तद्विशेषणानवच्छिन्नैव । यथा तर्कमते स्वरूपत एव गोत्वादिजातौ गवादिपदानां शक्तिरस्ति न तु गोत्वत्वावच्छिन्नगोत्वादौ तथैव जातिशक्तिमतेऽपि स्वरूपत एव गोत्वादौ गवादिपदानां शक्तिरस्तीति न गोत्वत्वादिप्रवेशगौरवमिति सारः । स्वमतोपपत्तिमाह— न हीति । सा=जातिः । किंचिद्धर्मप्रकारेण=गोत्वत्वादिप्रकारेण । प्रकारभानार्थम्=गोत्वत्वादिभानार्थम् । प्रकारविशेषम्=गोत्वत्वादिकम् । स्वरूपत इति— गोत्वत्वाद्यनवच्छिन्नायामेव गोत्वादिजातौ शक्तिरित्यर्थः ।

अथाऽनुमानादिना गोत्वादौ शक्तिग्रहो भवन् धर्मितावच्छेदकविधया गोत्व-त्वादिकमवश्यं विषयी करोति निर्धर्मितावच्छेदकज्ञानस्यानुमानादिना जननाऽसं-भवात् तादृशज्ञानस्य विपरीतज्ञानाविरोधितयाऽनपयुक्तत्वाच्च. एवं च तादृशध-र्मस्य शक्यतावच्छेदकत्वं दुर्वारमेव. शक्तिग्राहकमानेन धर्मितावच्छेदकांशे तद-वच्छेदकताग्रहे बाधकाभावात् ।

यदि चावच्छेदकताग्रहेऽपि शक्तिधियस्तदंशे भ्रमत्वं कल्प्यते विषयबाधेनाऽव-च्छेदकत्वमेव शक्तिग्राहकमानेन न गृह्यते इत्येव वा स्वीक्रियते तदा प्रतियोगित्व-कारणत्वादीनामपि तुल्ययुक्त्याऽवच्छेदकत्वविलयप्रसङ्गः-तत्राप्येवं सुवचत्वात् । प्रतियोगित्वादिबुद्धेरवच्छेदकत्वावगाहित्वमनुभवसिद्धं यदि तदा शक्तिधियस्तद-वगाहिता न तथेति वचसि को वा श्रद्दधाति विशेषाभावात् । मा भूद्वा गोत्वत्वा-

ननु 'गवादिपदं गोत्वादिजातौ शक्तं गोत्वादिजातिबोधकत्वाद् यद् यस्य बोधकं तत् तत्र शक्तं भवति' इत्याद्यनुमानादिप्रमाणेनैव गोत्वादौ शक्तिग्रहो वक्तव्यः. प्रमाणेन च धर्मितावच्छेदक-धर्मस्य परामर्शो भवत्येवेति धर्मिभूतं यद् गोत्वादिकं तदवच्छेदकतया गोत्वत्वादेरपि शक्तिग्रहे प्रवेशः स्यादेवेति गौरवं स्यादेव, धर्मितावच्छेदकरहितं च ज्ञानमनुमानादिना न जन्यते येन गो-त्वत्वप्रवेशो न स्यात्, किं च निर्धर्मितावच्छेदककज्ञानोत्पत्तिस्वीकारेऽपि तादृशज्ञानस्य=निर्धर्मिता-वच्छेदककज्ञानस्य विपरीतज्ञानविरोधित्वं न संभवति- अवच्छेदकनिष्ठप्रत्यासत्त्यैव प्रतिबध्यप्रति-बन्धकभावस्वीकारादिति स्वरूपतो गोत्वादिविषयकशक्तिग्रहस्य 'गोपदं न गोत्ववाचकम्' इत्या-दिविपरीतज्ञानप्रतिबन्धकत्वासंभवान्निष्फलत्वं स्याद् न चैतदिष्टमिति तादृशधर्मस्य=गोत्वत्वादि-धर्मस्य शक्यतावच्छेदकत्वं दुर्वारमेव तथा च गौरवं स्यादेवेत्याशङ्कते- अथेति । शक्तिग्राहक-मानेन=शक्तिग्राहकानुमानादिना । धर्मितावच्छेदकांशे=गोत्वत्वादौ । तदवच्छेदकताग्रहे=शक्य-तावच्छेदकताग्रहे ।

ननु शक्तिग्रहे गोत्वत्वादेरवच्छेदकताग्रहेऽपि=शक्यतावच्छेदकताभानेऽपि शक्तिग्रहस्य तदंशे=गोत्वत्वादिनिष्ठशक्यतावच्छेदकत्वांशे भ्रमत्वं कल्प्यते तथा च शाब्दबोधे गोत्वत्वादेः शक्यताव-च्छेदकत्वेन भानापत्तिर्नास्ति- गोत्वत्वादिनिष्ठशक्यतावच्छेदकत्वस्य भ्रमविषयत्वात्, किं वा शक्तिग्राहकमानेन गोत्वत्वादौ शक्यतावच्छेदकत्वं गृह्यते एव न विषयबाधात्=गोत्वत्वादौ शक्ति-निरूपितावच्छेदकत्वस्य बाधादिति न शाब्दबोधे गोत्वत्वादेर्भानापत्तिरित्याशङ्क्याह- यदि चेति । किं वा प्रतिबन्द्युत्तरमाह- तदेति, एवं रीत्या प्रतियोगित्वादीनामप्यवच्छेदकत्वं न स्यादेवेत्यर्थः । किं वा निरूपितत्वं पञ्चम्यर्थ इति घटत्वादेः प्रतियोगितावच्छेदकत्वं दण्डत्वादेः कारणतावच्छेदकत्वं च न स्यादित्यर्थः ।ननु प्रतियोगित्वादिबुद्धेरवच्छेदकत्वावगाहित्वमनुभवसिद्धमिति न तद्विलयप्रसङ्ग इत्याश-ङ्क्याह-प्रतियोगित्वादीति । उत्तरमाह- तदेति । तदवगाहिता=गोत्वत्वादिनिष्ठशक्यतावच्छेदक-त्वावगाहिता । तथा=अनुभवसिद्धा । अभ्युपगम्याह- मा भूदिति । गोत्वादौ निरूपकत्वसंबन्धेन

दिकमवच्छेदकं शक्तेस्तथापि शक्तिज्ञानकारणतायां गुरुशरीरगोत्वत्वादेर्धर्मितावच्छेदकतात्मकविषयतानिवेशाद्गौरवं दुर्वारमेव । व्यक्तिशक्तिवादिना तु स्वरूपतो गोत्वादिनिष्ठधर्मितावच्छेदकत्वस्यैव निवेशादितिचेत् ?

न—पदविशेषणतापन्नशक्तौ निरूपितत्वसम्बन्धेन शक्तिसम्बन्धेन पदे वा स्वरूपतो गोत्वादिप्रकारिकाया एव शक्तिधियः स्वीकारात्, न हि समवायेनैव जातेः स्वरूपतः प्रकारतेति नियमः प्रामाणिकः—'घटं जानामि' इत्यादौ प्रकारितासम्बन्धेन स्वरूपतो घटत्वादीनां ज्ञानाद्यंशे प्रकारत्वोपगमात् । 'समवायेन धर्मिविशेषणतापन्नस्यैव सम्बन्धान्तरेणान्यत्र स्वरूपतो भानम्' इत्यपि न नियमः—प्रामाण्यस्य परतो ग्राह्यतामते 'अयं घटः' इत्याकारकस्य स्वरूपतो घट॰

---

शक्तिरप्यस्ति गोत्वत्वादिकमप्यस्तीति गोत्वत्वादौ शक्त्यवच्छेदकत्वम् । तथापीति— शक्तिग्राहकमाननिष्ठा या शक्तिज्ञानकारणता तस्या गोत्वत्वादिनिष्ठधर्मितावच्छेदकतात्मकविषयतानिवेशाद्गौरवं स्यादेव नाम शक्तिग्राहकमाने गोत्वत्वादेर्धर्मितावच्छेदकत्वेन प्रवेशाद् गौरव स्यादेवेत्यर्थः । गोत्वत्व हि सकलगोवृत्तित्वे सति गवेतरावृत्तित्वरूपमेवेति गुरुशरीरम्—भेदाद्यनेकपदार्थप्रवेशादित्युक्तम्— गुरुशरीरेति । तार्किकः स्वपक्षे गौरवाभावमाह—व्यक्तिशक्तीति, तर्कमते व्यक्तौ शक्तिरिति स्वरूपत एव गोत्वादौ धर्मितावच्छेदकत्व लब्धमिति गोत्वत्वादिप्रवेशाभावाद्गौरव नास्ति, यथा मीमांसकमते स्वरूपत एव गोत्वत्वादौ धर्मितावच्छेदकत्व मया प्रदर्श्यते इत्यर्थः ।

अथेत्यादिना शङ्कित परिहरति—नेति, यदि गोत्वादिजातिविशेष्यकशक्तिज्ञानमुच्येत तदा धर्मितावच्छेदकविधया गोत्वत्वादेः प्रवेशाद्गौरव स्यादपि नैवमुच्यते किं तु 'स्वनिरूपितत्वसम्बन्धेन गोत्वविशिष्टा शक्तिः' इत्येव निरूपितत्वसम्बन्धेन गोत्वप्रकारक शक्तिविशेष्यक शक्तिज्ञान स्वीक्रियते किं वा 'स्वनिरूपितशक्तिसम्बन्धेन गोत्वादिविशिष्ट गवादिपदम्' इत्येव शक्तिसम्बन्धेन गोत्वप्रकारक पदविशेष्यक शक्तिज्ञान स्वीक्रियते. अत्र च गोत्वस्य प्रकारत्वात् प्रकारतायाश्च निरवच्छिन्नाया अपि सम्भवात्र गोत्वत्वादिप्रवेशाद्गौरवमित्यर्थः । ननु जातेः समवायसम्बन्धेन स्वरूपतः प्रकारत्व सम्भवति यथा व्यक्तौ न तूक्तनिरूपितत्वादिसम्बन्धेनापीत्याशङ्क्याह— न हीति । उक्ते हेतुमाह—घटमिति, 'घट जानामि' इत्यत्र घटत्व यज्ज्ञाने स्वरूपत प्रकारतया भासते तत् प्रकारितासम्बन्धेनेति जाते समवायेनैव स्वरूपत प्रकारता भवतीति नियमो नास्तीत्यर्थः । ननु समवायेन धर्मिविशेषणतापन्नस्यैव सम्बन्धान्तरेणान्यत्र स्वरूपत प्रकारत्व भवति तथा च घटत्व समवायेन घटविशेषणमेवेति तत्रोक्तस्थले ज्ञाने प्रकारितासम्बन्धेन स्वरूपत प्रकारत्व युज्यते न त्वेव जाते शक्तौ पदे वेत्याशङ्कयाह— समवायेनेति । उक्ते हेतुमाह—प्रामाण्यस्येति, 'अय घट' इत्याकारकस्य स्वरूपतो घटत्वादिज्ञानस्य यः 'घट जानामि' इत्यनुव्यवसायो भवति तादृशानुव्यवसाये या प्रकारिता तादृशप्रकारितायां नामाऽनुव्यवसायनिष्ठप्रकारितायां स्वनिरूपितत्वसम्बन्धेन तत्सम्बन्धेन=प्रकारितासम्बन्धेन ज्ञाने=अनुव्यवसाये वा समवायेन धर्मिवि-

त्वादिज्ञानस्यानुव्यवसाये प्रकारितायां तत्सम्बन्धेन ज्ञाने वा समवायेन धर्मिविशेषणतानापन्नस्यैव घटत्वादेर्भानात् ।

अस्तु वा प्रकृतेऽपि गवादिविशेषणतापन्नस्यैव गोत्वादेः शक्तौ निरूपितत्वसम्बन्धेन पदे वा शक्तिसम्बन्धेन स्वरूपतः प्रकारता. गवादेश्च शक्तौ पदे वा स्वसमवेतनिरूपितत्वस्वसमवेतगोत्ववाचकत्वरूपपरम्परासंबन्धेन प्रकारता. तादृशी च गवादिविषयता न शाब्दबोधजनकतावच्छेदिकेति परम्परासम्बन्धेन प्रकारताया जनकतावच्छेदकत्वापेक्षया साक्षात्सम्बन्धावच्छिन्नप्रकारतायास्तथात्वे लाघवेन व्यक्तिशक्तिसिद्धेर्नावकाशः ।

स्वरूपत प्रकारत्व भवतीति समवायेन धर्मिविशेषणतापन्नस्यैव विशेषणताऽनापन्नस्यैव घट आदे स्वरूपत प्रकारत्व भवतीत्ययमपि नियमो नास्तीत्यन्वय । अयमर्थ — तर्कमते तद्वति यान्यत्र स्वरूपत प्रकारत्व भवतीत्ययमपि नियमो नास्तीत्यन्वय: । अयमर्थः— तर्कमते तद्वति तत्प्रकारकत्वेन प्रामाण्य तत्रानुव्यवसायेन गृह्यते यदि 'अय घट ' इत्यत्र घटत्व घटविशेषणत्वेन भासेत तदा 'अय घट ' इति ज्ञानस्य घटत्ववति घटत्वप्रकारकत्वप्राप्त्या तत्प्रामाण्यस्यानुव्यवसायेन ज्ञानापेक्षा न स्यादिति प्रामाण्य परतो ग्राह्य न स्याद् अस्ति च तर्कमते प्रामाण्य परत = अनुव्यवसायेन ग्राह्यमिति 'अय घट ' इत्यत्र घटत्व घटविशेषणत्वेन न भासते तथा च 'घटं जानामि' इत्यनुव्यवसायकाले समवायेन घटविशेषणतानापन्नमेव घटत्वमनुव्यवसाये प्रकारिताख्यविषयतानिष्ठप्रकारितायां-वा स्वनिरूपितत्वसम्बन्धेन स्वरूपत प्रकारो भवति यथा तया जातेरपि धर्मिविशेषणतानापन्नाया शक्तौ पदे वोक्त स्वरूपत प्रकारत्व नानुपपन्नमिति । 'समवायेन धर्मिविशेषणतानापन्नस्यैवान्यत्र सम्बन्धान्तरेण स्वरूपत प्रकारत्व भवति' इति नियममभ्युपगम्याह— अस्तु वेति । व्यक्तेरन्वयमाह— गवादेरिति, शक्तौ व्यक्ते स्वसमवेतनिरूपितत्वसम्बन्धेन प्रकारता. स्व व्यक्तिस्तत्समवेता जातिस्तन्निरूपितत्व शक्तावस्त्येव, पदे च व्यक्तेः स्वसमवेतगोत्ववाचकत्वसम्बन्धेन प्रकारता स्व व्यक्तिस्तत्समवेता जातिस्तद्वाचकत्व पदेऽस्त्येवेत्यर्थः । तथा च यथा व्यक्तेरपि प्रकारत्वे शक्तिज्ञाने व्यक्तिविषयता= व्यक्तिविषयकता प्राप्ता तथा च यथा शक्तिज्ञानस्य जातिविषयकत्वाज्जातौ शक्तिस्तथा गवादिव्यक्तिविषयकत्वाद् व्यक्तावपि गवादिपदानां शक्ति किं न स्यादित्याशङ्कयाह— तादृशीति, यद्विषयता शक्तिज्ञाननिष्ठशाब्दबोधजनकताया अवच्छेदिका भवति तत्रैव शक्ति स्वीक्रियते परम्परासम्बन्धेन प्रकारताया जनकतावच्छेदकत्वापेक्षया च साक्षात्सम्बन्धावच्छिन्नप्रकारतायास्तथात्वे=जनकतावच्छेदकत्वे लाघव भवति व्यक्तेश्च शक्तौ पदे चोक्तपरम्परासम्बन्धेनैव प्रकारतेति गवादिव्यक्तिविषयता शक्तिज्ञाननिष्ठशाब्दबोधजनकताया अवच्छेदिका न भवतीति न व्यक्तौ शक्तिसिद्धेरवकाश , जातेस्तु शक्तौ पदे चोक्तसाक्षात्सम्बन्धेन प्रकारतास्तीति जातिविषयता शक्तिज्ञाननिष्ठशाब्दबोधजनकताया अवच्छेदिका भवतीति जातौ शक्ति सिद्धा । तादृशी=परम्परासंबन्धावच्छिन्ना । विषयतापदेन चात्र प्रकारताख्यविषयता ग्राह्या तथा च न पूर्वापरविरोध ।

अथ जातिशक्तिमतेपि शाब्दबोधे व्यक्तिभानमावश्यकम्– ' गौर्नष्टा ' ' गौर्जाता ' ' गामानय ' इत्यादौ समभिव्याहृतपदार्थान्वयस्य जातौ बाधात्, परम्परासंबन्धेन तदन्वयोपगमेप्यन्वयितावच्छेदकतया गोत्वत्वादिभानापत्तेः शक्तौ गोत्वत्वाद्यन्तर्भावापत्तेश्च । न हि स्वरूपेण पदार्थस्य पदार्थान्तरान्वयितया भानं केश्चित् स्वीक्रियते. स्वीकुरु वा प्रकारतया स्वरूपेणोपस्थितजातेर्भानं विशेष्यतया तद्भानं तु न संभवत्येव. निर्धर्मितावच्छेदककस्य शाब्दबोधस्य प्रवृत्त्याद्यनुपयोगितया तत्स्वीकारासंभवात् ।

एवं च जातिमात्रवाचकत्वेनाभ्युपगतपदस्यापि व्यक्तिबोधजनकतायामप्यविवादाद् व्यक्तिशक्तिर्ध्रुवैव– शक्तिभ्रमाजन्यलक्षणाग्रहाजन्यतद्बोधजनकताया एव तच्छक्तिसाधकत्वात्, अन्यथा जातावपि शक्त्यसिद्धिप्रसङ्गात् । एवं शक्तेरीश्वरसंकेतरूपत्वे व्यक्तिबोधकतायाः पदेऽबाधितत्वेनेश्वरेच्छा विषयतया तस्या अपि शक्यत्वं दुरपह्नवम् । न हि मीमांसकैर्भगवान्नानुमन्यते इत्येतावतैव तादृशयुक्त्य-

---

तार्किकः पुनः शङ्कते–अथेति । व्यक्तिभानावश्यकत्वे हेतुमाह– गौरिति । समभिव्याहृतपदार्थान्वयस्य=नाशाद्यन्वयस्य । जातेर्नित्यत्वेन तन्नाशस्य तदुत्पत्तेश्चासंभवः, निरवयवत्वेन तदानयनस्यासंभवः । व्यक्तेस्तु नाशादयः संभवन्तीत्यर्थः । ननु जातावपि स्वाश्रयसमवेतत्वादिपरम्परासंबन्धेन नाशादेरन्वयः संभवतीति न नाशाद्यन्वयार्थं व्यक्तिभानापेक्षेत्याशङ्क्याह–परम्परेति, तत्र स्वमानयनादिस्तदाश्रयो व्यक्तिस्तत्र समवेतत्वं जातावस्त्येव । एवं परम्परासंबन्धेन जातौ नाशाद्यन्वयोपगमेऽप्यन्वयितावच्छेदकतया गोत्वत्वादेः शाब्दबोधे भानापत्तिः स्यादिति तत्रापि गोत्वत्वादेरन्तर्भावश्च स्यादिति पूर्वप्रदर्शितगौरवं स्यादेवेत्यर्थः । विपक्षे बाधकमाह– न हीति । तद्भानम्=स्वरूपतो जातिभानम् । विशेष्यतया भाने विशेष्यतावच्छेदकतया गोत्वत्वादेर्भानावश्यकत्वात्, अनवच्छिन्नविशेष्यताया अस्वीकारात्, प्रकारताया स्त्वनवच्छिन्नाया अपि स्वीकारादिति भावः । जातेः स्वरूपतो विशेष्यतया भानस्वीकारे दोषमाह– निर्धर्मितेति । तत्स्वीकारासंभवात्=स्वरूपतो जातिविशेष्यकशाब्दबोधस्य स्वीकारासंभवात् ।

तार्किक उपसंहरति–एवं चेति । व्यक्तिशक्तिवादे विनिगमनामाह– शक्तिभ्रमेति, यस्मात् पदाच्छक्तिभ्रमेण वा लक्षणाग्रहेण वा यस्य बोधो जायते तस्य पदस्य तस्मिन् पदार्थे शक्तिर्न भवति यथा गगर्यादिपदानां घटत्वावच्छिन्ने गङ्गादिपदाना च तीरादौ तथा च शक्तिभ्रमाजन्यो लक्षणाग्रहाजन्यश्च यस्तद्बोधः पदे या तादृशबोधजनकता तादृशजनकतैव तस्य पदस्य तस्मिन् पदार्थे शक्तेः साधिका भवति यथा जातौ. व्यक्तिविषयकबोधोपि शक्तिभ्रमाजन्यो लक्षणाग्रहाजन्यश्चेति तादृशव्यक्तिबोधजनकत्वादेव पदस्य व्यक्तौ शक्तिः सिद्धेत्यर्थः । विपक्षे बाधकमाह– अन्यथेति । उपपत्त्यन्तरमाह– एवमिति । तस्याः=व्यक्तेः । ननु यदि मीमांसकैरीश्वरः स्वीक्रियेत तदा शक्तेरीश्वरसंकेतरूपत्वं स्यादपि न चैवमस्तीत्याशङ्क्याह–न हीति । तादृशयुक्त्यनवकाशः=

ऽनवकाशः- तत्साधकबहुतरमानसत्त्वेन तदुपन्यासस्यापि निरुत्तरत्वापातात्।
एवं ज्ञाने पदानां शक्तिरित्येतादृशमतेऽपि व्यक्तिज्ञानजननसमर्थपदस्य जाताविव व्यक्तावपि वाच्यत्वं दुरपन्ह्वमेव- शक्तिनिरूपकज्ञानाविषयत्वरूपस्य तस्याविशेषेण जातिव्यक्त्योःसत्त्वादितिचेत्?,

न- व्यक्तिशक्तावस्माकं न वैमत्यमपि तु व्यक्तिशक्तिज्ञानत्वेन शक्तिज्ञानहेतुतायामेव. अत एव व्यक्त्यंशे कुब्जा शक्तिरितिगीयते- तदंशे तज्ज्ञानानपेक्षणात्. अत एव व्यक्तेर्न वाच्यता न हि शक्तिधीविषयतामात्रेणैव वाच्यता- तादृशविषयताया अन्वयसाधारण्यात्. अपि तु यद्विषयकत्वेन शक्तिज्ञानस्य तद्विषयकशाब्दधीजनकत्वं तत्त्वमेव तद्वाच्यताव्यवहारनियामकम्। अन्वयांशे कुब्जशक्तिसत्त्वेपि यथा तद्विषयकत्वं शक्तिज्ञानजनकतायां नावच्छेदकं तथा व्यक्त्यंशे तत्सत्त्वेपि तद्विषयकत्वस्य शक्तिज्ञानजनकतायामनवच्छेदकत्वान्न व्यक्तौ तद्व्यवहारः।

तत्साधक=ईश्वरसाधक। तदुपन्यासस्य=ईश्वरसाधकयुक्तिप्रमाणोपन्यासस्य। ज्ञानशक्तिवादिमतेऽपि व्यक्तेर्वाच्यत्वमावश्यकमित्याह- एवमिति, तस्य=वाच्यत्वस्य। ज्ञानशक्तिवादिमते शक्तिनिरूपक ज्ञान तद्विषयत्वमेव वाच्यत्वमस्ति यथा जातौ तथ व्यक्तावप्यस्त्येवेत्यर्थ।

ईश्वरसाधकयुक्त्यनवकाश।

अथेत्यादिना शङ्कित मीमांसक परिहरति- नेति, व्यक्तौ पदस्य शक्तिरस्त्येव यद्यपि तथापि व्यक्तिनिरूपिता शक्तिज्ञानस्य शाब्दबोध प्रति व्यक्तिनिरूपितशक्तिज्ञानत्वेन कारणत्व नास्तीति व्यक्तिनिरूपिता शक्ति स्वरूपसत्येनोपयुज्यते न तु ज्ञाता सती जातिनिरूपिता शक्तिश्च ज्ञाता सत्युपयुज्यते इति शक्तिज्ञानस्य शाब्दबोध प्रति जातिनिरूपितशक्तिज्ञानत्वेन कारणत्वमस्तीत्ययमेव जातिव्यक्त्यो शक्तेर्विवेक। अत एव=शक्तिज्ञानस्य शाब्दबोध प्रति व्यक्तिशक्तिज्ञानत्वेन रूपेण कारणताभावादेव। व्यक्तिशक्ते कुब्जत्वे हेतुमाह- तदंशे इति, तदंशे=व्यक्त्यंशे तज्ज्ञानानपेक्षणात्= शाब्दबोध प्रति व्यक्तिनिरूपितशक्तिज्ञानस्यापेक्षाभावादित्यर्थ। अत एव=व्यक्तिनिरूपितशक्तिज्ञानस्यापेक्षाभावादेव। स्वाभिप्रायमाह- न हीति। तादृशविषयताया= शक्तिज्ञानविषयताया। यदि शक्तिज्ञानविषयतामात्रेण वाच्यत्व स्यात्तदा समवायस्य वाच्यत्व स्याद् न चैवमस्तीति न शक्तिज्ञानविषयत्वेन व्यक्तेर्वाच्यत्वापत्तिरित्यर्थ। अन्वयसाधारण्यात्= शक्तिज्ञानविषयत्वेन समवायस्यापि शक्तिज्ञानविषयत्वाद् गवादिपदवाच्यत्वाया एव जाते समवायादिसवन्धसाधारणत्वात्। वाच्यत्वनियामकमाह- अपि त्विति, यथा जातिविषयकत्वेन शक्तिज्ञानस्य जातिविषयकशाब्दबोधजनकत्वमस्तीति जातेर्वाच्यत्वमित्यन्वय। उपसहरति- अन्वयांशेति, यथा समवायादिसम्बन्धे कुब्जशक्तिसत्त्वेपि तद्विषयकत्वम्=समवायादिविषयकत्व शक्तिज्ञाननिष्ठशाब्दबोधजनकताया अवच्छेदक न भवतीति न समवायादौ गवादिपदवाच्यत्वव्यवहारस्तथा व्यक्तौ तत्सत्त्वेपि=कुब्जशक्तिसत्त्वेपि तद्विषयकत्वस्य=व्यक्तिविषयकत्वस्य शक्तिज्ञानजनि

तद्विषयकत्वस्य शाब्दधीविशेषणत्वाद्गवादिपदशक्तिज्ञानस्य गोत्वादिज्ञानविषयकत्वेन गोत्वादिशाब्दधीहेतुत्वेऽपि न गवादिपदस्य गोत्वादिज्ञानवाचकत्वापत्तिः ।

वस्तुतो यद्विषयकत्वविशिष्टज्ञानविषयकत्वेन शक्तिज्ञानस्य शाब्दधीजनकता यद्विषयकत्वेन वा शाब्दधियः शक्तिज्ञानजन्यता तत्त्वमेव तथा । एतेन 'ज्ञानत्व-

---

प्रशाब्दबोधजनकतावच्छेदकत्वाभावान्न व्यक्तौ तद्व्यवहार=गवादिपदवाच्यत्वव्यवहार इत्यन्वय । व्यक्तिनिरूपितशक्तिविषयकज्ञानापेक्षाभावान्न व्यक्तेर्वाच्यत्वमित्यर्थ । शक्तिज्ञाने शाब्दबोधजनकताऽप्यस्ति जातिविषयकत्वमप्यस्तीति जातिविषयकत्व शक्तिज्ञाननिष्ठजनकताया अवच्छेदक जातमिति जातेर्वाच्यत्व प्राप्तम् । यदि " यद्विषयकत्वेन शक्तिज्ञानस्य तद्विषयकशाब्दधीजनकत्वम् " इति वाच्यत्वलक्षणे तद्विषयकत्व शक्तिज्ञानविशेषण स्यात्तदा शक्तिज्ञाने स्वजन्यगोत्वादिज्ञानविषयकत्वस्यापि सत्त्वाद् गोत्वादिज्ञानस्यापि गवादिपदवाच्यत्व स्याद् न चैतदिष्टमिति न तद्विषयकत्व शक्तिज्ञानविशेषण किं तु शक्तिज्ञानजन्यशाब्दबोधविशेषण तथा च गोत्वादिशक्तिज्ञानेन गोत्वादिविषयकशाब्दबोधो जन्यते न तु गोत्वादिविषयकज्ञानविषयकशाब्दबोध इति न गोत्वादिज्ञानस्य गवादिपदवाच्यतापत्तिर्न वा गवादिपदस्य गोत्वादिज्ञानवाचकत्वापत्तिरित्याह—तद्विषयकत्वस्येति ।

ननूक्तवाच्यत्वलक्षणेन ज्ञानत्वविषयकज्ञानस्यापि ज्ञानपदवाच्यत्वं स्यात् तथा हि ज्ञानशक्तिवादे जातिविषयकज्ञानस्य शक्यत्व शक्तिज्ञानविषयत्व च प्राप्तमिति ज्ञानपदस्थले शक्य यज्ज्ञानत्वज्ञान तद्विषयकत्वेनैव ज्ञानपदशक्तिज्ञानस्य शाब्दबोधजनकत्वे प्राप्ते "तद्विषयकशाब्दधीजनकत्वम्" इत्यत्र तत्पदेन ज्ञानत्वज्ञानस्यापि ग्रहीतु शक्यत्वात् ज्ञानविषयकशाब्दबोधजनकत्वपक्षे च ज्ञानत्वज्ञानस्यापि सामान्यतो ज्ञानत्वाज् ज्ञानत्वज्ञानस्यापि ज्ञानपदवाच्यत्व स्यादेव हरिनाथेनाप्युक्तम् "ज्ञानविषयकशाब्दत्वावच्छिन्न प्रति ज्ञानपदशक्तिज्ञानत्वेन कारणतया ज्ञानत्वज्ञानस्य च सामान्यतो ज्ञानविषयकत्वेन तद्विषयकशाब्दधीजनकत्वमित्यत्र तत्पदेन ज्ञानत्वज्ञानस्यापि धर्तुं शक्यत्वात्" इति आपत्तिश्चैवा गवादिपदस्थलेऽपि विज्ञेया—शक्यगोत्वादिज्ञानविषयकत्वेन गवादिपदशक्तिज्ञानस्य शाब्दधीजनकत्वप्राप्त्या वाच्यत्वलक्षणघटकयत्तत्पदयो समानार्थकत्वाच्चेत्याशङ्क्याह— वस्तुत इति । यदिति—यथा ज्ञानशक्तिवादे गोत्वादिविषयकत्वविशिष्ट यद्गोत्वादिविषयक शक्यं ज्ञान तादृशज्ञानविषयकत्वेनैव गवादिपदशक्तिज्ञानस्य शाब्दबोधजनकत्वमस्तीति तत्त्वमेव तथा=वाच्यताव्यवहारनियामक इति गोत्वादेरेव गवादिपदवाच्यत्व प्राप्त न तु गोत्वादिज्ञानस्यापीत्यन्वय , शक्तिज्ञानविषयीभूत यज्ज्ञान तादृशज्ञानविषयस्य वाच्यत्वमितियावत् तादृशज्ञानविषयत्व च गोत्वादेरेव न तु गोत्वादिज्ञानस्यापि येन तस्य वाच्यत्व स्यादित्यर्थ । लक्षणान्तरमाह—यद्विषयकत्वेनेति—गवादिपदस्थले शाब्दबोधस्य गोत्वादिविषयकत्वेनैव शक्तिज्ञानजन्यतास्ति न तु गोत्वादिज्ञानविषयकत्वेनापीति गोत्वादेरेव गवादिपदवाच्यत्व प्राप्त न तु गोत्वादिज्ञानस्यापि । एवमेव ज्ञानपदस्थलेऽपि ज्ञानत्वज्ञानविषयकत्वेन शक्तिज्ञानस्य शाब्दधीजनकत्वात् शाब्द-

ज्ञानस्यापि ज्ञानपदवाच्यतापत्तिः– शक्यज्ञानविषयकत्वेनैव ज्ञानपदशक्तिज्ञानस्य ज्ञानत्वज्ञानविषयकशाब्दधीजनकत्वात्' इति परास्तम् । कारणत्वस्य कार्यत्वस्य चावच्छेदकगर्भे गोत्वादिविषयकत्वस्य निवेशाद्गोत्वादेर्वाच्यतोपपत्ति । एवं च 'गौर्गोपदशक्या' इत्याकारिकापि शाब्दबोधोपयोगिशक्तिधीः सम्भवति–व्यक्त्यंशे शक्तेरबाधेनाऽन्यथाख्यात्यापत्तिविरहात् । तादृशज्ञानस्य शाब्दधीहेतुत्वेऽपि गोत्वधर्मितावच्छेदककशक्तिज्ञानत्वेन व्यक्तिविषयतामनन्तर्भाव्यैव गोत्वप्रकारकशाब्दबुद्धौ तथात्वात्, उक्तरीत्या व्यक्तेरवाच्यतोपपत्तिः ।

न चैवं व्यक्त्यंशे शक्तिज्ञानस्यापेक्षिततया तदंशे शक्तेः कुब्जत्वानुपपत्तिरिति वाच्यम्, कार्यकारणभावाऽवच्छेदककोटौ व्यक्त्यनन्तर्भावस्यैव तदंशे कुब्जत्वव्य-

ज्ञानपद-
भिपदश्च ज्ञानत्वविषयकत्वेन शक्तिज्ञानजन्यत्वाद् यत्पदाभ्यां ज्ञानत्वस्य ग्रहणाज्ज्ञानत्वस्यैव
वाच्यत्वं प्राप्तं न ज्ञानत्वज्ञानस्यापीत्याह–एतेनेति । गोत्वादौ वाच्यत्वस्य समन्वयमाह–कारण-
त्वस्येति, कारणं शक्तिज्ञानं तदवच्छेदकं यद्विषयकत्वविशिष्टज्ञानविषयकत्वं तद्गर्भे=तत्र तथा कार्यं
शाब्दबोधस्तदवच्छेदकं यद्विषयकत्वं तद्गर्भे=तत्र गोत्वादिविषयकत्वस्य निवेशाद् नाम लक्षणद्वयेऽपि
यत्पदेन गोत्वादिजातेर्ग्रहणाद्गोत्वादेर्वाच्यत्वमुपपन्नमित्यन्वयः । एवं च=व्यक्तावपि कुब्जशक्तिस-
त्त्वेन 'गौर्गोपदशक्या' इत्याकारकशक्तिज्ञानस्यापि शाब्दबोधजनकत्वं सम्भवतीत्याह–एवं चेति ।
ननु गवादिव्यक्तौ तव मते शक्तेरसत्त्वेन शक्यत्वाभावाच्छक्यसामानाधिकरण्याभावात् व्यक्तौ शक्यत्वावगा-
हिनः 'गौर्गोपदशक्या' इत्याकारकज्ञानस्याऽन्यथाख्यातिः स्यात् तेन चाऽप्रामाण्यं स्यादित्या-
शङ्क्योक्ते हेतुमाह–व्यक्त्यंशे इति, व्यक्तावपि कुब्जशक्तिमत्त्वेनोक्तशक्तिज्ञानस्याऽन्यथाख्या-
तित्वापत्तिर्नास्ति येनाऽप्रामाण्यं स्यादित्यर्थः । अत्र 'अन्यथाख्यातित्वापत्तिविरहात्' इति युक्त-
पाठः । अन्यथा=अन्यगतधर्मपुरस्कारेण ख्यातिः=प्रतीतिरित्यर्थः । ननु 'गौर्गोपदशक्या'
इत्याकारकशक्तिज्ञानस्य व्यक्तिविशेष्यकत्वेन तज्जन्यशाब्दबोधस्यापि व्यक्तिविशेष्यकत्वापत्त्या
व्यक्तेरपि वाच्यत्वं प्राप्तमिति कथं व्यक्तेरवाच्यत्वमुच्यते ? इत्याशङ्क्याह–तादृशज्ञा-
नस्येति, तादृशज्ञानस्य='गौर्गोपदशक्या' इत्याकारकशक्तिज्ञानस्य यद्यपि शाब्दबोधहेतुत्वमस्ति
तथापि गोत्वधर्मितावच्छेदककशक्तिज्ञानत्वेन रूपेण व्यक्तिविषयतामनन्तर्भाव्यैव गोत्वप्रकारकशाब्द-
बोधे हेतुत्वमस्तीत्युक्तरीत्या व्यक्तेरवाच्यत्वमुपपन्नम् । यदि व्यक्तिविषयतया उक्तशक्तिज्ञानेऽन्त-
र्भावः स्यात्तदा व्यक्तेर्वाच्यत्वं स्यादपि न चैवमस्तीत्यर्थः । तथात्वात्=हेतुत्वात् । उक्ता रीतिश्च
किंचित्पूर्वग्रन्थे द्रष्टव्या । जातिविषयतायाश्चान्तर्भावाज्जातेर्वाच्यत्वमप्युपपन्नमिति ।

ननु 'गौर्गोपदशक्या' इत्याकारकशक्तिज्ञानस्यापि शाब्दबोधहेतुत्वे शाब्दबोधं प्रति व्यक्ति-
विषयकशक्तिज्ञानस्याप्यऽपेक्षितत्वापत्त्या तदंशे=व्यक्तौ शक्तेः कुब्जत्वं न स्याद्– व्यक्तिविषय-
कशक्तिज्ञानस्याऽनपेक्षितत्वेनैव पूर्वं व्यक्तिशक्तेः कुब्जत्वप्रतिपादनादित्याशङ्क्याह– न चैवमिति ।
परिहारहेतुमाह– कार्येति, कार्यं शाब्दबोधस्तदवच्छेदकं यद् यद्विषयकत्वं तत्र कारणं शक्तिज्ञान-

वहारनिर्वाहकत्वात्, अत एव सामान्यलक्षणापूर्वपक्षे मणिकृतां समानप्रकारकत्वेन शक्तिज्ञानशाब्दबोधयोर्हेतुहेतुमद्भावाभिधानमपि न विरुद्ध्यते ।

न च शक्त्यंशे गोत्वादिप्रकारकज्ञानस्य गवांशे गोत्वप्रकारकशाब्दबोधहेतुत्वेऽपि कार्यकारणयोः समानप्रकारकत्वस्याऽक्षतत्वान्नाऽनुभवविरोध इतिवाच्यम्, शक्त्यंशे गोत्वादिप्रकारतामादाय समानप्रकारकत्वस्याभिप्रेतत्वे "अपूर्वे वक्ष्यते" इत्यस्याऽसंगत्यापत्तेः— अपूर्ववादे 'समानप्रकारकात् लिङ्पदस्य कार्यत्वेन घटादिरूपकार्ये शक्तिज्ञानात् कार्यत्वेनाऽपूर्वविषयकशाब्दबोधः' इत्येवाऽभिधानात्, शक्त्यंशे शाब्दधीप्रकारप्रकारकज्ञानस्य हेतुतायास्तत्राऽनुक्तेः ।

---

तदवच्छेदक यद् यद्विषयकत्वविशिष्टज्ञानविषयकत्वं तत्र च व्यक्तेः प्रवेशाभावादेव तदंशे=व्यक्तौ शक्तेः कुञ्जत्वमित्यर्थः, एतच्चानुपदमेव प्रतिपादितम् । अत एव=' गौर्गोपदशक्या ' इत्याकारकशक्तिज्ञानस्वीकारेऽपि गोत्वादिप्रकारकशाब्दबोधत्वेन गोत्वादिप्रकारकशक्तिज्ञानत्वेन च कार्यकारणभावस्वीकारेण कार्यकारणभावावच्छेदककोटौ व्यक्तिविषयकत्वस्यानन्तर्भावादेव मणिकारोक्तः शाब्दबोधशक्तिज्ञानयोः समानप्रकारकत्वेन कार्यकारणभावोऽस्माकं मतेन न विरुद्ध्यते इत्यन्वय । गोत्वादिप्रकारकं शक्तिज्ञानं गोत्वादिप्रकारक एव तेन शाब्दबोधश्च जायते न तत्र व्यक्तेरन्तर्भाव इत्यर्थः ।

ननु शक्तिविषयकगोत्वादिप्रकारकज्ञानस्य व्यक्तिविषयकगोत्वादिप्रकारकशाब्दबोधं प्रति हेतुत्वेऽपि कार्यकारणयोः=शाब्दबोधशक्तिज्ञानयोः समानप्रकारकत्वमक्षतमेवेति तर्कमतानुसारेण व्यक्तेः शाब्दबोधशक्तिज्ञानविषयत्वेऽपि मणिकारस्य शाब्दबोधशक्तिज्ञानयोः समानप्रकारकत्वाभिधानं न विरुद्ध्यते इत्याशङ्कयाह— न चेति । परिहारहेतुमाह— शक्त्यंश इति, व्यक्तिविशेष्यकगोत्वादिजातिप्रकारकयोः शक्तिज्ञानशाब्दबोधयोर्यत् त्वदभिप्रेतं गोत्वादिना समानप्रकारकत्वं तादृशसमानप्रकारकत्वस्य मणिकाराभिप्रेतत्वे मणिकारोक्तस्य "अपूर्वे वक्ष्यते" इत्यस्यासंगतिः स्यादित्यर्थः । अपूर्वे=अदृष्टलक्षणाऽपूर्वपदार्थप्रतिपादनावसरे । मणिकारेणापूर्वग्रन्थे यदुक्तं तदाह— समानप्रकारकादिति, लिङ्पदस्य कार्यत्वेन रूपेण घटादिरूपकार्ये कार्यत्वप्रकारकं यच्छक्तिज्ञानं जायते तादृशशक्तिज्ञानात् कार्यत्वेन रूपेणाऽदृष्टलक्षणापूर्वपदार्थविषयकशाब्दबोधो लिङ्पदेन "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादिस्थले जायते इत्यर्थः । अपूर्ववादोक्ततद्ग्रन्थेन ' कार्यत्वेन शक्तिज्ञानात् कार्यत्वेनापूर्वविषयकशाब्दबोधः ' इत्येव लभ्यते न तु शाब्दबोधे व्यक्तिप्रकारतया भासमानं यद् गोत्वादिकं तादृशगोत्वादिप्रकारकं यद् व्यक्तिविशेष्यकं शक्तिविषयकज्ञानं तादृशशक्तिज्ञानस्य शाब्दबोधं प्रति हेतुत्वमिति लभ्यते येन मणिकारोक्तं शक्तिज्ञानशाब्दबोधयोः समानप्रकारकत्वं त्वदनुकूलं स्यादित्याह— शक्त्यंशे इति । मीमांसकमते च शक्तिज्ञाने शक्तौ पदे वा गोत्वादिकं प्रकारतया भासते इति शक्तिज्ञानं गोत्वादिप्रकारकं जायते शाब्दबोधे चाक्षिप्यमाणव्यक्तिप्रकारतया गोत्वादिकं भासते इति शाब्दबोधोऽपि गोत्वादिप्रका-

न चैवम् 'जात्यंशे सा ज्ञाता व्यक्त्यंशे च स्वरूपसती हेतुर्लाघवादिति कुब्जशक्तिवादः' इत्यादिचिन्तामणिग्रन्थविरोध इति वाच्यम्, मतभेदेनोभयग्रन्थसंगतेः ।

वस्तुतस्तु जातिधर्मितावच्छेदकशक्तिज्ञानस्य हेतुत्वे व्यक्तेर्विषयतापि कारणतावच्छेदककोटौ निविशते— विशेष्यतावच्छेदकतात्वेनैव धर्मितावच्छेदकीयविषयताविशेषस्य निवेशनीयत्वात्, अवच्छेदकतानिरूपकविशेष्यताया व्यक्तिविषयतारूपत्वात्, एवं च व्यक्तेर्वाच्यताव्यवहारस्य कथं चिदुपपादनेपि शक्त्यंशे जातिप्रकारकज्ञानहेतुतामतापेक्षया गौरवं दुर्वारमेव— कारणतावच्छेदकेऽधिकविषयतानिवेशात् ।

---

रको जायते इत्येव रूपेण शक्तिज्ञानशाब्दबोधयो समानप्रकारकत्व विशेयम् । मणिकारेण चाऽपूर्वेनादेपि व्यक्तिविशेष्यकजातिप्रकारकशक्तिज्ञानस्य कारणत्व नोक्तमिति न व्यक्तेर्वाच्यत्वम् । अपूर्वपदार्थस्याऽप्रत्यक्षत्वेन तत्र लिङादिपदस्य शक्तिज्ञान न सम्भवति घटादिकमपि कार्यमेवेति तत्र लिङादिपदस्य कार्यत्वेन रूपेण शक्तिज्ञान सम्भवतीति घटादिरूपकार्ये शक्तिज्ञानमुक्तम् । वस्तुतस्तु क्रियारूपकार्ये लिङादिपदस्य कार्यत्वेन शक्तिज्ञान तेन च कार्यत्वेनापूर्वविषयकशाब्दबोध इति वक्तव्यम् ।

ननु यदुक्तरीत्या कार्यकारणभावावच्छेदककोटौ व्यक्तिविषयकत्वस्यानन्तर्भावादेव व्यक्तौ कुब्जा शक्तिस्तदा मणिकारेण "जात्यंशे सा ( शक्ति ) ज्ञाता व्यक्त्यंशे च स्वरूपसती हेतुर्लाघवादिति कुब्जशक्तिवाद" इति यदुक्त तेन विरोध इत्याशङ्कयाह— न चैवमिति । परिहारहेतुमाह— *मतभेदेनेति*, *कुब्जशक्तिवादिनामनेकानि मतानि सन्ति तत्र केन चिन्मतेन यथा* कार्यकारणभावावच्छेदककोटौ व्यक्तिविषयकत्वस्यानन्तर्भावाद् व्यक्तौ शक्तेः कुब्जत्वमुक्तम्, केन चिन्मतेन च मणिकारेण व्यक्तौ स्वरूपसत्त्वेन शक्तेः कुब्जत्वमुक्तमित्युभयसंगति ।

कुब्जशक्तिवादिना मतेपि जातिप्रकारकशक्तिज्ञानस्य शाब्दबोधहेतुत्वमतापेक्षया जातिधर्मितावच्छेदकशक्तिज्ञानस्य हेतुत्वे गौरव प्रदर्शयति— वस्तुत इति, जातिधर्मितावच्छेदक यत्र शक्तिज्ञाने तज्जातिधर्मितावच्छेदकशक्तिज्ञान तस्य शाब्दबोध प्रति हेतुत्वे व्यक्तिविषयता=व्यक्तिविषयकत्वमपि कारणतावच्छेदककोटौ=शक्तिज्ञानावच्छेदककोटौ निविशते एव यत शक्तिज्ञाने धर्मितावच्छेदकीयविषयता= जातिनिष्ठा या धर्मितावच्छेदकता तद्विषयकत्वस्यविशेष्यतावच्छेदकतात्वेनैव रूपेण निवेश कर्तव्य — धर्मितावच्छेदकस्य विशेष्यतावच्छेदकरूपत्वात्, जातिनिष्ठा च या विशेष्यतावच्छेदकता तन्निरूपिका या विशेष्यता सा व्यक्तिविषयतारूपेव वाच्या तथा च व्यक्तिविषयकत्वमपि शक्तिज्ञाने प्रविष्टमेवेति व्यक्तिविषयकत्वमपि शक्तिज्ञाननिष्ठकारणताया अवच्छेदक जातमेवेत्यर्थ । उपसंहरति— एव चेति । कथं चित्= "तद्विषयकत्वविशिष्टज्ञानविषयत्वेन शक्तिज्ञानस्य शाब्दधीजनकता" इत्याद्युक्तप्रकारेण । गौरवे हेतुमाह— कारणतेति, शक्ति-

एवं द्रव्यत्वादिधर्मितावच्छेदककभ्रमात्मकगवादिपदशक्तिज्ञानाद् द्रव्यत्वादिप्रकारकशाब्दबोधवारणाय शक्त्यंशे धर्मितावच्छेदकावच्छिन्नत्वावगाहित्वस्याप्यधिकस्य निवेशनीयतया गौरवमिति व्यक्तौ कुब्जशक्तिवादिनामपि शक्त्यंशे जातिप्रकारकज्ञानहेतुतामतमेव साधीयः ।

वस्तुतस्तु सर्वलाक्षणिकस्थलेप्यन्वयबोधस्याऽऽनुभविकत्वेन दुरपन्हवतया लाक्षणिकस्याऽनुभावकत्वं दुर्वारमेवेति तस्य लक्ष्यार्थे कुब्जशक्तिप्रसङ्ग इति

---

ज्ञाननिष्ठकारणतावच्छेदके व्यक्तिविषयकत्वस्याधिकस्य प्रदर्शितरीत्या निवेशाद् नाम जातिविषयकत्ववद् व्यक्तिविषयकत्वस्याप्यधिकस्य कारणतावच्छेदकत्वमास्था गौरवमित्यर्थः । जातिप्रकारकशक्तिज्ञानस्य च हेतुत्वे तु जातेर्धर्मितावच्छेदकत्वेन शक्तिज्ञाने प्रवेशाभावाद् व्यक्तिविषयकत्वस्य प्रवेशापत्तिर्नास्तीति लाघवमित्यवधेयम् ।

जातिधर्मितावच्छेदककशक्तिज्ञानस्य शाब्दबोधहेतुत्वे गौरवान्तरं प्रदर्शयति— एवमिति, गवादौ द्रव्यत्वादेरपि सत्त्वाद् द्रव्यत्वादिधर्मितावच्छेदककमपि गवादिपदशक्तिज्ञानं प्रमात्मकमेव तादृशशक्तिज्ञानादपि द्रव्यत्वादिप्रकारकशाब्दबोधो नेष्ट इति तद्वारणाय शक्तौ यद् धर्मितावच्छेदकावच्छिन्नत्व तदवगाहित्वस्याप्यधिकस्य जातिधर्मितावच्छेदककशक्तिज्ञाने निवेशनीयतया गौरवं स्यादेव, विषयश्चाय सामान्यकाण्डान्त्यभागे द्रष्टव्य । द्रव्यत्वादिधर्मितावच्छेदककगवादिपदशक्तिज्ञानं च ' गोपदाद् द्रव्यं बोद्धव्यम् ' इत्याकारकम्, एतादृशशक्तिज्ञानाद् द्रव्यत्वप्रकारकशाब्दबोध स्यादेव गवादिपदशक्तिज्ञानाच्च गोत्वादिप्रकारक एव शाब्दबोध इष्टो न तु द्रव्यत्वादिप्रकारक , शक्तिज्ञाने शक्तिविषयकधर्मितावच्छेदकावच्छिन्नत्वावगाहित्वस्य निवेशे कृते तु गवादिपदस्थले गौरवमेव धर्मितावच्छेदक निरूपकत्वसम्बन्धेन गवादिव्यक्तिनिष्ठा च शक्तिर्गोत्वेन धर्मितावच्छेदकेनावच्छिन्ना भवति न तु द्रव्यत्वेन— द्रव्यत्वस्य गवादिनिष्ठधर्मिताया अवच्छेदकत्वाभावादिति गवादिपदशक्तिज्ञानाद् द्रव्यत्वादिप्रकारकशाब्दबोधस्यापत्तिर्यद्यपि नास्ति तथापि शक्त्यंशे धर्मितावच्छेदकावच्छिन्नत्वावगाहित्वस्याधिकस्य शक्तिज्ञाने निवेशाद् गौरवं तु स्यादेव । शक्तिविषयकजातिप्रकारकशक्तिज्ञानस्य शाब्दबोधहेतुत्वे तु गवादौ द्रव्यत्वस्योपलक्षणत्वाद् गोत्वादेरेव च प्रकारत्वाद् गवादिपदशक्तिज्ञानं गोत्वादिप्रकारकमेव सम्भवति न तु द्रव्यत्वादिप्रकारकमपि गोत्वादिप्रकारकशक्तिज्ञानाच्च गोत्वादिप्रकारकस्यैव शाब्दबोधस्यापत्तिरस्ति न तु द्रव्यत्वादिप्रकारकस्येति न तद्वारणाय शक्तिज्ञाने शक्तिविषयकधर्मितावच्छेदकावच्छिन्नत्वावगाहित्वस्य निवेशापेक्षेति लाघवमित्यनुसन्धेयम् ।

मीमांसक स्वाभिप्रायमाह— वस्तुत इति, सर्वलाक्षणिकस्थले यथा ' धूमात् ' इत्यत्र धूमपदस्य धूमज्ञाने पञ्चम्याश्च ज्ञाप्यत्वे लक्षणेति ग्रन्थारम्भे उक्तम् । आनुभाविकत्वेन=अनुभवसिद्धत्वेन । अनुभावकत्वम्=बोधजनकत्वम् । तस्य=लाक्षणिकपदस्य । अनुभवजननसामर्थ्यस्य शक्तित्वे लाक्षणिकपदस्य लक्ष्यार्थे शक्तिः स्याद् न चैतदिष्टम् । ईश्वरानङ्गीकारादीश्वरसङ्केतोपि

नाऽनुभवजननसामर्थ्यमीश्वरसंकेतो वा वृत्तिरूपा शक्तिरऽपि तु पदार्थान्तरमेव सा
च जातावेव कल्प्यते न तु व्यक्त्यादाविति न तत्र कुब्जशक्तिरपीति तत्त्वम् ।

अथ व्यक्तेर्गवादिपदावाच्यत्वे गवादिपदाद् व्यक्तेः स्मरणमनुभवश्च न स्यात् ।
न च पदाऽवाच्यत्वेऽप्यन्वयस्येव व्यक्तेर्भानं शाब्दबोधे नानुपपन्नमितिवाच्यम्,
तद्धर्मप्रकारकशाब्दबोधे तद्धर्मप्रकारकपदार्थोपस्थितेर्हेतुतया गोत्वप्रकारकशाब्द-
बुद्धौ गोत्वादिप्रकारकव्यक्तिस्मरणस्यापेक्षणीयतया संबन्धग्रहाविषयतया व्यक्ते-
रस्मरणे व्यक्तेः शाब्दानुभवविषयताया दुरुपपादत्वात्, अन्वयस्य च संसर्गविध-
यैव भानाच्छाब्दधियोऽन्वयांशे निष्प्रकारकतया तदुपस्थित्यनपेक्षणेन तत्र वाच्य-
त्वानुपयोगादितिचेत् ? ।

अत्र भट्टाः—पदात्र व्यक्तेः स्मरणमनुभवो वा किं त्वाक्षेपादेव व्यक्तिधीरा-
ऽऽक्षेपिका च जातिरेव आक्षेपश्चानुमानमर्थापत्तिर्वा। नच जातिव्यक्त्योर्वैयधिक-

---

शक्तिर्न सम्भवतीति शक्ति पदार्थान्तरमेव । सा=शक्ति जातौ निरूपकत्वसम्बन्धेन ज्ञेया पदनिष्ठ-
त्वात् । तत्र=व्यक्त्यादौ । स्पष्टं सर्वम् ।

तार्किक शङ्कते—अथेति । ननु यथा समवायस्य गवादिपदावाच्यत्वेऽपि गवादिपदजन्य-
शाब्दबोधे भान भवति तथा व्यक्तेरपि भविष्यतीत्याशङ्क्याह—न चेति । परिहारहेतुमाह—तद्ध-
र्मेति । सम्बन्धग्रहाविषयतया=शक्तिग्रहाविषयतया । अन्वयस्येति—समवायादे संसर्गतयैव शाब्द-
बोधे भान भवतीति समवायाद्यंशे शाब्दबोधो निष्प्रकारक एव जायते इति तदुपस्थित्यनपेक्ष-
णेन=समवायादेरुपस्थित्यपेक्षाभावात् तत्र=समवायादौ तद्भानार्थं वाच्यत्वापेक्षा नास्तीत्यन्वय ।
व्यक्तेस्तु सप्रकारक एव बोधो भवति- निष्प्रकारकव्यक्तिबोधस्य प्रवृत्त्याद्यनुपयोगित्वादिति व्यक्ति-
विषयकसप्रकारकबोधार्थं व्यक्तिविषयकसप्रकारकोपस्थितेरपेक्षा, तादृशोपस्थितेश्च व्यक्तेर्वाच्यत्व
विनाऽलभनाद् व्यक्तेर्वाच्यत्वमावश्यकमिति व्यक्तेरन्वयापेक्षया वैषम्यम् ।

उक्ताशङ्का भट्टमतेन समाधत्ते— अत्रेत्यादिना । यदि पदाद् व्यक्ते स्मरणमनुभवश्च स्यात्तदा
तदर्थं व्यक्ते पदवाच्यत्व स्यादपि न चैवमस्तीत्यर्थ । व्यक्त्याक्षेपकपदार्थमाह— आक्षेपिकेति,
जातिर्व्यक्ति विना न तिष्ठतीति व्यक्त्याक्षेपिका भवतीति भाव । आक्षेपपदार्थमाह— आक्षेप-
श्चेति, जातौ व्यक्तिव्याप्यत्वानुसन्धानदशाया जात्या व्यक्तेरनुमान भवति, जातौ व्यक्ति विना
ऽनुपपद्यमानत्वानुसन्धानदशाया च जात्याऽर्थापत्त्या व्यक्तेर्मान भवति यथा दिवाऽभुञ्जानस्य पीन-
त्वेन रात्रिभोजनस्य। ननु तत्समानाधिकरणेन तत्समानाधिकरणस्यानुमानादिक जायते न तु
वैयधिकरण्येऽपि जातिश्च व्यक्तौ व्यक्तिश्च स्वावयवेषु वर्तत इति जातिव्यक्त्योर्वैयधिकरण्येऽपि कथ
जात्या व्यक्त्याक्षेप स्यादित्याशङ्क्याह— न चेति । परिहारहेतुमाह—तादात्म्येति, यत्र जात्यां
जातिस्तादात्म्यसम्बन्धेन वर्तते तत्र जात्यां व्यक्तिराधेयतासम्बन्धेन वर्तत एवेति तादात्म्यसम्बन्धेन

रण्यादाक्षेपासम्भवः–तादात्म्यसंबन्धेन जातेराधेयतासंबन्धेन व्यक्त्याक्षेपकताया-मविरोधात् ।

वस्तुतस्तु 'गामानय' इत्यादौ स्वाश्रयवृत्तित्वादिरूपपरम्परासंबन्धेनाऽऽनयनकर्मत्वादौ गोत्वादिजातेरन्वयः शाब्दस्तेन सम्बन्धेन गोत्वादिमत्त्वस्य चाऽऽधेयतासंबन्धेन गवादिव्याप्यत्वादाऽऽधेयतासंबन्धेन गवादिमत्त्वविरहेऽनुपपद्यमानत्वाच्चाऽऽनयनकर्मत्वादावाऽऽधेयतासंबन्धेन गवादिव्यक्तिप्रकारिका धीराक्षेपात् । पूर्वसंसर्गघटकतया शाब्दबोधे व्यक्तिभानेपि कर्मत्वांशे गोत्वाद्यवच्छिन्नव्यक्तिप्रकारकभानानुरोधेनाऽऽक्षेपादरः ।

गोत्वं गवाश्रितं गोनिष्ठभेदप्रतियोगितानवच्छेदकधर्मत्वात् किंचिदाश्रितं वा जातित्वाद् इत्यनुमानतो व्यक्तिभानं तु न सार्वत्रिकम्– तादृशहेतूपस्थितेरसार्वत्रिकत्वात्. गवादिपदात् तादृशरूपेण गोत्वादेरनुपस्थितेः ।

---

जातेराधेयतासंबन्धेन व्यक्त्याक्षेपे विरोधो नास्तीत्यन्वयः, जातिराधेयतासंबन्धेन व्यक्तिवर्ती तादात्म्यसंबन्धेन जातिमत्त्वादित्यर्थः ।

व्यक्त्याक्षेपस्य प्रकारान्तरमाह– वस्तुतस्त्विति । स्वेति– स्व गोत्वादिजातिस्तदाश्रयोऽव्यक्तिस्तत्र वृत्तित्वमानयनकर्मत्वादावस्त्येवेति 'गामानय' इत्यादौ स्वाश्रयवृत्तित्वादिरूपपरम्परासंबन्धेनाऽऽनयनकर्मत्वादौ गोत्वादिजातेरन्वयः शाब्दः, यत्र चानयनकर्मत्वादौ स्वाश्रयवृत्तित्वादिसम्बन्धेन गोत्वादिकं भवति तत्राधेयतासंबन्धेन गवादिव्यक्तिरपि भवतीति स्वाश्रयवृत्तित्वादिसम्बन्धेन गोत्वादिमत्त्वमाधेयतासंबन्धेन गवादिव्यक्तिव्याप्यमितिलब्धं तथाऽऽधेयतासंबन्धेन यत्र गवादिव्यक्तिर्न भवति तत्र स्वाश्रयवृत्तित्वादिरूपसंबन्धेन गोत्वादिमत्त्वस्याऽनुपपत्त्याऽऽनयनकर्मत्वादौ स्वाश्रयवृत्तित्वादिसम्बन्धेन गोत्वादिमत्त्वेनाधेयतासंबन्धेन व्यक्तेराक्षेपो भवतीत्यर्थः । ननु गोत्वादेरानयनकर्मत्वादौ स्वाश्रयवृत्तित्वादिसम्बन्धेनान्वये कृते तादृशसम्बन्धघटकतया 'गामानय' इत्यादिस्थले व्यक्तेर्भानं भवत्येव व्यक्तेरेव स्वाश्रयपदार्थत्वादिति किमर्थं जात्या व्यक्तेराक्षेपः क्रियते इत्याशङ्क्याह– पूर्वेति, यद्यपि पूर्वसंसर्गघटकतया=स्वाश्रयेत्याद्युक्तसंसर्गघटकतया व्यक्तेर्भानं भवति तथापि 'गामानय' इत्यत्र यत् कर्मत्वविशेष्यकं गोत्वाद्यवच्छिन्नव्यक्तिप्रकारकं भानं भवति तत्र कर्मत्वप्रकारतया व्यक्तेर्भानार्थं जात्या व्यक्त्याक्षेपः क्रियते इत्यर्थः । न च संसर्गघटकतया भासमानव्यक्तेः कर्मत्वे प्रकारतयाऽन्वयः किं न स्यादिति वाच्यम्, स्वाश्रयवृत्तित्वस्य जातिविशेषणत्वेन तद्घटकव्यक्तेरपि जातिविशेषणत्वात् कर्मत्वे विशेषणत्वासम्भवात् 'एकत्र विशेषणस्याऽन्यत्र विशेषणत्वासम्भवात्' इति न्यायात् । –

ननु ' गोत्वं गवाश्रितं गोनिष्ठभेदप्रतियोगितानवच्छेदकधर्मत्वात्=गोनिष्ठभेदानुयोगितावच्छेदकधर्मत्वात्' ' गोत्वं किंचिदाश्रितं जातित्वात्' इत्याद्यनुमानेनैव जात्याऽऽश्रयव्यक्तेर्भानं किं न स्यादित्याशङ्क्याह– गोत्वमिति । परिहारहेतुमाह– तादृशेति, गवादिपदात् तादृशरूपेण=गोनि-

न्युपरक्तसंबन्धज्ञानाद् निर्विकल्पकस्मरणे बाधकाभावात् । निर्विकल्पकस्य संस्काराजनकत्वेपि विशिष्टज्ञानाहितविशिष्टगोचरसंस्काराद् विशेष्यांशानुद्बोधदशायां केवलविशेषणांशस्मरणे न विरोध इति वदन्ति ।

तदसत्—गवादिपदात् स्वरूपतो गोत्वादिज्ञानेपि व्याप्यतावच्छेदकप्रकारेण तद्ग्रहासंभवात् ततो व्यक्त्याक्षेपासंभवात् । न च शाब्दधीविषयेण परम्परासंबन्धेन गोत्वादिविशेषितकर्मत्वादिहेतुनाऽऽनयनादौ गवादिकर्मकत्वमनुमेयमिति वाच्यम्, विशिष्टसाध्यस्य प्रागप्रतीतेः ।

---

नाम राजपुरुषदर्शनजन्या या राजस्मृतिः सा सप्रकारैव यद्यपि भवति— राजत्वप्रकारकराजविशेष्यकत्वात्, एवम् 'हस्ती हस्तिपकसम्बन्धी' इत्यत्र हस्तिपकदर्शनजन्याया हस्तिस्मृतेः सप्रकारकत्वम्, तथापि निर्विशेषणकं यद् गोत्वादिरूपं सम्बन्धि तदुपरक्तो यः शक्तिरूपसम्बन्धस्तज्ज्ञानात् नाम स्वरूपतो गोत्वादिशक्तिज्ञानाद् गोत्वादेर्निर्विकल्पकस्मरणे बाधकं नास्त्येव सप्रकारकशक्तिज्ञानादेव सप्रकारकस्मरणसम्भवादित्यर्थः, तदुक्तम् " अस्तु वा पदादपि निर्विकल्पकम् " इति । नन्वेवं पदान्निर्विकल्पकस्मरणोपगमे कालान्तरे पदाद् गोत्वादेः स्मरणं न स्याद् निर्विकल्पकस्य संस्कारजनकत्वासम्भवात् संस्कारं विना स्मरणासम्भवाच्चेत्याशङ्क्याह— निर्विकल्पकस्येति, निर्विकल्पकस्य संस्काराजनकत्वेपि विशिष्टविषयकज्ञानेनाऽऽहित =उत्पादितो यो विशिष्टविषयकसंस्कारस्तस्माद् विशेष्यांशानुद्बोधदशायां गोत्वादिरूपकेवलविशेषणांशस्मरणे बाधकाभावादित्यन्वयः, तथा च व्यवहारकाले जातिप्रकारकव्यक्तिविशेष्यकबोधेन व्यक्त्यानन्त्यव्यभिचाराभ्यां जातौ शक्तिग्रहे जातेपि तादृशविशिष्टविषयकबोधेन जातिप्रकारकव्यक्तिविशेष्यको यः संस्कारो जायते तादृशसंस्कारात् केवलजातिविषयकं स्मरणं जायते— तदुद्बोधकस्य जातिशक्तिज्ञानसहकृतपदज्ञानस्य सत्त्वात्, व्यक्तिविषयकसंस्कारांशोद्बोधकाभावाद् व्यक्तिस्मरणं च पदान्न जायते इतिसारः । " इति वदन्ति " इत्यस्य पूर्वोक्तेन "भट्टाः" इत्यनेनान्वयः ।

भट्टमतं परिहरति— तदसदित्यादिना, उक्तरीत्या गवादिपदात् स्वरूपतो गोत्वादिज्ञाने जातेपि व्याप्यतावच्छेदकप्रकारेण नाम जात्या व्यक्त्यनुमाने व्याप्या या जातिस्तस्या व्याप्यतावच्छेदकं यद् गोत्वत्वादि तत्प्रकारेण=गोत्वत्वादिरूपेण ज्ञानासम्भवात् ततः=स्वरूपतो भासमानगोत्वादितो व्यक्तेराक्षेपस्यानुमानस्यासम्भव एव, धूमत्वेन ज्ञायमानधूमादेव वह्न्यनुमानस्वीकारादित्यर्थः । ननु 'गामानय' इत्यत्र शाब्दबोधविषयेण परम्परासम्बन्धेन नाम स्वाश्रयनिरूपितत्वसम्बन्धेन गोत्वविशिष्टकर्मत्वम्=गोत्वकर्मकत्वमानयनेऽस्त्येव तेन हेतुनाऽऽनयने गवादिकर्मकत्वमनुमीयते गोकर्मकत्वं विना गोत्वकर्मकत्वस्याऽसम्भवात् गोत्वकर्मकत्वस्य च व्याप्यतावच्छेदकरूपेण गोत्वकर्मकत्वत्वरूपेण ग्रहणसम्भवान्नोक्तदोषावसर इत्येतादृशानुमानेन व्यक्तिभानं सम्भवतीति न व्यक्तेर्वाच्यत्वापेक्षेत्याशङ्क्याह— न चेति । आनयनं गोकर्मकमुक्तसम्बन्धेन गोत्वविशिष्टकर्मकत्वादिति प्रयोगः । अत्र स्वं गोत्वं तदाश्रयो व्यक्तिस्तन्निरूपितत्वमानयननिष्ठकर्मकत्वेऽस्तीत्यनेन सम्बन्धेन तादृशकर्मकत्वं गोत्वविशिष्टं जातम् । परिहारमाह— विशिष्टेति, सपक्षे प्रतीतस्य साध्यस्य येन

न्द्युपरक्तसंबन्धज्ञानाद् निर्विकल्पकस्मरणे बाधकाभावात्। निर्विकल्पकस्य संस्काराजनकत्वेपि विशिष्टज्ञानाहितविशिष्टगोचरसंस्काराद् विशेष्यांशानुद्बोधदशायां केवलविशेषणांशस्मरणे न विरोध इति वदन्ति।

तदसत्–गवादिपदात् स्वरूपतो गोत्वादिज्ञानेपि व्याप्यतावच्छेदकप्रकारेण तद्ग्रहासंभवात् ततो व्यक्त्याक्षेपासंभवात्। न च शाब्दधीविषयेण परम्परासंबन्धेन गोत्वादिविशेषितकर्मत्वादिहेतुनाऽऽनयनादौ गवादिकर्मकत्वमनुमेयमिति वाच्यम्, विशिष्टसाध्यस्य प्रागप्रतीतेः।

---

नाम राजपुरुषदर्शनजन्या या राजस्मृतिः सा सप्रकारैव यद्यपि भवति– राजत्वप्रकारकराजविशेष्यकत्वात्, एवम् 'हस्ती हस्तिपकसम्बन्धी' इत्यत्र हस्तिपकदर्शनजन्याया हस्तिस्मृतेः सप्रकारकत्वम्, तथापि निर्विशेषणकं यद् गोत्वादिरूपं सम्बन्धि तदुपरक्तो यः शक्तिरूपसम्बन्धस्तज्ज्ञानात् नाम स्वरूपतो गोत्वादिशक्तिज्ञानाद् गोत्वादेर्निर्विकल्पकस्मरणे बाधकं नास्त्येव सप्रकारकशक्तिज्ञानादेव सप्रकारकस्मरणसम्भवादित्यर्थः, तदुक्तम् " अस्तु वा पदादपि निर्विकल्पकम् " इति। नन्वेवं पदान्निर्विकल्पकस्मरणोपगमे कालान्तरे पदाद् गोत्वादेः स्मरणं न स्याद् निर्विकल्पकस्य संस्काराजनकत्वासम्भवात् संस्कारं विना स्मरणासम्भवाच्चेत्याशङ्क्याह– निर्विकल्पकस्येति, निर्विकल्पकस्य संस्काराजनकत्वेपि विशिष्टविषयकज्ञानेनाऽऽहितः =उत्पादितो यो विशिष्टविषयकसंस्कारस्तस्माद् विशेष्यांशानुद्बोधदशायां गोत्वादिरूपकेवलविशेषणांशस्मरणे बाधकाभावादित्यन्वयः, तथा च व्यवहारकाले जातिप्रकारकव्यक्तिविशेष्यकबोधेन व्यक्त्यानन्त्यव्यभिचाराभ्यां जातौ शक्तिग्रहे जातेपि तादृशविशिष्टविषयकबोधेन जातिप्रकारकव्यक्तिविशेष्यको यः संस्कारो जायते तादृशसंस्कारात् केवलजातिविषयकं स्मरणं जायते– तदुद्बोधकस्य जातिशक्तिज्ञानसहकृतपदज्ञानस्य सत्त्वात्, व्यक्तिविषयकसंस्कारांशोद्बोधकाभावाद् व्यक्तिस्मरणं च पदान्न जायते इति सारः। " इति वदन्ति " इत्यस्य पूर्वोक्तेन "भट्टाः" इत्यनेनान्वयः।

भट्टमतं परिहरति– तदसदित्यादिना, उक्तरीत्या गवादिपदात् स्वरूपतो गोत्वादिज्ञाने जातेपि व्याप्यतावच्छेदकप्रकारेण नाम जात्या व्यक्त्यनुमाने व्याप्या या जातिस्तस्या व्याप्यतावच्छेदकं यद् गोत्वत्वादि तत्प्रकारेण=गोत्वत्वादिरूपेण ज्ञानासम्भवात् ततः=स्वरूपतो भासमानगोत्वादितो व्यक्तेराक्षेपस्यानुमानस्यासम्भव एव, धूमत्वेन ज्ञायमानधूमादेव वह्न्यनुमानस्वीकारादित्यर्थः। ननु 'गामानय' इत्यत्र शाब्दबोधविषयेण परम्परासम्बन्धेन नाम स्वाश्रयनिरूपितत्वसम्बन्धेन गोत्वविशिष्टं कर्मत्वम्=गोत्वकर्मकत्वमानयनेऽस्त्येव तेन हेतुनाऽऽनयने गवादिकर्मकत्वमनुमीयते गोकर्मकत्वं विना गोत्वकर्मकत्वस्याऽसम्भवात् गोत्वकर्मकत्वस्य च व्याप्यतावच्छेदकरूपेण गोत्वकर्मकत्वत्वरूपेण ग्रहणसम्भवान्नोक्तदोषावसर इत्येतादृशानुमानेन व्यक्तिभानं सम्भवतीति न व्यक्तेर्वाच्यत्वापेक्षेत्याशङ्क्याह– न चेति। आनयनं गोकर्मकमुक्तसम्बन्धेन गोत्वविशिष्टकर्मकत्वादिति प्रयोगः। अत्र स्वं गोत्वं तदाश्रयो व्यक्तिस्तन्निरूपितत्वमानयननिष्ठकर्मकत्वेऽस्तीत्यनेन सम्बन्धेन तादृशकर्मकत्वं गोत्वविशिष्टं जातम्। परिहारमाह– विशिष्टेति, सपक्षे प्रतीतस्य साध्यस्य येन

एवम् 'गौरानीयताम्' इत्यादौ स्वरूपत उपस्थितस्य गोत्वादेरेव विशेष्यतया भानोपगमे निर्धर्मितावच्छेदककशाब्दधीस्वीकारापत्तिः, तादृशबुद्धेराक्षेपकतावच्छेदकावच्छिन्नाऽविषयतया व्यक्त्याक्षेपकताऽनुपयोगितापत्तिश्चेति व्यक्तेः शाब्दबोधे विशेष्यादिविधया भानमावश्यकमित्यवधेयम् ।

एवं गवादावानयनकर्मत्वं सामानाधिकरण्यसम्बन्धेनाऽऽनयनकर्मत्वविशेषितेन गोत्वादिहेतुनाऽनुमेयम्, तच्च न सम्भवति तादृशगोत्वादेरानयनकर्मत्वादिशून्यगवादिसाधारण्येन व्यभिचारात् । सामानाधिकरण्यसम्बन्धेनाऽऽनयनकर्मत्वादिविशिष्टस्य विशेषणाव्यभिचारित्वेऽपि साध्यस्य पक्षे सन्देहदशायां साध्यविशिष्टस्य हेतोः पक्षे दुर्निश्चेयत्वात्, अतो व्यक्तेः शाब्दबोधे विशेष्यादिविधया भानमावश्यकमित्यपि बोध्यम् ।

---

चिद्धेतुना पक्षे सिद्धिर्भवति, गोकर्मत्वं च विशिष्टसाध्यमेतदनुमानात् पूर्वं प्रतीतमेव नास्तीति कथं तस्यैतदनुमानेन सिद्धिः स्यादित्यर्थः ।

व्यक्तेरवाच्यत्वे दोषान्तरमाह—एवमिति । 'गौरानीयताम्' इत्यत्र गोपदस्य प्रथमान्तत्वेन तद्वाच्यं यद्गोत्वं तद्विशेष्यक एव शाब्दबोधः स्याद्गोत्वं च स्वरूपत एव शक्यं स्वरूपत एव चोपतिष्ठतीति स्वरूपत एव तद्विषयकशाब्दबोधः स्यादिति धर्मितावच्छेदकस्य गोत्वत्वस्य गोत्वधर्मेऽनुगततया भानाभावान्निर्धर्मितावच्छेदककशाब्दबोधस्य गोत्वविषयकस्य स्वीकारापत्तिः दोषः—निर्धर्मितावच्छेदककशाब्दबोधस्य दर्शनविरुद्धत्वादित्यर्थः । निर्धर्मितावच्छेदककशाब्दबोधस्वीकारेऽपि दोषमाह— तादृशेति, जातौ व्यक्त्याक्षेपकताऽस्ति तादृशाक्षेपकतावच्छेदकं गोत्वत्वं तदवच्छिन्नं यद्गोत्वं तदऽविषयकतया तादृशबुद्धेः=गोत्वविषयकस्य निर्धर्मितावच्छेदककशाब्दबोधस्य जातेर्व्यक्त्याक्षेपकतायामुपयोगो न सम्भवतीति वैयर्थ्यमेव तथा च शाब्दबोधे व्यक्तेर्भानं विशेष्यतया भानमावश्यकमेव तच्च वाच्यत्वं विना न सम्भवतीति व्यक्तेरपि वाच्यत्वमावश्यकमित्यर्थः ।

व्यक्तेरवाच्यत्वे दोषान्तरमाह—एवमिति, 'गौरानयनकर्मत्वविशिष्टा गोत्वविशिष्टत्वात्' इत्येवं यदि सामानाधिकरण्यसम्बन्धेनाऽऽनयनकर्मत्वविशिष्टगोत्वेन गवादावाऽऽनयनकर्मत्वमनुमीयते तेन चानुमानेन जात्या व्यक्त्याक्षेप इत्युच्यते तदपि न सम्भवतीत्यर्थः । सम्भवाभावे हेतुमाह— तादृशेति, हेतुभूतगोत्वस्यानयनकर्मत्वाभाववत्यपि गवादौ सत्त्वेन व्यभिचारित्वं प्राप्तं व्यभिचारिहेतुना चानुमानं न सम्भवतीत्यर्थः । सामानाधिकरण्यसम्बन्धेनाऽऽनयनकर्मत्वविशिष्टं च गोत्वं यद्यपि विशेषणस्य=साध्यस्याऽऽनयनकर्मत्वस्य व्यभिचारि नास्ति तथापि सन्दिग्धसाध्यवानेव पक्षो भवतीति पक्षे गवादौ साध्यस्यानयनकर्मत्वस्य सन्देहदशायामनुमानदशायां साध्यविशिष्टस्य सामानाधिकरण्यसंबन्धेनाऽऽनयनकर्मत्वविशिष्टस्य हेतोर्गोत्वस्य पक्षे गवादौ निश्चयासम्भवात् तेन कथं गवादावानयनकर्मत्वमनुमीयेत येन जात्या व्यक्त्याक्षेपः स्यादित्याह— सामानाधिकरण्येति ।

उपसंहरति— अत इति । यतो जात्या व्यक्त्याक्षेपो न सम्भवति अत इत्यर्थः ।

एनेन जातिवाचकपदाज्जातिबोधः शाब्दो व्यक्तिबोधस्त्वौपादानिक एवेति श्रीकरमतमनुपादेयम्– उपादानस्यार्थापत्तिरूपत्वेन भट्टमताविशेषात् । न च जातिरेव व्यक्तिबोधिका जातिकरणकत्वमेवौपादानिकत्वं बोधस्येति वाच्यम्, जातेः प्रमाणान्तरत्वकल्पनापेक्षया व्यक्तिशक्तिकल्पनाया एवोचितत्वात् । एवं जातेर्नित्यतया सर्वदैव तदुपादानकव्यक्तिधीवारणाय जातिहेतुकव्यक्तिबोधे जातिशक्तिज्ञानघटिततच्छाब्दसामग्र्याः सहकारित्वमवश्यमभ्युपगन्तव्यं तथा च तादृशसामग्र्या एव व्यक्तिज्ञानप्रयोजकतासंभवेन जातेः करणत्वकल्पनमनर्थकम् ।

न च जातिनिरपेक्षजातिभासकशाब्दसामग्र्या व्यक्तिभानप्रयोजकत्वे व्यक्त्यंशेपि शाब्दत्वमावश्यकं तथा सति च शक्तिज्ञानजन्यव्यक्तिस्मृतेरप्यपेक्षा स्यात् जातेःकरणत्वे च व्यक्त्यंशे औपादानिकत्वमेव न तु शाब्दत्वमिति न तदपेक्षेति वाच्यम्, व्यक्तिभानांशे जातेः करणत्वे तदंशेऽशाब्दत्वोपगमसंभवे तदकरणत्वेपि

---

उक्तनिरासप्रकारं श्रीकरमतं उपन्यस्यति– एतेनेति । अनुपादेयत्वे हेतुमाह– उपादानस्येति, भट्टमते प्रदर्शिता दोषा अत्राप्यनुसन्धेया इत्यर्थः । ननु जात्या व्यक्तिबोधो जायते तादृशव्यक्तिबोधे यद् औपादानिकत्वं तज् जातिकरणकत्वमेव तथा च जातिकरणकबोधविषयत्वं व्यक्तेः प्राप्तमिति न व्यक्तिभानानुपपत्तिरित्याशङ्क्याह– न चेति । परिहारहेतुमाह– जातेरिति, प्रमाकरणं हि प्रमाणं भवति तत्र जातेर्यदि व्यक्तिविषयकबोधकरणत्वं स्यात्तदा प्रमाणान्तरत्वं स्यादेवेति जातेः प्रत्यक्षाद्यतिरिक्तप्रमाणत्वकल्पनापेक्षया व्यक्तौ पदस्य शक्तिकल्पनैवोचिता– लाघवात्, व्यक्तौ पदस्य शक्तौ सत्यां च पदेनैव व्यक्तिभानं संभवतीत्यर्थः । जातेः करणत्वे दोषान्तरमाह– एवमिति, यदि जात्या व्यक्तिबोधः स्यात्तदा जातेर्नित्यतया सर्वदैव व्यक्तिभानं स्याद् न च सर्वदा व्यक्तिभानं भवतीति सर्वदा जात्युपादानकव्यक्तिबोधवारणाय जातिकरणकव्यक्तिबोधं प्रति जातिशक्तिज्ञानघटितजातिविषयकशाब्दबोधसामग्र्याः सहकारित्वं स्वीकार्यं येनोक्तसामग्र्याः सर्वदा सत्त्वाभावात् सर्वदा व्यक्तिभानापत्तिर्न स्यात् तादृशोक्तसामग्र्याः सहकारित्वोपगमे च तादृशसामग्र्यैव व्यक्तिबोधः संभवतीति तव मतेपि जातेर्व्यक्तिबोधकरणत्वकल्पनमनर्थकमेवेत्यर्थः ।

ननु यदि जात्या व्यक्तिभानं न स्यात् किं तु करीत्या जातिनिरपेक्षया=जात्यघटितयैव जातिभासकशाब्दबोधसामग्र्या व्यक्तिभानं स्यात्तदा व्यक्तेः शाब्दत्वम्=शाब्दबोधविषयत्वं स्यादेव शाब्दबोधविषयत्वं च तद्विषयकशक्तिज्ञानजन्योपस्थितिं विना न संभवतीति व्यक्तेः शक्तिज्ञानजन्यस्मृत्यपेक्षा प्राप्ता तदर्थं च वाच्यत्वापेक्षा प्राप्ता व्यक्तेर्वाच्यत्वे च गौरवं जातेरपि वाच्यत्वस्यावश्यकत्वात्, जातेः करणत्वे च व्यक्तावौपादानिकत्वमेव न तु शाब्दत्वमिति न तदपेक्षा= शक्तिज्ञानजन्यव्यक्तिस्मृत्यपेक्षा तेन च न व्यक्तेर्वाच्यत्वापेक्षेति लाघवमित्याशङ्क्याह– न चेति । परिहारमाह– व्यक्तिभानांश इति, यदि व्यक्तिभानं प्रति जातेः करणत्वे=करणत्वेन तदंशे=व्यक्त्यंशेऽशाब्दत्वं संभवति तदा तदकरणत्वेपि=जातेरकरणत्वेपि व्यक्तौ तत्=अशाब्दत्वं संभवदेव

तत्संभवात् । जातेरकरणत्वे व्यक्त्यंशे कीदृशकरणस्य जन्यतावच्छेदकधर्मवत्त्व-मिति चेत् ? न कस्यापि. तावता क्षतिविरहात् ।

व्यक्तेरपि बोधः शब्दादेव न त्वाऽऽक्षेपादितः, व्यक्तिशाब्दबोधे शक्तिविरहो नानुपपत्तिं प्रयोजयति लक्षणात एव तदुपपत्तेरिति मण्डनाचार्यमतं तदुक्तम्-

" जातेरस्तित्वनास्तित्वे न हि कश्चिद् विवक्षति- ।
नित्यत्वात्, लक्ष्यमाणाया व्यक्तेस्ते हि विशेषणे ॥ " इति,

अस्तित्वनास्तित्वे=उत्पादविनाशौ । लक्षणा च जातिप्रकारेणैव व्यक्तिं बोधयति न तु व्यक्तित्वादिनेति नानुभवविरोधः । नीलादिपदस्य शक्यनीलादिगुणपुरस्कारेण लक्षणया बोधकत्ववत् शक्यजातिपुरस्कारेण लक्षणया गवादिपदस्य

---

अशाब्दत्वप्रयोजकत्व जातिनिष्ठकरणत्वस्यैवेति नियमासंभवात् । ननु व्यक्तिबोधं प्रति यदि जातेः करणत्वं नास्ति तदा कीदृशकरणनिरूपितजन्यता व्यक्तिबोधे स्यादित्याशङ्कते- जातेरिति । कीदृशकरणस्येति षष्ठ्यर्थो निरूपितत्वं तस्य जन्यतायामन्वयः. जन्यता च व्यक्तिबोधे इति तादृशजन्यतावच्छेदकधर्मवत्त्वमपि व्यक्तिबोधे वक्तव्यम् । व्यक्त्यंशे=व्यक्तिविषयकबोधे । उत्तरमाह- न कस्यापीति, अत्रापि निरूपितत्वं षष्ठ्यर्थस्तथा च व्यक्तिबोधे न किंचित्करणनिरूपितजन्यतेत्यर्थः । उक्ते हेतुमाह- तावतेति, व्यक्तिबोधे किंचित्करणनिरूपितजन्यताया अभावेऽपि क्षतिविरहादित्यर्थः । यथा तन्मते गोत्वादिबोधेऽपि मितिमातृभानं भवति न च तादृशमितिमातृभानं प्रति कस्यचित् करणत्वं स्वीक्रियते तथा प्रकृते व्यक्तिभानं प्रत्यपि न कस्यचित् करणत्वापेक्षेतिभावः ।

सम्प्रति मीमांसकेषु मण्डनमिश्रस्य मतमनुवदति-व्यक्तेरपीति । प्रायः स्पष्टं सर्वम् । व्यक्तेराक्षेपेण बोधे ये दोषाः प्रदर्शितास्तेऽस्मिन् मते न सन्तीति सारः । ननु व्यक्तौ शक्तिं विना व्यक्तेः पदात् कथं बोधः स्यात् तथा व्यक्तौ शक्तेरस्वीकारादित्याशङ्क्याह- व्यक्तिशाब्दबोध इति । शक्त्या अनुपपत्त्यभावे हेतुमाह- लक्षणात एवेति । तदुपपत्तेः=व्यक्तिविषयकशाब्दबोधोपपत्तेः । शक्त्यपेक्षाभावात् तद्विषयकशाब्दबोधार्थमेव तत्र शक्त्यपेक्षानियमनं लक्षणाजन्यशाब्दबोधे तत्र शक्त्यपेक्षाभावादितिभावः । उक्तमण्डनमिश्रमते प्रमाणमाह- जातेरिति, ते=अस्तित्वनास्तित्वे=उत्पादविनाशौ नित्यत्वाज्जातेर्न सम्भवत इति लक्षणया बुध्यमानाया व्यक्तेरेव विशेषणे भवत इत्यर्थः । ननु 'गङ्गायां घोषः' इत्यत्र गङ्गातीरमात्रे घोषाधारता प्रतीयते न तु तीरत्वावच्छेदेन सकलतीरेष्विति लक्षणया लक्ष्यमाणस्य तद्व्यक्तित्वेनैव बोध इष्ट इति प्रकृतेऽपि व्यक्तेस्तद्व्यक्तित्वेनैव लक्षणया बोधः स्यात्तथा चानुभवविरोधः -जातिप्रकारेणैव व्यक्तिबोधस्य सर्वानुभवसिद्धत्वादित्याशङ्क्याह- लक्षणेति । व्यक्तित्वादिना=तद्व्यक्तित्वादिना । स्वाभिमतं सदृष्टान्तमाह- नीलादीति, यथा 'नीलो घटः' इत्यत्र नीलपदं नीलपदस्य नीलत्वगुणे शक्तिर्नीलगुणविशिष्टे च लक्षणैवेति स्वशक्यनीलत्वगुणप्रकारेणैव लक्षणया घटं बोधयति तथा गवादिपदमपि स्वशक्यजातिप्रकारेणैव

व्यक्तिबोधकत्वेऽविरोधात् । " स्वार्थादन्येन रूपेण ज्ञाते भवति लक्षणा" इत्यत्र स्वार्थपदस्य शक्यतावच्छेदकपरत्वात् ।

अत्रेदं चिन्त्यम्—गवादिपदाल्लक्षणया गोत्वादिप्रकारकबोधोपगमे जातिशक्तिरन्वयबोधे नापेक्ष्येत—लक्ष्यतावच्छेदकताया एव जातिभाने प्रयोजकत्वसंभवात् । न च शक्तिं विना व्यक्तौ शक्यसंबन्धरूपलक्षणैव न निर्वहतीति शक्तेरुपयोगितेतिवाच्यम्, लक्षणानिर्वाहार्थं जातिशक्तिकल्पने गवादिपदस्य द्रव्यत्वादावपि विनिगमनाविरहेण शक्तिकल्पनप्रसङ्गात्—द्रव्यत्वादिसंबन्धेनापि गवादौ लक्षणासंभवात् । प्रयोगविरहस्य द्रव्यत्वादाविव स्वातन्त्र्येण गोत्वादावप्यविशिष्टत्वात् । लक्षणाघटकतया शक्तेरुपयोगितायां तस्या वृत्तित्वानुपपत्तिः—स्वातन्त्र्येणाऽतथात्वात् ।

---

लक्षणया व्यक्तिं बोधयतीति नोक्तानुभवविरोध इत्यर्थः । बोधकत्ववत्=विशेष्यबोधकत्ववत् । ननु 'गङ्गायां घोषः' इत्यादौ स्वार्थात् प्रवाहादन्येन तीरत्वेन रूपेण तीरे ज्ञाते सति तत्र गङ्गापदस्य लक्षणा भवतीति नियमोऽस्ति,' तन्मते च गोपदस्य गोत्वमेव स्वार्थो व्यक्तेश्च गोत्वप्रकारेण बोधे स्वीकृते स्वार्थरूपेणैव व्यक्तिज्ञानं जातं न तु स्वार्थभूतगोत्वादिजात्यतिरिक्तरूपेणापीति कथं व्यक्तौ गवादिपदस्य लक्षणा स्यादित्याशङ्क्याह— स्वार्थादिति, " स्वार्थादन्येन " इत्यत्र स्वार्थपदं शक्यतावच्छेदकपरं गवादिपदस्थले च शक्यतावच्छेदकं गोत्वत्वादिकमेव गोत्वत्वादन्येन गोत्वेन रूपेण व्यक्तिज्ञानमस्त्येवेति न व्यक्तौ गवादिपदस्य लक्षणानुपपत्तिरित्यर्थः ।

उक्तमण्डनमिश्रमतं विविनक्ति— अत्रेदमित्यादिना, यदि लक्षणया गवादिपदाद् गोत्वप्रकारकबोधः स्यात्तदा अन्वयबोधे=शाब्दबोधं प्रति जातिशक्तेरप्यपेक्षा न स्यादेवेत्यन्वयः । ननु जातौ शक्त्यभावे शाब्दबोधे जातिभानं कथं स्यादित्याशङ्क्याह— लक्ष्यतेति, लक्ष्यार्थबोधे लक्ष्यतावच्छेदकस्य भानं भवत्येव त्वन्मते व्यक्तिर्लक्ष्यार्थ एवेति जातौ लक्ष्यतावच्छेदकत्वं प्राप्तमिति लक्ष्यतावच्छेदकतया जातिभानं भविष्यतीत्यर्थः । ननु लक्षणा हि शक्यसम्बन्धरूपेति जातौ शक्तिं विना व्यक्तौ शक्यसम्बन्धरूपा लक्षणा कथं स्यात् जातौ शक्तिसत्त्वे तु जातेः शक्यत्वप्राप्त्या तादृशशक्यजातिसम्बन्धस्य व्यक्तौ सत्त्वाल्लक्षणा सम्भवतीति तदर्थं जातिशक्तिः स्वीक्रियते इत्याशङ्क्याह— न चेति । परिहारहेतुमाह—,लक्षणानिर्वाहार्थमिति, व्यक्तौ लक्षणानिर्वाहार्थं यदि जातौ शक्तिः स्वीक्रियते तदा गवादिनिष्ठद्रव्यत्वादिसम्बन्धेनापि गवादौ गवादिपदस्य लक्षणासंभवेन विनिगमनाविरहेण गवादिपदस्य द्रव्यत्वादावपि शक्तिकल्पनाप्रसङ्गः स्यादेव न चैतदिष्टमित्यन्वयः । विनिगमनेति— द्रव्यत्वादिसम्बन्धेन गवादौ लक्षणासत्त्वेऽपि गवादिपदस्य द्रव्यत्वादौ शक्तिर्नास्ति, गोत्वादिसम्बन्धेन लक्षणासत्त्वाद् गवादिपदस्य गोत्वादौ शक्तिरस्तीत्यत्र विनिगमनाया अभावादित्यर्थः । ननु द्रव्यत्वादौ गवादिपदस्य प्रयोगो न भवतीति न द्रव्यत्वादौ शक्तिः प्रयोगस्यैव शक्तिकल्पनानियामकत्वादित्याशङ्क्याह— प्रयोगेति, प्रयोगस्तु गवादिपदस्य व्यक्तावेव भवति न गोत्वादाविति गोत्वादावपि शक्तिर्न स्यादित्यर्थः । दोषान्तरमाह— लक्षणाघटकतेति,

अथाकृतिविशिष्टायामेव व्यक्तौ लक्षणा— आकृतिप्रकारेण व्यक्तिबोधस्य नैयायिकानामप्यनुमतत्वात् तत्र शक्त्युपस्थितजातेरन्वय उपगम्यते। न चाकृतावेव शक्तिर्जातिविशिष्टे लक्षणेति वैपरीत्यमेव किं न स्यादितिवाच्यम्, आकृतेरवयवसंयोगरूपाया आनन्त्यात् तदपेक्षयैकस्यां जातावेव शक्तिकल्पनौचित्यात्। न चावयवसंयोगनिष्ठजातिरेव शक्यास्तु व्यक्तौ तदन्वयश्च स्वाश्रयघटितपरम्परासंबन्धेन स्वीक्रियतामितिवाच्यम्, आकृतिप्रकारकबोधस्याऽऽनुभविकत्वात्।

लक्ष्यार्थव्यक्त्यनुपरक्तायां केवलजातौ प्रयोगविरहश्च न शक्त्यभावसाधकः— अप्रयोजकत्वात्, तत्राऽप्रयोगमात्रस्यैव तदशक्यत्वे बीजत्वात्, जातावप्रयोगस्याऽसिद्धत्वात्, तात्पर्यसत्त्वे च वृत्तिद्वयाधीनबोधोपगमे क्षतिविरहः। न चैवं

---

यदि लक्षणानर्थकतया=लक्षणानिर्वाहार्थमेव शक्तेरुपयोगस्तदा तस्या=शक्तेर्वृत्तित्वं न स्यात्— स्वातन्त्र्येणाऽतथात्वात्=शाब्दबोधानुपयोगित्वापातात्, स्वातन्त्र्येण शाब्दबोधोपयोगिन एव वृत्तित्वस्वीकारादित्यर्थः।

शङ्कते— अथेति, आकृतिविशिष्टव्यक्तौ लक्षणास्वीकारादाकृतिप्रकारेणैव व्यक्तेर्लक्षणया बोधो भविष्यति, आकृतिप्रकारेण व्यक्तिबोधस्य नैयायिकानामप्यनुमतत्वात्तत्र=आकृतिप्रकारेण भासमानव्यक्तौ शक्त्योपस्थितजातेरन्वय उपगम्यते एवं च जातेर्लक्ष्यतावच्छेदकतया भानं न सम्भवतीति जातिभानार्थं जातौ गवादिपदानां शक्तेरावश्यकतेति "जातिशक्तिरन्वयबोधे नापेक्ष्येत" इत्याद्युक्तोपालम्भस्यावसरो नास्तीत्यर्थः। वैपरीत्येन शङ्कते— न चेति। परिहारमाह— आकृतेरिति। तदपेक्षया=अवयवसंयोगरूपानन्ताकृतौ शक्तिकल्पनापेक्षया। शङ्कते— न चेति। अवयवसंयोगनिष्ठा जातिः=अवयवसंयोगत्वमाऽऽकृतित्वं वा। तदन्वयः=अवयवसंयोगनिष्ठजातेरन्वयः। स्वाश्रयघटितपरम्परासम्बन्धश्च स्वाश्रयसामानाधिकरण्यसम्बन्धः स्वमाकृतित्वं तदाश्रय आकृतिस्तत्सामानाधिकरण्यं व्यक्तावस्ति—आकृत्याधारावयवेष्वेव व्यक्तेरपि समवेतत्वाद् आकृतेरवयवसंयोगरूपत्वेनावयवेष्वेव समवेतत्वाद् एतादृशपरम्परासम्बन्धेन व्यक्तौ शक्यभूतावयवसंयोगनिष्ठजातेरन्वय इत्यर्थः। परिहरति— आकृतीति, यद्यवयवसंयोगनिष्ठजातिरेव शक्या स्यात्तदा तत्प्रकारक एव व्यक्तेर्बोधः स्याद् आकृतिप्रकारकश्च बोधो न स्यात् न चैतदिष्टम्— आकृतिप्रकारकबोधस्यैव सर्वानुभवसिद्धत्वादित्याकृतिविशिष्टायामेव व्यक्तौ लक्षणेत्येव युक्तमित्यर्थः।

यदुक्तं केवलजातौ गवादिपदस्य प्रयोगाभावान्न शक्तिः सम्भवतीति तत्राह— लक्ष्यार्थेति। उक्ते हेतुमाह— अप्रयोजकत्वादिति, सामान्यतः प्रयोगविरहस्य शक्त्यभावसाधनेऽप्रयोजकत्वादित्यर्थः— व्यक्त्यादावपि सर्वदा प्रयोगासम्भवात्। यदि जातौ कदापि गवादिपदस्य प्रयोगो न स्यात्तदा जातेः शक्यत्वं न स्यादपि न चैवमस्तीत्याह— तत्रेति। ननु केवलजातौ तु गवादिपदस्य प्रयोगो नैव भवति जातिव्यक्त्योरुभयोश्च शक्त्या बोधो न सम्भवति त्वन्मते व्यक्तौ शक्तेरभावादिति गवादिपदात् कथं शाब्दबोधः स्यादित्याशङ्क्याह— तात्पर्येति, शक्त्या जातेर्लक्ष-

मीमांसकमतस्य

र्येण 'गवि नित्यत्वम्' इति स्वारसिकप्रयोगापत्तिरितिवाच्यम्, केवलमुख्य उपस्थिताया जातेः समानपदोपात्तधर्मिण्येवाश्रयतासंबन्धेनाऽन्व- शक्त्या त्वात् । न चान्वयितावच्छेदकरूपेणानुपस्थिताया जातेरन्वयो विरु- यस्य व्युत्पत्तिवैचित्र्येण प्रकारतया स्वरूपत उपस्थिताया जातेरन्वयस्वीकारे दु नरहात् ।

इतिरीत्या चेन्मतमेतत् परिष्क्रियते तथापि स्वरूपतो गोत्वाद्यन्वयबोधस्य लक्ष्यार्थे गवादौ स्वीकारे तादृशान्वयबोधं प्रति योग्यताज्ञानादीनां कारणताकल्पनाधिक्यात्, गोत्वादिविशिष्टव्यक्तिशाब्दधीसामग्रीप्रतिबन्धकतायां जातिव-

णया व्यक्तेर्बोध सम्भवतीति शक्तिलक्षणेतिवृत्तिद्वयेन जातिव्यक्त्युभयविषयकशाब्दबोधस्वीकारे दोषाभावादित्यर्थ, तथा च व्यक्तिभानकाले किं वा लक्षणया भासमानव्यक्त्या सह भासमान- जातौ गवादिपदस्य प्रयोगो भवत्येवेति न जातौ शक्त्यनुपपत्ति । ननु यदि जातौ गवा- दिपदस्य प्रयोगो भवति तदा जातौ नित्यत्वस्य सत्त्वेन केवलमुख्यतात्पर्येण 'गवि नित्यत्वम्' इति स्वारसिकप्रयोग स्यादेवेत्याशङ्क्याह– न चेति । परिहारहेतुमाह– शक्त्येति, गवादिपदेन शक्त्या स्वरूपत उपस्थिताया जाते समानपदोपात्तधर्मिणि=गवादिपदेन लक्षणयोपस्थिताया व्यक्तावेवाश्रयतासम्बन्धेनान्वयो भवतीति जातेर्नित्यत्वेऽन्वयासम्भवादेव जातिमुद्दिश्य 'गवि नित्य- त्वम्' इति प्रयोगस्यापत्तिर्नास्ति, 'एकत्र विशेषणस्यान्यत्र विशेषणत्वासम्भवात्' इति न्यायादित्य- र्थ । नन्वऽन्वयितावच्छेदकरूपेणोपस्थितस्यैव कश्चिदन्वय सम्भवति जातेश्च त्वया न गोत्वत्वादि- रूपेणोपस्थिति स्वीक्रियते स्वरूपत एवोपस्थितिस्वीकारादिति कथ जातेर्व्यक्तावन्वय स्यादित्या- शङ्क्याह– न चेति । उत्तरमाह– व्युत्पत्तीति, स्वरूपत उपस्थिताया =अन्वयितावच्छेदकरूपे- णानुपस्थिताया अपि जाते प्रकारतया व्यक्तावन्वयस्वीकारे दोषाभावात्, अन्वयितावच्छेदकरू- पेणानुपस्थितस्य विशेष्यतयैवान्वयाऽसम्भवादित्यर्थ ।

उक्तरूपेणोक्तमतपरिष्कारमुद्दिश्याह– इतिरीत्येति । तथापीति– यद्यप्युक्तरीत्या त्वन्मते 'गवि नित्यत्वम्' इति प्रयोगापत्तिरपि नास्ति जातेरन्वयितावच्छेदकरूपेणोपस्थितेश्चापेक्षापि नास्ति तथापि स्वरूपत उपस्थितगोत्वादेर्लक्ष्यार्थव्यक्तावन्वयस्वीकारे तादृशान्वयबोध प्रति योग्यताज्ञा- नादीना कारणताकल्पनाधिक्येन गौरव स्यादेव– पृथगुपस्थितपदार्थयोरन्वयस्य योग्यताज्ञानं विना तादृशान्वयबोधस्यासम्भवात् अन्यथा वह्निकरणकसेचनान्वयबोधोऽपि स्यात्, तार्किकमते तु जातिविशिष्टव्यक्तौ शक्तिस्वीकाराद् गवादिपदाज्जातिविशिष्टाया एव व्यक्तेरुपस्थितिर्भवति न तु जातिव्यक्त्यो पृथक् पृथग् येनोक्तयोग्यताज्ञानादीनां कारणताकल्पनापत्ति स्यादित्यर्थ । उक्त- मते दोषान्तरमाह– गोत्वादीति, समानविषयकानुमितिं प्रति भिन्नविषयकप्रत्यक्षं प्रति च शा- ब्दबोधसामग्र्या प्रतिबन्धकत्वमिष्टमस्ति तथा च त्वन्मते जातिविषयकोपस्थितेरपि प्रतिबन्धक- त्वाद् व्यक्तिविषयकोपस्थितेरपि प्रतिबन्धकत्व स्यादिति प्रतिबन्धकतावच्छेदकत्वतद्विषयकत्वद्वयस्य

प्रकाण्डे—

क्तिविषयकोपस्थितिद्वयस्य निवेशनीयतया प्रतिबन्धकतावच्छेदके स्वात्र जात्याकृतिविशिष्टव्यक्तिशक्तिपक्ष एव साधीयान् ।

प्राभाकरास्तु जातिशक्तिज्ञानादेव जातिप्रकारेण व्यक्तेः स्मरणं शाब्दं न तु निर्विकल्पकरूपं जातिस्मरणम्—निर्विकल्पकानभ्युपगमात् । व्यक्तिसंकेतज्ञानविरहेण तदंशानुद्बोधाद् व्यक्तिस्मरणासंभव इति तु नाशङ्कनीयम्— व्यक्तिमविषयीकृत्य स्वरूपतो गोत्वादिज्ञानासंभवेन गोत्वाद्युद्बोधकस्यैव व्यक्त्युद्बोधकत्वाद् उद्बोधकस्य फलबलकल्प्यत्वात् ।

---

स्यादिति प्रतिबन्धकतावच्छेदकशरीरगौरवम्, तर्कमते तु जातिविशिष्टव्यक्तौ शक्तिस्वीकाराज्जातिविशिष्टव्यक्तिविषयकोपस्थितेरेकस्या एव प्रतिबन्धकतापरतया लाघवमिति जात्याकृतिविशिष्टव्यक्तौ शक्तिरुचितेत्यर्थः । यद्यप्युक्तमीमांसकमते गोत्वविशिष्टव्यक्तौ शक्तिर्नास्ति तथापि लक्षणयोपस्थितव्यक्तौ शक्त्योपस्थितजातेरन्वयो भवत्येवेतिरीत्या गोत्वादिविशिष्टव्यक्तिविषयकशाब्दबोधसामग्र्याः प्रतिबन्धकत्वमिष्टमस्तीत्यभिप्रायेण "गोत्वादिविशिष्टव्यक्तिशाब्दधीप्रतिबन्धकतायाम्" इत्युक्तम् ।

समानविषयकानुमितिं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वमस्ति तत्रानुमितिसामग्र्या व्याप्तिज्ञानपरामर्शादिघटितत्वेन गुरुत्वाच्छाब्दसामग्र्यां चैतादृशगुरुत्वस्याभावात् सूचीकटाहन्यायेन प्रथमं विषयसाम्ये शाब्दबोध एव जायते, विषयभेदे तु शक्तिज्ञानादिरूपा शाब्दसामग्री कोशादिदर्शनेन कालान्तरेऽपि सम्भवति पक्षदर्शनादिरूपाऽनुमितिसामग्री तु कालान्तरे न सम्भवतीति प्रथममनुमितिरेव जायते । विभिन्नविषयकप्रत्यक्षं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वमस्ति तत्र पदज्ञानपदार्थोपस्थित्यादिरूपशाब्दसामग्र्या उपस्थितत्वात् प्रथमं शाब्दबोध एव जायते, विषयसाम्ये तु विषयेन्द्रियसंयोगादिरूपप्रत्यक्षसामग्र्याः कालान्तरेऽसम्भवाच्छाब्दसामग्रीभूतशक्तिज्ञानोपस्थित्यादेश्च कालान्तरेऽपि सम्भवात् प्रथमं प्रत्यक्षमेव जायते इति तत्त्वम् ।

सम्प्रति प्रभाकरमतमनुवदति— प्राभाकरा इत्यादिना । प्रभाकरमते व्यक्तौ शक्तिग्रहे आनन्त्यव्यभिचारदोषौ जातिव्यक्त्युभयोः शक्तिग्रहे गौरवमिति शक्तिग्रहः केवलजातावेव तादृशजातिशक्तिज्ञानात् स्मरणशाब्दबोधौ तु जातिप्रकारकव्यक्तिविशेष्यकावेव भवत इत्यर्थः । यदादुक्तनिर्विकल्पकजातिस्मरणं पराचष्टे— न त्विति । ननु पदस्य जातिमात्रे शक्तिग्रहे व्यक्त्या सह पदस्य वाच्यवाचकभावरूपशक्तिसम्बन्धस्य ग्रह एव नास्तीति तदंशानुद्बोधात्=व्यक्तेरनुद्बोधाद् व्यक्तिस्मरणं कथं स्यादित्याशङ्क्याह— व्यक्तिसंकेतेति । अनाशङ्कनीयत्वे हेतुमाह— व्यक्तिमिति, व्यक्तिं विना स्वरूपतो गोत्वादेर्ज्ञानं न भवतीत्यर्थापत्त्या जात्युद्बोधकस्यैव व्यक्त्युद्बोधकत्वं कल्प्यते— उद्बोधकस्य फलबलकल्प्यत्वात् फलं चात्र स्मरणं तच्च जातिव्यक्त्युभयविषयकमेव भवति व्यक्त्युद्बोधकस्यान्यस्योपलम्भाभावाज्जात्युद्बोधकस्यैव व्यक्त्युद्बोधकत्वं कल्प्यते इत्यर्थः ।

प्रामाकरमत च्छेदकहस्तित्वादिसंबन्धाग्रहेपि हस्त्यादिसंबन्धिहस्तिपकादिज्ञानासंब बलाद् हस्त्यादिस्मरणे हस्तित्वादेः प्रकारतया भानवद् व्यक्तिसंबन्धस्मर्णापि जातिसम्बन्धिपदज्ञानाज्जातिस्मरणे व्यक्तेर्विशेष्यतया भाने विरोज्ञात् ।

द्धर्मप्रकारकस्मृतौ तद्धर्मावच्छिन्नसंबन्धितया गृहीतवस्तुज्ञानस्य हेतुतायामेऽदृष्टादिरूपोद्बोधकजनितस्मृतौ व्यभिचारवारणाय कार्यतावच्छेदकसंकोचस्यावश्यकतया तत एव प्रकृते व्यभिचारानवकाशात् ।

---

उक्त उदाहरणमाह– संबन्धितेति, यथा ' हस्ती हस्तिपकसंबन्धी ' इत्यत्र सबन्धितावच्छेदकं यद् हस्तित्वं तेन सह हस्तिपकसंबन्धस्याऽग्रहेपि हस्तिसंबन्धिहस्तिपकदर्शनरूपं यद् हस्तिस्मरणोद्बोधकं तस्माद् हस्तिस्मरणे जाते तादृशस्मरणे हस्तित्व प्रकारतया भासते तथा पदस्य व्यक्तया सह शक्तिरूपसंबन्धस्य ज्ञानाभावेपि जातिसबन्धिपदज्ञानात्=जातिशक्तपदज्ञानाज्जातिस्मरणे जाते तादृशस्मरणे व्यक्तेर्जातिविशेष्यतया भाने विरोधाभावादित्यर्थः ।

ननु यदुक्तम् ' जातिशक्तपदज्ञानाज्जायमानजातिस्मरणे जातिविशेष्यतया व्यक्तेर्भाने विरोधो नास्ति ' तन्न संभवति– तद्धर्मप्रकारकस्मृतौ तद्धर्मावच्छिन्नसबन्धितया गृहीतवस्तुज्ञानस्य हेतुत्वनियमाद् यथा हस्तित्वप्रकारकस्मरणं प्रति हस्तित्वावच्छिन्नहस्तिसंबन्धितया गृहीत यद् वस्तु हस्तिपकस्तज्ज्ञानस्य कारणत्वमस्ति तथा च प्रकृते यदि गोत्वावच्छिन्नगोशक्ततया गोपदं ज्ञातं स्यात्तदा तादृशपदज्ञानाद्गोत्वप्रकारकं व्यक्तिविशेष्यक स्मरण स्यादपि न चैवमस्ति केवलजातौ त्वया शक्तिस्वीकारेण व्यक्तौ शक्तेरभावात् पदेन सह व्यक्तेः शक्तिरूपसम्बन्धाभावात्, केवलजातिशक्तिपदज्ञानादप्युक्तजातिप्रकारकव्यक्तिविशेष्यकस्मरणस्वीकारे चात्रोक्तनियमस्य व्यभिचारः स्यादित्याशङ्क्याह– तद्धर्मेति, तद्धर्मेत्याद्युक्तनियमस्वीकारेपि यत्रादृष्टादिरूपोद्बोधकवशाज्जातिप्रकारकव्यक्तिविशेष्यकस्मरणं जायते तत्र जात्यवच्छिन्नव्यक्तिसम्बन्धितया गृहीतवस्तुज्ञानस्याभावादुक्तनियमस्य व्यभिचारः प्राप्नोत्येवेति तादृशव्यभिचारवारणाय कार्यतावच्छेदकस्यावश्यं संकोचः कर्तव्य एव यथा 'तद्धर्मावच्छिन्नसंबन्धितया गृहीतवस्तुज्ञानादऽव्यवहितोत्तरजायमानस्मरणं प्रति तद्धर्मावच्छिन्नसबन्धितया गृहीतवस्तुज्ञानं कारणम्' एवं चादृष्टादिरूपोद्बोधकजन्यस्मरणे तद्धर्मावच्छिन्नसम्बन्धितया गृहीतवस्तुज्ञानादव्यवहितोत्तरत्वाभावात् तादृशस्मरणं प्रति तद्धर्मावच्छिन्नसम्बन्धितया गृहीतवस्तुज्ञानं कारणमेव नास्तीति न तत्रैतादृशनियमस्य व्यभिचार इति ततः=उक्तकार्यतावच्छेदकसंकोचादेव प्रकृते=पदज्ञानाज्जायमानजातिप्रकारकव्यक्तिविशेष्यकस्मरणेप्युक्तनियमस्य व्यभिचारो नास्त्येव जातिशक्तपदज्ञानाज्जायमाने जातिप्रकारकव्यक्तिविशेष्यकस्मरणे तद्धर्मावच्छिन्नसंबन्धितया गृहीतवस्तुज्ञानादव्यवहितोत्तरत्वस्याभावात् तादृशस्मरणंप्रति तद्धर्मावच्छिन्नसम्बंधितया गृहीतवस्तुज्ञानस्य कारणत्वाभावात्, तदव्यवहितोत्तरजायमानस्मरणं प्रत्येव तस्य कारणत्वादित्यर्थः ।

जातिशक्तिज्ञाने नियमतो जातिप्रकारेण व्यक्त्यभानात् तज्जन्यसंस्कारमतो व्यक्तिस्मरणासम्भव इति चेत् ? का क्षतिः— व्यक्तिविषयकज्ञानान्देवश्यकतया तज्जनितसंस्कारादेव व्यक्तिस्मरणसम्भवात् ।

अथ भवतु जातिशक्तपदज्ञानाज्जातिप्रकारेण व्यक्तिस्मरणं तथापि तत्प्रकारकशाब्दबोधो न सम्भवति— तद्धर्मप्रकारकधर्मिविषयकशाब्दबोधे तद्धर्मप्रकारेण धर्मिगृहीतवृत्तिकपदज्ञानजन्यतद्धर्मप्रकारकव्यक्त्युपस्थितेर्हेतुत्वात् । पदे गृहीतवृत्तिकत्वमात्रनिवेशे घटत्वादिगृहीतवृत्तिकपदे गोत्वाद्यवच्छिन्ननिरूपितसंबन्धान्तरावगाहिज्ञानजन्यगोत्वादिप्रकारकस्मरणाद्गोत्वादिप्रकारकशाब्दबोधापत्तिः ।

---

ननु यदि जातिविषयकशक्तिज्ञाने नियमेन जातिप्रकारकव्यक्तिभान स्यात्तदा तज्जन्यसंस्काराज्जातिशक्तपदज्ञानान्नियमेन व्यक्तिस्मरण स्यादपि न चैवमस्ति त्वया शक्तिज्ञाने व्यक्तिभानस्यास्वीकारादित्याशङ्कते— जातिशक्तीति । उत्तरमाह— केति । उक्तक्षत्यभावे हेतुमाह— व्यक्तीति, जातौ शक्तिग्रहकाले व्यक्ते प्रत्यक्षादिक भवत्येव तादृशप्रत्यक्षादिनापि व्यक्तिविषयकसंस्कारो जायते तादृशसंस्कारादेव व्यक्तिस्मरण भवतीति न का चिदनुपपत्ति, व्यक्तिविषयकसंस्कारस्योद्बोधोऽस्तु जातिविषयकसंस्कारोद्बोधकादेवेत्यर्थः ।

जातिशक्तपदज्ञानाज्जातिप्रकारकव्यक्तिविशेष्यकस्मरणे स्वीकृतेपि तादृशस्मरणाज्जातिप्रकारकव्यक्तिविशेष्यकशाब्दबोधस्तु नैव सम्भवतीत्यभिप्रायेणाशङ्कते— अथेति । उक्तासम्भवे हेतुमाह— तद्धर्मेति, तद्धर्मप्रकारकधर्मिविषयकशाब्दबोध प्रति तद्धर्मप्रकारेण धर्मिणि गृहीतवृत्तिक यत्पद तादृशपदस्य ज्ञानेन जन्या या तद्धर्मप्रकारकव्यक्त्युपस्थितिस्तस्या कारणत्वमस्ति त्वन्मते च धर्मिणि व्यक्तौ शक्तिग्रह एव न भवतीति कथ जातिप्रकारकव्यक्तिविशेष्यकशाब्दबोधः स्यादित्यर्थः । ननु पदे तद्धर्मप्रकारेण धर्मिगृहीतवृत्तिकत्वस्य निवेशो न क्रियते येनोक्तदोषः स्यात्, किंतु गृहीतवृत्तिकत्वमात्रस्य निवेशः कर्तव्यस्तथा च प्रकृते पद जातौ गृहीतवृत्तिकमस्त्येवेति तादृशपदस्य ज्ञानाज्जायमाना या जातिप्रकारकव्यक्तिस्मृतिस्तया जातिप्रकारकव्यक्तिविशेष्यकशाब्दबोधस्य नानुपपत्तिरित्याशङ्क्याह— पदे इति, पदे गृहीतवृत्तिकत्वमात्रस्य निवेशे कृते घटत्वे गृहीतवृत्तिक यद् घटपद तद्विषयक गोत्वावच्छिन्नगोव्यक्तिनिरूपित यत् कालिकादिसम्बन्धान्तरं तदवगाहि यद् 'घटपद गोत्वावच्छिन्नकालिकम्' इत्यादिज्ञान तज्जन्य यद् गोत्वप्रकारकगोस्मरण तस्मादपि गोत्वप्रकारकगोविशेष्यकशाब्दबोधः स्याद् न चैतदिष्टमिति पदे तद्धर्मप्रकारेण धर्मिगृहीतवृत्तिकत्वस्य निवेशः कर्तव्यस्तथा चोक्तरीत्या जातिप्रकारकव्यक्तिविशेष्यकबोधस्यानुपपत्तिरस्त्येव । ननु तद्धर्मप्रकारकशाब्दबोध प्रति तद्धर्मगृहीतवृत्तिकपदज्ञानजन्यतद्धर्मप्रकारकोपस्थितेर्हेतुत्वमुच्यते इति पदे तद्धर्मगृहीतवृत्तिकत्वस्य निवेशः क्रियते तथा च घटपदस्य गोत्वे गृहीतवृत्तिकत्वाभावादेवो-

प्राभाक

वृत्तिकत्वनिवेशे पशुत्वादिधर्मागृहीतशक्तिकविशिष्टवाचकपश्वादिप-
तद्ध त्वादिविशिष्टविषयकशाब्दबोधस्य गुरूणामनुमतस्याप्यनुपपत्तिः ।
दा प्रकारीभूतधर्मभेदेन कार्यकारणभावभेदस्य यत्त्वतत्त्वाननुगमेनावश्यक-
तिप्रकारकशाब्दबोधे एव जातिरूपधर्ममात्रगृहीतवृत्तिकपदज्ञानजन्यस्मर-
हेतुत्वमङ्गीकार्यमिति वाच्यम्, एवमपि जातिमल्लाक्षणिकपदज्ञानाज्जातिप्र-
कारकशाब्दबोधानुपपत्तेर्जागरूकत्वात्, लक्षणाज्ञानाधीनपदार्थोपस्थितेर्हेतुत्वान्त-
रकल्पने च गौरवात् ।

---

कस्थले तादृशघटपदज्ञानाद् गोत्वप्रकारकशाब्दबोधापत्तिर्नास्ति, गोपदस्य च गोत्वे गृहीतवृत्तिकत्वात् तादृशगोपदज्ञानाद् गोत्वप्रकारकगोविशेष्यकशाब्दबोधस्यानुपपत्तिरपि नास्तीत्याशङ्क्याह– तद्धर्मेति, एवं हि त्वन्मते पशुपदस्य पशुत्वधर्मे शक्तिर्नास्ति किं तु पशुत्वविशिष्टव्यक्तावेव विशिष्टवाचकत्वस्वीकारात् तादृशपशुपदात् पशुत्वविशिष्टस्य यः शाब्दबोधोऽनुमतः स न स्यात्– पशुपदस्य प्रकारीभूतपशुत्वधर्मे गृहीतवृत्तिकत्वाभावादित्यर्थः । तद्धर्मप्रकारेण धर्मिगृहीतवृत्तिकपदज्ञानजन्यतद्धर्मप्रकारकस्मरणस्य हेतुत्वे तु पशुपदस्य पशुत्वविशिष्टे गृहीतवृत्तिकत्वेन पशुत्वप्रकारेण पशुव्यक्तिगृहीतवृत्तिकत्वात् पशुत्वविशिष्टव्यक्तिविषयकशाब्दबोधस्यानुपपत्तिर्नास्ति । गुरूणाम्=प्राभाकराणाम् । लोमादिविशिष्टस्य पशुत्वेन पशुत्व लोमादिकमेव तत्र पशुपदशक्तिस्वीकारेऽप्यानन्त्यव्यभिचारदोषसम्भवात् जातिशक्तिवादिभिरपि पशुत्वविशिष्टव्यक्तावेव पशुपदस्य शक्तिः स्वीक्रियते न तु पशुत्वे इत्यवधेयम् ।

ननु ' तद्धर्मप्रकारकशाब्दबोधे तद्धर्मप्रकारेण धर्मिगृहीतवृत्तिकपदज्ञानजन्यतद्धर्मप्रकारकस्मरणस्य हेतुत्वम् ' इत्येव यत्तत्पदाभ्यामनुगमो न संभवत्येकतत्पदेन गोत्वस्यापरतत्पदेन घटत्वस्यापि ग्रहणसंभवादिति ' गोत्वप्रकारकशाब्दबोधं प्रति गोत्वमात्रे गृहीतवृत्तिकपदज्ञानजन्यगोत्वप्रकारकस्मरणस्य हेतुत्वम् ' इत्येव प्रकारीभूतगोत्वादिधर्मभेदेन कार्यकारणभावभेदस्यावश्यकत्वाज्जातिप्रकारकशाब्दबोधे एव जातिरूपधर्ममात्रगृहीतवृत्तिकपदज्ञानजन्यस्मरणस्य हेतुत्वमङ्गीकार्यं यथा गवादिपदस्थले, पशुपदस्थले तु जातिप्रकारकशाब्दबोधो न भवति किं तु लोमादिद्रव्यप्रकारक एवेति तादृशशाब्दबोधं प्रति धर्ममात्रगृहीतवृत्तिकपदज्ञानजन्यस्मरणस्य हेतुत्वमेव नास्तीति न पशुत्वधर्मागृहीतवृत्तिकपशुपदात् पशुव्यक्तिविषयकशाब्दबोधस्यानुपपत्तिरित्याशङ्क्याह– न चेति । परिहारहेतुमाह– एवमिति, एवमपि द्रव्यपदस्य सुवर्णे लक्षणास्तीति द्रव्यपदं सुवर्णत्वजातिमति लाक्षणिकमिति तादृशद्रव्यपदज्ञानात् सुवर्णत्वजातिप्रकारकशाब्दबोधो लक्षणया न स्यादेव– द्रव्यपदस्य सुवर्णत्वे गृहीतशक्तिकत्वाभावात् । यदि शक्यार्थविषयकशाब्दबोधं प्रति जातौ गृहीतशक्तिकपदज्ञानजन्योपस्थितेः कारणत्वमस्ति न तु लक्ष्यार्थविषयकशाब्दबोधं प्रत्यपि लक्ष्यार्थविषयकशाब्दबोधं प्रति लक्षणाज्ञानाधीनोपस्थितेः कारणत्वस्वीकारादित्युच्यते ? तदा लक्ष्यार्थबोधं प्रति लक्षणाज्ञानाधीनोपस्थितेर्हेतुत्वान्तरकल्पनाद् गौरवं स्यादित्याह–लक्षणेति ।

न च तन्मतेऽध्याहृतार्थस्याप्यन्वयबोधविषयतया पदजन्यपदार्थोपस्थेर्न हेतुतैव नास्ति कथमुक्तानुपपत्त्यवकाश इति वाच्यम्, सर्वपदार्थाध्याहारस्थलेऽन्वयबोधवारणाय तन्मतेऽपि तादृशहेतुताया व्यवस्थापितत्वात् ।

न च तथापि पदज्ञानजन्यपदार्थोपस्थितित्वघटितकारणतावच्छेदकेन जातिमद्व्यक्तिलाक्षणिकपदजन्यव्यक्त्युपस्थितेरसंग्रहो न दोषाय— अध्याहृतपदार्थोपस्थितेर्येन रूपेण हेतुता व्यवस्थापिता लक्ष्यार्थोपस्थितेरपि तद्रूपावच्छिन्नतयैवोपपत्तेः,

ननु तन्मते=प्रभाकरमतेऽध्याहृतपदार्थस्यापि शाब्दबोधविषयत्वं भवति यथा 'द्वारम्' इत्युक्तेऽध्याहृतस्य पिधानपदार्थस्य न चाध्याहृतपदार्थस्योपस्थितिः पदज्ञानजन्या भवतीति न शाब्दबोधं प्रति पदज्ञानजन्यपदार्थोपस्थितेर्हेतुत्वं किं तूपस्थितिमात्रस्यैवेति नाध्याहृतपदार्थस्य शाब्दबोधविषयत्वानुपपत्तिस्तथा चोक्तस्थलेऽप्युपस्थितेः सत्त्वादेव न शाब्दबोधानुपपत्तिरित्याशङ्क्याह— न चेति । परिहारहेतुमाह— सर्वेति, यदि पदजन्यपदार्थोपस्थितेर्हेतुत्वं शाब्दबोधे न स्यात्तदा सर्वपदार्थाध्याहारस्थलेऽपि प्रभाकरमते शाब्दबोधः स्यादेव न च प्रभाकरमतेऽपि सर्वपदार्थाध्याहारस्थले शाब्दबोध इष्ट इति तद्वारणाय प्रभाकरमतेऽपि तादृशहेतुताया=शाब्दबोधं प्रति पदजन्यपदार्थोपस्थितेर्हेतुत्वस्य व्यवस्थापितमेवास्तीत्युक्तरीत्योक्तानुपपत्तीनामवकाशोऽस्त्येवेत्यर्थः । यत्र चेष्टया द्वारपिधानं प्रतिपाद्यते तत्र द्वारयोः पिधानस्यापि चाध्याहारात् सर्वपदार्थाध्याहार एव ।

ननु यद्यपि शाब्दबोधं प्रति पदजन्यपदार्थोपस्थितेर्हेतुत्वं सिद्धं लक्षणाज्ञानाधीनोपस्थितेश्च शक्तिज्ञानाधीनोपस्थितिरूपत्वं न सम्भवतीति न शक्तिज्ञानाधीनोपस्थित्या संग्रहः सम्भवतीति पृथक् कारणत्वं प्राप्तं तथापि पदज्ञानजन्यपदार्थोपस्थितित्वघटितं यच्छाब्दबोधकारणतावच्छेदकं तेन रूपेण तीरत्वादिजातिमद्व्यक्तौ तीरादौ लाक्षणिकं यद् गङ्गादिपदं तज्जन्यतीरादिव्यक्त्युपस्थितेरसंग्रहे दोषो नास्त्येवेत्याशङ्कते— न चेति, दोषाभावे हेतुमाह— अध्याहृतेति, अध्याहृतपदार्थस्यापि प्रभाकरमते शाब्दबोधविषयत्वमस्त्येवेत्यध्याहृतपदार्थोपस्थितेर्येन रूपेण शाब्दबोधहेतुत्वं भवति लक्ष्यार्थोपस्थितेरपि तद्रूपावच्छिन्नतयैव=तेनैव रूपेण शाब्दबोधहेतुत्वमुपपद्यते तत्राध्याहृतपदार्थोपस्थितेर्हि योग्यतादिज्ञानाधीनोपस्थितित्वेन रूपेण शाब्दबोधहेतुत्वं भवति यथा 'द्वारम्' इत्युक्ते द्वारपदार्थस्य पिधानेन सह योग्यतादिकमस्तीति तादृशयोग्यतादिज्ञानेनाऽध्याहार्यपिधानपदार्थस्योपस्थितिर्जायते इति तादृशोपस्थित्याऽध्याहृतपिधानस्य शाब्दबोधविषयत्वं भवति तथा लक्ष्यार्थविषयकबोधस्थलेऽपि घोषस्य तीरेण सह योग्यतादिकमस्त्येवेति तादृशयोग्यतादिज्ञानेन गङ्गापदात् तीरोपस्थितिर्जायते इति तादृशोपस्थित्या तीरस्य शाब्दबोधविषयत्वं भवतीति लक्ष्यार्थोपस्थितेः शक्तिपदज्ञानजन्यपदार्थोपस्थितित्वेन रूपेण शाब्दबोधजनकत्वेऽपि दोषो नास्तीत्यर्थः । नन्वेवं सर्वलाक्षणिकपदस्थले सर्वार्थाध्याहारस्थले च शाब्दबोधः किं न स्यादित्याशङ्क्याह— शक्तपदस्येति, शक्तस्यैव पदस्य शाब्दबोधजनकत्वं स्वीक्रियते इति सर्वलाक्षणिकस्थले कस्यापि पदस्य

स्यैवाऽनुभावकतेति सिद्धान्तात् सर्वलाक्षणिकस्थलेऽन्वयबोधानुपगमात् लीयसामग्रीबलात् सर्वार्थाध्याहारस्थलेप्यन्वयबोधापत्तिरिति शङ्कानवकादितिवाच्यम्, यत्र लाक्षणिकपश्वादिपदाद्गोत्वादिप्रकारिकोपस्थितिस्तदव्यवहितोत्तरद्वितीयादिविभक्तितः शक्त्या कर्मत्वाद्युपस्थितिस्ततश्च कर्मत्वादिविशेष्यको गोत्वाद्यवच्छिन्नप्रकारक शाब्दबोधस्तत्स्थलीयसामग्री लक्षणाधीनपदार्थोपस्थितेरध्याहारात्मकोपस्थितिसाधारणरूपमात्रेण हेतुतामते कर्मत्वाद्युपस्थापकविभक्तिप्रकृतिभूतपश्वादिपदाद् यत्र न गोत्वाद्यवच्छिन्नोपस्थितिरपि तु निराकाङ्क्षपदान्तरादनुमानादितो वा तत्राप्यक्षतैवेति तादृशशाब्दबोधस्य तत्रापत्तेर्दुर्वारत्वात् । अर्थाध्याहारमतेपि यत्र साकाङ्क्षपदान्न प्रकृतवाक्यार्थघटकस्य कस्याप्यर्थस्योपस्थितिस्तत्र शाब्दबोधोत्पत्तेरनिष्टत्वादितिचेत् ?,

---

शक्यार्थबोधकत्वाभावाच्छाब्दबोध एव न जायते येन तत्स्थलीयसामग्रीबलात्=सर्वलाक्षणिकपदस्थलीयसामग्रीबलात् सर्वार्थाध्याहारस्थले शाब्दबोधापत्तिः स्यादित्यर्थः । वस्तुतस्तु पूर्वमध्याहृतपदार्थोपस्थितेर्येनरूपेण हेतुता तेन रूपेण लक्ष्यार्थोपस्थितेर्हेतुताया उक्तत्वादत्र 'सर्वार्थाध्याहारस्थलेऽन्वयबोधानुपगमात् तत्स्थलीयसामग्रीबलात् सर्वलाक्षणिकस्थलेप्यन्वयबोधापत्तिरिति शङ्कानवकाशात्' इत्येवं वक्तव्यम्। परिहारहेतुमाह— यत्रेति, यत्राऽध्याहृतपदार्थोपस्थितेर्येन रूपेण हेतुता लक्ष्यार्थोपस्थितेरपि तेनैव रूपेण शाब्दबोधं प्रति हेतुता स्यात्तदा पशुपदस्य गोत्वावच्छिन्ने लाक्षणिकत्वाद् यत्र= ' पशुमानय ' इत्यादौ गोत्वावच्छिन्ने लाक्षणिकात् पशुपदाद् गोत्वप्रकारकगोविशेष्यकोपस्थितिस्तादृशपशुपदाव्यवहितोत्तरवर्तिद्वितीयाविभक्तितः शक्त्या कर्मत्वोपस्थितिर्जायते तदनन्तरं तादृशोपस्थितिभ्यां गोत्वावच्छिन्नप्रकारककर्मत्वविशेष्यकः ' गोविशिष्टमानयनकर्मत्वम्' इत्याकारकः शाब्दबोधो जायते तत्स्थलीया=उक्तकर्मत्वविशेष्यकशाब्दबोधस्थलीया योक्तोपस्थितिद्वयरूपा शाब्दबोधसामग्री सा लक्षणाज्ञानाधीनपदार्थोपस्थितेरध्याहारात्मकोपस्थितितुल्यरूपेण=योग्यतादिज्ञानाधीनोपस्थितित्वेन रूपेण शाब्दबोधं प्रति हेतुतामते यत्र कर्मत्वाद्युपस्थापकद्वितीयादिविभक्तिप्रकृतिभूतपश्वादिपदान्न गोत्वावच्छिन्नोपस्थितिः किं तु निराकाङ्क्षदुग्धादिपदान्तरादनुमानादितो वा गोत्वावच्छिन्नोपस्थितिस्तत्रापि ( सोक्ता शाब्दबोधसामग्री अक्षतैव— निराकाङ्क्षदुग्धादिपदादनुमानादितो वा जायमानाया अपि गोत्वावच्छिन्नोपस्थितेर्योग्यतादिज्ञानेनैव जायमानत्वादिति तादृशस्थलेपि तादृशशाब्दबोधस्य=गोप्रकारककर्मत्वविशेष्यकशाब्दबोधस्यापत्तिः स्यादेव न चैतदिष्टमिति नाऽध्याहृतपदार्थोपस्थितितुल्यरूपेण लक्ष्यार्थोपस्थितेः शाब्दबोधहेतुत्वं सम्भवतीति लक्षणाज्ञानाधीनोपस्थितेरुक्तरीत्या शाब्दबोधं प्रति हेतुत्वान्तरकल्पनेन गौरवं स्यादेवेत्यर्थः । ननूक्तस्थले उक्तशाब्दबोध इष्ट एवेत्याशङ्क्याह— अर्थाध्याहारेति, अर्थाध्याहारमतेपि यत्र प्रकृतवाक्यार्थघटकस्य कस्याप्यर्थस्य साकाङ्क्षपदादुपस्थितिर्न भवति तत्र शाब्दबोधोत्पत्तेरस्वीकारात् तत्र प्रदर्शितशाब्दबोधापत्तिरनिष्टैवेत्यर्थः । तन्मते शक्तपदस्यैवाऽनुभावकत्वनियमेन शक्तपदेन किंचिदर्थोपस्थितौ सत्यामेव शाब्दबोधस्येष्टत्वादितिभावः ।

न- शक्तिलक्षणासाधारणस्याऽनतिप्रसक्तशक्तित्वस्य दुर्वचतया शक्तित्वसंबन्धत्वाभ्यामेव तयोर्निवेशनीयतया शक्तिलक्षणाधीनपदार्थोपस्थित्योः कार्यताभेदस्य व्यक्तिशक्तिवादिनामप्यावश्यकतया शक्त्यधीनपदार्थोपस्थितेस्तद्धर्मगृहीतशक्तिकपदज्ञानजन्यतद्धर्मप्रकारकोपस्थितित्वेनैव तद्धर्मप्रकारकशाब्दबोधहेतुतायाः कल्पयितुमुचितत्वात् ।

न च तद्धर्मावच्छिन्नविषयतानिरूपितशक्तिविषयताशालिज्ञानत्वेन व्यक्तौ शक्तिलक्षणाग्रहयोर्व्यक्तिशक्तिवादिमतेऽनुगमः सम्भवति- 'गोसम्बन्धिशक्तं पदम्' इत्याकारके 'पदशक्यसम्बन्धिनी गौः' इत्याकारके वा लक्षणाग्रहेपि

---

तार्किकेन प्रभाकरमते लक्षणाज्ञानाधीनोपस्थितेर्हेतुत्वान्तरकल्पनेन गौरव प्रदर्शित तादृशगौरव व्यक्तिशक्तिवादितार्किकमतेऽप्यस्त्येवेति प्रदर्शयन् प्राभाकरोऽथेत्यादिना शङ्कित परिहरति- नेति । तयो =शक्तिलक्षणयो । व्यक्तिशक्तिवादितार्किकमतेपि शक्तिज्ञानाधीनोपस्थितेर्लक्षणाज्ञानाधीनोपस्थितेश्च शाब्दबोध प्रति पृथक् पृथगेव कारणत्व सम्भवति- शक्तिलक्षणयोरेकरूपेणानुगमासम्भवादित्याह- शक्तिलक्षणाधीनेति । तथा च तार्किकेनापि शक्त्यधीनपदार्थोपस्थितेस्तद्धर्मगृहीतशक्तिकपदज्ञानजन्यतद्धर्मप्रकारकोपस्थितित्वेनैव रूपेण तद्धर्मप्रकारकशाब्दबोध प्रति हेतुत्व वक्तव्यम् अनेन च रूपेण लक्षणाधीनोपस्थितेस्तु शाब्दबोधहेतुत्व न सम्भवति- तस्यास्तद्धर्मगृहीतशक्तिकपदज्ञानजन्यत्वाभावादिति लक्षणाधीनोपस्थिते पृथगेव हेतुत्व स्वीकार्यमिति प्रदर्शितगौरव तार्किकमतेऽप्यस्त्येवेत्यर्थ ।

ननु व्यक्तिशक्तिवादितार्किकमते व्यक्तिविषयकस्य शक्तिज्ञानस्य लक्षणाज्ञानस्य च तद्धर्मावच्छिन्नविषयतानिरूपितशक्तिविषयताशालिज्ञानत्वेन रूपेणानुगम सम्भवति यथा ' गङ्गापद प्रवाहे शक्तम् ' इत्याकारकशक्तिज्ञाने प्रवाहत्वावच्छिन्ननिरूपिता या शक्तिविषयता ( शक्तिविषयकता ) तच्छालित्वमस्त्येव, लक्षणास्थले यद्यपि तद्धर्मावच्छिन्नविषयताया नाम लक्ष्यार्थविषयतायाः शक्तिविषयतायाश्च परस्पर साक्षान्निरूप्यनिरूपकभावो नास्ति तथापि परम्परया तु निरूप्यनिरूपकभावोऽस्त्येव- लक्ष्यार्थविषयताया शक्यार्थविषयताद्वारा शक्तिविषयतया सम निरूप्यनिरूपकभावस्याऽक्षतत्वादिति ' गोसम्बन्धिशक्त पदम् ' ' तीरसम्बन्धिप्रवाहशक्त गङ्गापदम् ' इत्याकारकपदविशेष्यकलक्षणाज्ञानेपि ' पदशक्यसम्बन्धिनी गौ ' ' गङ्गापदशक्यसम्बन्धि तीरम् ' इत्याकारकार्थविशेष्यकलक्षणाज्ञानेपि च शक्यार्थविषयताद्वारा लक्ष्यार्थविषयतानिरूपिता या शक्तिविषयता तच्छालित्वमस्त्येवेत्येतादृशविषयताशालिज्ञानजन्यत्वेन शक्तिज्ञानाधीनलक्षणाज्ञानाधीनोपस्थित्योः सङ्ग्रहसम्भवात् तार्किकमते लक्षणाज्ञानाधीनोपस्थिते पृथक् कारणताकल्पनापत्त्यभावाद् गौरव नास्तीत्याशङ्कते- न चेति । प्रभाकरमते तु नैव शक्तिलक्षणाज्ञानयोरनुगम सम्भवति- जातौ शक्तिस्वीकारेण गङ्गापदस्य यत्र प्रवाहत्वे शक्तिस्तेन प्रवाहत्वेन तीरस्य साक्षात् सम्बन्धाभावात् तीरविषयताया प्रवाहत्वविषयताद्वारापि शक्तिविषयतया सम निरूप्यनिरूपकभावासम्भवात्, तार्किकमते

च्छिन्नविषयतया समं परम्परया शक्तिविषयताया निरूप्यनिरूपकभाव-
गौ
रितिवाच्यम्, साक्षान्निरूपितत्वपरम्परानिरूपितत्वयोरनुगमकरूपाभावात्।
तु वृत्तिसंसर्गकपदप्रकारकज्ञानमेव शाब्दबोधोपयोगि एवं च शक्तिसंसर्ग
निरूपकपदप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताशालिज्ञानत्वेन तद्धर्मा-
वच्छिन्नविशेष्यकशक्तिलक्षणाज्ञानयोरनुगमः संभवत्येव- शक्यसम्बन्धेनार्थांशे
पदप्रकारकग्रहस्यापि तथात्वात्, संसर्गतावच्छेदकीयविषयतायामपि संसर्गता
त्वसत्त्वादिति।

---

[ व्यक्तौ शक्तिस्वीकारेण गङ्गापदस्य यत्र प्रवाहे शक्तिस्तेन प्रवाहेण तीरस्य साक्षात् सम्बन्ध-
सत्त्वात् तीरविषयताया प्रवाहविषयताद्वारा गङ्गापदशक्तिविषयतया समं निरूप्यनिरूपकभाव-
सम्भवादितिभावः। गौणाद्यवच्छिन्नविषयतया नाम लक्ष्यार्थविषयतया। परिहरति- साक्षादिति।
स्पष्टार्थं वाक्यम्। तथा च शक्तिलक्षणाज्ञानयोरनुगमासम्भवात् तज्जन्योपस्थित्योः पृथक् पृथगेव
कारणत्वं तार्किकमतेपि प्राप्तमिति प्रदर्शितगौरवं तदवस्थमेवेत्यर्थः।

यत्त्विति- शक्तिसंसर्गकपदप्रकारकार्थविशेष्यकज्ञानं शाब्दबोधकारणमित्युच्यते तथा च तद्ध-
र्मावच्छिन्नविशेष्यकशक्तिज्ञानस्य तद्धर्मावच्छिन्नविशेष्यकलक्षणाज्ञानस्य च शक्तिसंसर्गतानिरू-
पिका या पदनिष्ठा प्रकारता तादृशपदप्रकारतानिरूपिता या घटत्वादिधर्मावच्छिन्ना
विशेष्यता तादृशविशेष्यताशालिज्ञानत्वेन रूपेणानुगमः सम्भवत्येवेति न तार्किकमते लक्ष-
णाज्ञानाधीनोपस्थितेर्हेतुत्वान्तरकल्पनापत्तिर्येन गौरवं स्यादित्यर्थः, तत्र 'स्वनिष्ठशक्तिनिरूपकत्व-
सम्बन्धेन गङ्गापदविशिष्टः प्रवाहः' इति शक्तिज्ञानम् अत्र स्वं गङ्गापदं तन्निष्ठशक्तेर्निरूपकत्वं
प्रवाहेऽस्त्येव, 'स्वनिष्ठशक्तिनिरूपकशक्यसम्बन्धेन (शक्यसम्बन्धित्वेन सम्बन्धेन) गङ्गापदविशिष्ट
तीरम्' इत्याकारकमर्थविशेष्यकं लक्षणाज्ञानं शाब्दबोधकारणमस्ति, स्वं गङ्गापदम्, एतादृश-
शक्तिलक्षणाज्ञानयोरुभयोरपि शक्तेः संसर्गतया पदस्य प्रकारतयाऽर्थस्य च विशेष्यतयाप्रवेशाच्छ-
क्तिनिष्ठसंसर्गतानिरूपकपदप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताशालित्वमस्त्येवेति तेन रूपेणा-
नुगमः। शक्यसम्बन्धेन=स्वनिष्ठशक्तिनिरूपकशक्यसम्बन्धेनाऽर्थांशे=लक्ष्यार्थविषयकस्य पदप्रकार-
कस्य लक्षणाज्ञानस्यापि तथात्वात्=शक्तिज्ञानसमानत्वात् नाम शक्तिसंसर्गतानिरूपकपदप्रकारता-
निरूपिततद्धर्मावच्छिन्नविशेष्यताशालित्वादित्याह- शक्येति। ननु स्वनिष्ठशक्तिनिरूपकत्वादे
संसर्गत्वेन शक्तेः संसर्गतावच्छेदकत्वमेव सम्भवति न तु संसर्गत्वं त्वया च शक्तेः संसर्गत्वमेवोच्यते
तत्कथमुपपद्यतेत्याशङ्क्याह- संसर्गतावच्छेदकीयेति, शक्तौ सांसर्गिकविषयताया अभावेप्यत्र
संसर्गतावच्छेदकीयविषयता त्वस्त्येव संसर्गतावच्छेदकीयविषयतायामपि संसर्गतात्वमस्त्येवेति शक्तेः
संसर्गघटकत्वेन संसर्गत्वमक्षतमेवेत्यर्थः।

तदसत्— शक्तिकालीनत्वादिसंबन्धावगाहिज्ञानवारणाय प्यत्वोभयनिरूपितशक्तिनिष्ठसांसर्गिकविषयताया निवेशस्यावश्यकतया सर्गकज्ञानसंग्राहकेण रूपेण लक्षणाग्रहाऽसंग्रहात् ।

अथ धर्मशक्तपदस्य धर्मिस्मरणशाब्दबोधजनकत्वे च्छिन्नबोधकपश्वादिपदस्यापि धर्मिशक्तिर्विलोपता युक्तेः साम्यात् ।

न च निर्विकल्पकरूपस्य स्मरणस्य शाब्दबोधस्य चाऽनभ्युपगमाज्जातिवाचकपदाद् व्यक्त्यऽविषयकस्मरणाद्यसंभवेन तस्य व्यक्तिस्मरणादिजनकत्वम्, धर्म्यविषयकस्यापि च लोमत्वाद्यवच्छिन्नविषयकस्य स्मरणादेः संभवात् पश्वा-

---

परिहरति—तदसदिति, यदि शक्तिसंसर्गकपदप्रकारकार्थविशेष्यकज्ञानस्य शाब्दबोधकारणत्वं स्यात्तदा 'स्वनिष्ठशक्तिकालिकत्वसंबन्धेन घटपदविशिष्टो घटः' इत्यादिशक्तिकालिकत्वादिसंबन्धावगाहिज्ञानादपि शाब्दबोधः स्यादेव— अत्रापि शक्तेः संसर्गतया पदस्य च प्रकारतया प्रवेशात्, न चैतदिष्टमिति शक्तिकालिकत्वादिसंबन्धावगाहिज्ञानाच्छाब्दबोधवारणाय पदनिष्ठा या प्रकारता अर्थनिष्ठा च या विशेष्यता तदुभयनिरूपिताया एव शक्तिनिष्ठसांसर्गिकविषयताया निवेशः कर्तव्यस्तत्र च शक्तिसंसर्गकशक्तिज्ञानस्य समाहारेण पदनिष्ठप्रकारतानिरूपितार्थनिष्ठविशेष्यतानिरूपितशक्तिनिष्ठसांसर्गिकविषयताशालित्वेन रूपेण लक्षणाज्ञानस्य संग्रहो न संभवति— शक्तिनिष्ठसांसर्गिकविषयताया शक्यार्थमात्रनिरूपितत्वेन लक्ष्यार्थनिरूपितत्वाभावादिति लक्षणाज्ञानाधीनोपस्थितेः पृथगेव हेतुत्वापत्त्या प्रदर्शितगौरवं तदवस्थमेवेत्यर्थः । 'स्वनिष्ठशक्तिकालिकत्वसंबन्धेन घटपदविशिष्टो घटः' इत्यत्र च शक्तिनिष्ठसांसर्गिकविषयताया पदप्रकारतार्थविशेष्यतानिरूपितत्वाभावादेतादृशज्ञानेन शाब्दबोधापत्तिर्नास्तीत्यवधेयम् । अत्र च 'स्वनिष्ठशक्तिसंबन्धेन घटपदविशिष्टो घटः' इत्यादिरूपेण शक्तिज्ञानमवधार्यम् ।

तार्किकः शङ्कते—अथेति, यदि धर्ममात्रशक्तपदस्य धर्मिविषयकस्मरणशाब्दबोधजनकत्वं स्वीक्रियते तदा युक्तेः साम्याद् नाम यथा गवादिपदानां गोत्वादिधर्ममात्रशक्तत्वेऽपि गवादिव्यक्तिविषयकशाब्दबोधजनकत्वेन गवादिव्यक्तौ शक्तिर्नास्ति तथा पशुपदस्यापि लोमादिधर्ममात्रे शक्तिरस्तु तथैव शक्तया पशुव्यक्तिबोधजनकत्वं भविष्यतीति पशुव्यक्तौ शक्तिर्न स्वीकार्येत्यर्थः ।

ननु जातिवाचकगवादिपदाद् यदि व्यक्तिं त्यक्त्वा गोत्वादेः स्मरणादिः स्यात्तदा निर्विकल्पकमेव स्यात्—स्वरूपत एव गोत्वादौ शक्तिस्वीकाराद् गोत्वत्वादेर्भानासंभवाद् न च निर्विकल्पकरूपयोः स्मरणशाब्दबोधयोः स्वीकारोऽस्तीति तस्य=जातिमात्रशक्तगवादिपदस्य व्यक्तिविषयकस्मरणशाब्दबोधजनकत्वं स्वीक्रियते पशुपदस्य तु यदि धर्मिणि पशुव्यक्तौ शक्तिर्न स्यात् किं तु लोमादिरूपधर्ममात्रे शक्तिः स्यात्तदा पशुपदाल्लोमादीनां लोमत्वादिरूपेणैव स्मरणादिकं स्यात् तच्च न निर्विकल्पकं येन तत्र पशुव्यक्तिभानस्यावश्यकता स्यादिति पशुव्यक्तिविषयकस्मरणशाब्दबोधौ न स्यातामिति पशुव्यक्तिविषयकस्मरणशाब्दबोधयोरुपपत्त्यर्थं तस्य=पशुपदस्य धर्मिवाचकत्वं धर्मिणि शक्तिश्च स्वीक्रियते इत्याशङ्क्याह—न चेति । परिहारहेतुमाह—उपाधेरिति,

। लोमत्वाद्यवच्छिन्नमात्रवाचकत्वोपगमे न धर्मिधीः संभवतीति तस्य चकत्वमितिवाच्यम्, उपाधेर्धर्मिविनिर्मोकेण भानसंभवरूपस्य जात्यपे- विशेषस्य सत्त्वेपि जातिशक्तपदज्ञानस्य जातिप्रकारिकायामिवोपाधिशक्त- ज्ञानस्याप्युपाधिप्रकारकधर्मिविषयकबुद्धौ कारणताकल्पने बाधकाभावाद् उपाधिमात्रशक्तादपि धर्मिधीसंभवादितिचेत् ?,

न— लोमत्वाद्यवच्छिन्नसंबन्धान्तरवत्तया गृहीतात् पश्वादिपदाल्लोमत्वादिना लोमादिमुख्यविशेष्यकस्यैव स्मरणस्य धर्मिस्मरणोद्बोधकान्तरविरहदशायामु- त्पाददर्शनात् तत्तद्रूपावच्छिन्नशक्तत्वेन गृहीतात् पदादपि तत्तद्रूपावच्छिन्नमुख्य- विशेष्यकस्मरणोत्पादस्यानुभविकत्वात् ततस्तद्धर्मावच्छिन्नप्रकारकधर्मिस्मरणस्य नियमतः स्वीकारासंभवाल्लोमादिमात्रशक्तत्वेन गृहीतपदान्नियमतस्तत्प्रकारक- शाब्दबोधस्याऽनिर्वाहात् । अविशेषितगोत्वादेः संबन्धान्तरज्ञानादपि तत्प्रकार-

लोमाद्यात्मकोपाधेर्लोमत्वादिरूपेण धर्मिणं विनापि भानं संभवति जातेश्च धर्मिणं विना भानं न संभवति—निर्विकल्पकस्मरणादेरस्वीकारादिति जात्यपेक्षयोपाधेर्विशेषस्य सत्त्वेपि यथा जातिमात्र- शक्तपदज्ञानस्य जातिप्रकारकव्यक्तिविशेष्यकशाब्दबोधं प्रति कारणता त्वया कल्प्यते तथा पशुपदस्य लोमाद्यात्मकोपाधिमात्रे शक्तौ स्वीकृतायामपि तादृशोपाधिमात्रशक्तपशुपदज्ञानस्यापि लोमाद्यात्मकोपाधिप्रकारकपशुव्यक्तिविशेष्यकशाब्दबोधं प्रति कारणताकल्पने बाधकं नास्ति युक्तेः साम्यादुपाधिमात्रशक्तपदादपि धर्मिविषयकशाब्दबोधसंभवादिति पशुपदस्य पशुव्यक्तौ शक्तिर्न स्वीकार्येत्यर्थः ।

अथेत्यादिना शङ्कित मामाकरः परिहरति— नेति । तत्तद्रूपेति—यस्य पदस्य यद्रूपावच्छिन्ने शक्तिग्रहो भवति तस्मात् पदात् तद्रूपावच्छिन्नस्यैव मुख्यविशेष्यतया स्मरणं भवतीति नियमात् 'लोमत्वावच्छिन्नकालिकं पशुपदम्' इत्यादिलोमत्वावच्छिन्नस्य कालिकत्वादिसंबन्धान्तरवत्तया गृहीतात् पशुपदाद् धर्मिस्मरणोद्बोधकान्तरविरहदशायां लोमादिमुख्यविशेष्यकस्मरणस्योत्पत्ति- दर्शनाच्च ततः=लोमाद्यात्मकोपाधिमात्रशक्तपशुपदात् तद्धर्मावच्छिन्नप्रकारकधर्मिस्मरणस्य=लोम- त्वावच्छिन्नलोमप्रकारकपशुव्यक्तिविशेष्यकस्मरणस्य नियमतः स्वीकारासंभवात् लोमादिमात्रशक्तत्वेन गृहीतात् पशुपदान्नियमतस्तत्प्रकारकशाब्दबोधस्य=लोमप्रकारकपशुव्यक्तिविशेष्यकशाब्दबोधस्याऽ- निर्वाहात् पशुपदस्य पशुव्यक्तौ शक्तिः स्वीक्रियते, यदि पशुव्यक्तिं विना लोमादेः स्मरणं न स्यादेव तदा लोममात्रशक्तपशुपदात् लोमभानकाले पशुव्यक्तेरपि भानं स्यादेवेति पशुपदस्य पशुव्यक्तौ शक्तिकल्पना न स्यादपि न चैवमस्ति—पशुव्यक्तिं विनापि लोमत्वादिप्रकारकलोमादि- स्मरणसंभवादित्यर्थः । 'लोमत्वावच्छिन्नकालिकं पशुपदम्' इत्येवं लोमपशुपदयोः समानकालि- कत्वसंबन्धे गृहीते 'एकसंबन्धिज्ञानमपरसंबन्धिस्मारकम्' इतिनियमात् पशुपदज्ञानेन लोममुख्य- विशेष्यकस्मरणं जायते इत्युक्तम्—"लोमत्वाद्यवच्छिन्नसंबन्धान्तरवत्तया" इति । जातिवाचक- पदस्य विशेषमाह—अविशेषितेति, गोत्वादेर्गोत्वत्वादिना विशेषितस्य भानं न भवतीत्यविशेषित-

तदसत्- शक्तिकालीनत्वादिसंबन्धावगाहिज्ञानवारणाय प्रकारत्वान्प्यत्वोभयनिरूपितशक्तिनिष्ठसासंर्गिकविषयताया निवेशस्यावश्यकतया शक्तिसंसर्गकज्ञानसंग्राहकेण रूपेण लक्षणाग्रहाऽसंग्रहात् ।

अथ धर्मशक्तपदस्य धर्मिस्मरणशाब्दबोधजनकत्वे लोमत्वात्मकोऽवच्छिन्नबोधकपश्वादिपदस्यापि धर्मिशक्तिर्विलीयेता युक्तेः साम्यात् ।

न च निर्विकल्पकरूपस्य स्मरणस्य शाब्दबोधस्य चाऽनभ्युपगमाज्जातिवाचकपदाद् व्यक्त्यऽविषयकस्मरणाद्यसंभवेन तस्य व्यक्तिस्मरणादिजनकत्वम्. धर्म्यऽविषयकस्यापि च लोमत्वाद्यवच्छिन्नविषयकस्य स्मरणादेः संभवात् पश्वा-

---

परिहरति-तदसदिति, यदि शक्तिससर्गकपदप्रकारकार्थविशेष्यकज्ञानस्य शाब्दबोधकारणत्वं स्यात्तदा ' स्वनिष्ठशक्तिकालिकत्वसबन्धेन घटपदविशिष्टो घट ' इत्यादिशक्तिकालिकत्वादिसबन्धावगाहिज्ञानादपि शाब्दबोध स्यादेव- अत्रापि शक्ते ससर्गतया पदस्य च प्रकारतया प्रवेशात्, न चैतदिष्टमिति शक्तिकालिकत्वादिसबन्धावगाहिज्ञानाच्छाब्दबोधवारणाय पदनिष्ठा या प्रकारता अर्थनिष्ठा च या विशेष्यता तदुभयनिरूपितायाः एव शक्तिनिष्ठससर्गिकविषयताया निवेश कर्तव्यस्तत्र च शक्तिससर्गकशक्तिज्ञानस्य सग्राहकेण पदनिष्ठप्रकारतानिरूपितार्थनिष्ठविशेष्यतानिरूपितशक्तिनिष्ठसांसर्गिकविषयताशालित्वेन रूपेण लक्षणाज्ञानस्य सग्रहो न सभवति- शक्तिनिष्ठसासर्गिकविषयताया शक्यार्थमात्रनिरूपितत्वेन लक्ष्यार्थनिरूपितत्वाभावादिति लक्षणाज्ञानाधीनोपस्थिते पृथगेव हेतुत्वापत्त्या प्रदर्शितगौरव तदवस्थमेवेत्यर्थ । ' स्वनिष्ठशक्तिकालिकत्वसबन्धेन घटपदविशिष्टो घट ' इत्यत्र च शक्तिनिष्ठसासर्गिकविषयताया पदप्रकारत्वार्थविशेष्यत्वनिरूपितत्वाभावादेतादृशज्ञानेन शाब्दबोधापत्तिर्नास्तीत्यवधेयम् । अत्र च ' स्वनिष्ठशक्तिसंबन्धेन घटपदविशिष्टो घट ' इत्यादिरूपेण शक्तिज्ञानमवधार्यम् ।

तार्किक शङ्कते-अथेति, यदि धर्ममात्रशक्तपदस्य धर्मिविषयकस्मरणशाब्दबोधजनकत्व स्वीक्रियते तदा युक्ते साम्याद् नाम यथा गवादिपदानां गोत्वादिधर्ममात्रशक्तत्वपि गवादिव्यक्तिविषयकशाब्दबोधजनकत्वेन गवादिव्यक्तौ शक्तिर्नास्ति तथा पशुपदस्यापि लोमादिधर्ममात्रे शक्तिरस्तु तयैव शक्त्या पशुव्यक्तिबोधजनकत्व भविष्यतीति पशुव्यक्तौ शक्तिर्न स्वीकार्येत्यर्थ ।

ननु जातिवाचकगवादिपदाद् यदि व्यक्ति त्यक्त्वा गोत्वादे स्मरणादिक स्यात्तदा निर्विकल्पकमेव स्यात्-स्वरूपत एव गोत्वादौ शक्तिस्वीकाराद् गोत्वत्वादेर्भानासभवाद् न च निर्विकल्पकरूपयो स्मरणशाब्दबोधयोः स्वीकारोऽस्तीति तस्य=जातिमात्रशक्तगवादिपदस्य व्यक्तिविषयकस्मरणशाब्दबोधजनकत्व स्वीक्रियते पशुपदस्य तु यदि धर्मिणि पशुव्यक्तौ शक्तिर्न स्यात् किंतु लोमादिरूपधर्ममात्रे शक्ति स्यात्तदा पशुपदाल्लोमादीनां लोमत्वादिरूपेणैव स्मरणादिक स्यात् तच न निर्विकल्पक येन तत्र पशुव्यक्तिभानस्यावश्यकता स्यादिति पशुव्यक्तिविषयकस्मरणशाब्दबोधौ न स्यातामिति पशुव्यक्तिविषयकस्मरणशाब्दबोधयोरुपपत्त्यर्थ तस्य=पशुपदस्य धर्मिवाचकत्व धर्मिणि शक्तिश्च स्वीक्रियते इत्याशङ्क्याह- न चेति । परिहारहेतुमाह-उपाधेरिति,

( लोमत्वाद्यवच्छिन्नमात्रवाचकत्वोपगमे न धर्मिधीः संभवतीति तस्य चिकत्वमितिवाच्यम्, उपाधेर्धर्मिविनिर्मोकेण भानसंभवरूपस्य जात्यपेविशेषस्य सत्त्वेपि जातिशक्तपदज्ञानस्य जातिप्रकारिकायामिवोपाधिशक्तज्ञानस्याप्युपाधिप्रकारकधर्मिविषयकबुद्धौ कारणताकल्पने वाधकाभावाद् उपाधिमात्रशक्तादपि धर्मिधीसंभवादितिचेत् ?,

न– लोमत्वाद्यवच्छिन्नसंबन्धान्तरवत्तया गृहीतात् पश्वादिपदाल्लोमत्वादिना लोमादिमुख्यविशेष्यकस्यैव स्मरणस्य धर्मिस्मरणोद्बोधकान्तरविरहदशायामुत्पाददर्शनात् तत्तद्रूपावच्छिन्नशक्तत्वेन गृहीतात् पदादपि तत्तद्रूपावच्छिन्नमुख्यविशेष्यकस्मरणोत्पादस्यानुभविकत्वात् ततस्तद्धर्मावच्छिन्नप्रकारकधर्मिस्मरणस्य नियमतः स्वीकारासंभवाल्लोमादिमात्रशक्तत्वेन गृहीतपदान्नियमतस्तत्प्रकारकशाब्दबोधस्याऽनिर्वाहात् । अविशेषितगोत्वादेः संबन्धान्तरज्ञानादपि तत्प्रकार-

लोमाद्यात्मकोपाधेर्लोमत्वादिरूपेण धर्मिणं विनापि भानं संभवति जातेश्च धर्मिणं विना भानं न संभवति–निर्विकल्पकस्मरणादेरस्वीकारादिति जात्यपेक्षयोपाधेर्विशेषस्य सत्त्वेपि यथा जातिमात्रशक्तपदज्ञानस्य जातिप्रकारकव्यक्तिविशेष्यकशाब्दबोधं प्रति कारणता त्वया कल्प्यते तथा पशुपदस्य लोमाद्यात्मकोपाधिमात्रे शक्तौ स्वीकृतायामपि तादृशोपाधिमात्रशक्तपशुपदज्ञानस्यापि लोमाद्यात्मकोपाधिप्रकारकपशुव्यक्तिविशेष्यकशाब्दबोधं प्रति कारणताकल्पने बाधकं नास्ति युक्तेः साम्यादुपाधिमात्रशक्तपदादपि धर्मिविषयकशाब्दबोधसंभवादिति पशुपदस्य पशुव्यक्तौ शक्तिर्न स्वीकार्येत्यर्थः ।

अथेत्यादिना शङ्कितं प्राभाकरः परिहरति– नेति । तत्तद्रूपेति–यस्य पदस्य यद्रूपावच्छिन्ने शक्तिग्रहो भवति तस्मात् पदात् तद्रूपावच्छिन्नस्यैव मुख्यविशेष्यतया स्मरणं भवतीति नियमात् 'लोमत्वावच्छिन्नकालिकं पशुपदम्' इत्यादिलोमत्वावच्छिन्नस्य कालिकत्वादिसंबन्धान्तरवत्तया गृहीतात् पशुपदाद् धर्मिस्मरणोद्बोधकान्तरविरहदशायां लोमादिमुख्यविशेष्यकस्मरणस्योत्पत्तिदर्शनाच्च ततः=लोमाद्यात्मकोपाधिमात्रशक्तपशुपदात् तद्धर्मावच्छिन्नप्रकारकधर्मिस्मरणस्य=लोमत्वावच्छिन्नलोमप्रकारकपशुव्यक्तिविशेष्यकस्मरणस्य नियमतः स्वीकारासंभवात् लोमादिमात्रशक्तत्वेन गृहीतात् पशुपदान्नियमतस्तत्प्रकारकशाब्दबोधस्य=लोमप्रकारकपशुव्यक्तिविशेष्यकशाब्दबोधस्याऽनिर्वाहात् पशुपदस्य पशुव्यक्तौ शक्तिः स्वीक्रियते, यदि पशुव्यक्तिं विना लोमादेः स्मरणं न स्यादेव तदा लोममात्रशक्तपशुपदात् लोमभानकाले पशुव्यक्तेरपि भानं स्यादेवेति पशुपदस्य पशुव्यक्तौ शक्तिकल्पना न स्यादपि न चैवमस्ति–पशुव्यक्तिं विनापि लोमत्वादिप्रकारकलोमादिस्मरणसंभवादित्यर्थः । 'लोमत्वावच्छिन्नकालिकं पशुपदम्' इत्येवं लोमपशुपदयोः समानकालिकत्वसंबन्धे गृहीते 'एकसंबन्धिज्ञानमपरसंबन्धिस्मारकम्' इतिनियमात् पशुपदज्ञानेन लोममुख्यविशेष्यकस्मरणं जायते इत्युक्तम्–"लोमत्वाद्यवच्छिन्नसंबन्धान्तरवत्तया" इति । जातिवाचकपदस्य विशेषमाह–अविशेषितेति, गोत्वादेर्गोत्वत्वादिना विशेषितस्य भानं न भवतीत्यविशेषित-

कधर्मिस्मरणस्यैवोपगमेन तत्र तादृशशक्तिसंबन्धज्ञानान्नियमतस्तत्प्रकारकधर्मिस्मरणोपगमेऽनुभवविरोधविरहात्, अत्रेष्टापत्तेरपि सुकरत्वेन प्रतिबन्द्यैर्वोपन्यस्तकत्वायोगाच्च ।

अथ गवादिपदस्य समवायेन गोत्वादिविशिष्टवाचकत्वानुपगमे तज्जन्यबोधे गोत्वादेः समवाय एव संसर्गतया भासते न तु संबन्धान्तरमित्यत्र किं नियामकम् ? वाच्यानन्तर्भावस्य समवायसाधारण्येन संबन्धान्तराऽभानप्रयोजकत्वासंभवात्, नहि जातिर्व्यक्तिं विना न भासते इतिवत् समवायं विनापि न भासते इत्यपि नियमो येन जातिशक्तिज्ञानजन्यबोधे समवायभानस्याप्यावश्यकता न तु संबन्धान्तरभानमिति स्यात्, तदादिपदात् समवायमविषयीकृत्यापि संबन्धान्तरेण गोत्वादिविशिष्टविषयकबोधोदयादितिचेत् ?,

---

गोत्वादं ' गोत्वकालिक गोपदम् ' इत्यादिरूपेण समानकालिकत्वादिसम्बन्धान्तरतया गृहीतादपि गवादिपदाद् गोत्वादिप्रकारकव्यक्तिविशेष्यकमेव स्मरणं जायते इति तत्र=गवादिपदे ( गवादिपदविषयकात्,तादृशशक्तिसम्बन्धज्ञानात्=गोत्वादिमात्रे शक्तिरूपसम्बन्धज्ञानान्नियमेन गोत्वादिप्रकारकव्यक्तिविशेष्यकस्मरणोपगमेऽनुभवविरोधाभावाद् गवादिपदस्य गोत्वादिजातिमात्रे शक्तिरुपेयते न तु व्यक्तावपि— गोत्वादेर्व्यक्तिं विना भानासम्भवाद् व्यक्तौ शक्तिं विनापि व्यक्तिभानसम्भवादित्यर्थः । नन्वेवं गवादिपदानां पश्वादिपदानां च वैषम्यं स्यादित्याशङ्क्याह— अत्रेति, अत्र=एतादृशवैषम्ये इष्टापत्तिरेवास्तीत्येतादृशवैषम्यप्रदर्शनरूपा प्रतिबन्दिर्वादिनं प्राभाकरस्य पराजयं कर्तुं न शक्नोतीत्यर्थं प्रतिभाति ।

व्यक्तौ गोत्वादिसंसर्गतया यत् समवायो भासते तत्र तार्किकः शङ्कते— अथेति । स्पष्टमेवम् । समवायसम्बन्धेन गोत्वादिविशिष्टा या व्यक्तिस्तद्वाचकत्वानुपगमे । तज्जन्यबोधे=गवादिपदजन्यबोधे । यदुच्यते वाच्यानन्तर्भावात् सम्बन्धान्तरं गोत्वादेः संसर्गतया न भासते तदा वाच्यानन्तर्भावस्तु समवायेऽप्यस्त्येव समवायेन गोत्वादिविशिष्टस्य वाच्यत्वानभ्युपगमात् केवलगोत्वादेरेव वाच्यत्वस्वीकारादित्याह— वाच्यानन्तर्भावस्येति । स्वाभिप्रायमाह— नहीति । न त्विति— गवादिपदजन्यबोधे समवायभानस्याप्यावश्यकतास्तीति हेतो सम्बन्धान्तरभानं न भवतीति सिद्ध्येतेत्यर्थः । वस्तुतस्तु " सम्बन्धान्तरभानम् " इत्यत्र ' सम्बन्धान्तरभानस्य ' इत्येव पाठो युक्तः । ननु समवायं विना गोत्वादिविशिष्टव्यक्तेः कथं भानं स्यात् क वा भानं भवतीत्याशङ्क्याह—तदादीति, 'कालो गौः स ज्ञायते ' इत्यादिस्थले समवायं विनैव तच्छब्देन कालिकसम्बन्धेन गोत्वविशिष्टकालविषयकबोधो जायते एवेति जातिशक्तिवादिमते गवादिपदजन्यबोधे नियमेन समवायभानं नोपपद्यते इति समवायेन गोत्वादिविशिष्टव्यक्तावेव शक्तिः स्वीकार्या तथा च समवायेन गोत्वादिविशिष्टव्यक्तेर्वाच्यत्वे समवायस्य वाच्यान्तर्भावेन नियमात् समवायभानमुपपद्यते, सम्बन्धान्तरस्य च वाच्यान्तर्भावित्वाभावाद् भानापत्तिर्नास्तीत्यर्थः ।

एवं सति ज्ञानशक्तिरेवादरणीया तथा च गवादिपदस्य समवायेन गोत्वादिप्रकारकज्ञाने एव शक्तेरुपगमात् ततो नाऽभ्रान्तानां संबन्धान्तरेण तत्प्रकारकधीः— तत्संबन्धेन तत्प्रकारकज्ञानशक्तिग्रहस्यैव तादृशबोधहेतुत्वादिति वाच्यानन्तर्भावस्य समवायाऽसाधारण्येन संबन्धान्तरभानप्रयोजकत्वासंभवादिति कृतं पल्लवितेन ॥

॥ इति श्रीमहामहोपाध्यायन्यायसिद्धान्तवागीशश्रीगदाधरभट्टाचार्यविरचितः शक्तिवादविचारः समाप्तः ॥

---

उक्ताशङ्कायामाह— एवं सतीति, यदि जातिमात्रे शक्तिस्वीकारेण गवादिपदजन्यबोधे नियमेन समवायमानं नोपपद्यते तदा गवादिपदस्य समवायेन गोत्वादिप्रकारकज्ञाने एव शक्तिः स्वीकार्या तथा च समवायस्य वाच्यान्तर्भावेण गोत्वादेः संसर्गतया समवायस्यैव भानं संभवतीति ततः=गवादिपदादभ्रान्तानां सम्बन्धान्तरेण गोत्वादिप्रकारकभानस्यापत्तिर्नास्तीत्यर्थः।गवादिपदादभ्रान्तानां समवायातिरिक्तसम्बन्धेन गोत्वादिप्रकारकशाब्दबोधासंभवे हेतुमाह— तत्सबन्धेनेति, यस्य पदस्य येन सबन्धेन यत्प्रकारकज्ञाने शक्तिग्रहो जायते तस्मात् पदादभ्रान्तस्य तेनैव संबन्धेन तत्प्रकारकशाब्दबोधो जायते इतिनियमेन गवादिपदानां समवायेनैव गोत्वादिप्रकारकज्ञाने शक्तिग्रहाद् गवादिपदजन्यशाब्दबोधे गोत्वादेः संसर्गतया समवाय एव भासते न सबन्धान्तरमित्यर्थः । समवायेन गोत्वादिप्रकारकज्ञाने शक्तिग्रहात् समवायस्य वाच्यान्तर्भूतत्वेन वाच्यानन्तर्भावः समवायसाधारणो नास्ति येन वाच्यानन्तर्भावस्य समवायातिरिक्तसबन्धभानप्रयोजकत्वं स्यादित्याह— वाच्यानन्तर्भावस्येतिशम् ॥

श्रीमद्गुरुमुखाज्ज्ञातपदार्थानां हि संग्रहः ।
स्वकीयज्ञानरक्षार्थं कृतोयं युक्तयत्नतः ॥
व्याख्या व्युत्पत्तिवादस्य ह्यादर्शाख्या प्रकाश्य च ।
बालेभ्यः शक्तिवादस्य ह्यादर्शोयं प्रकाशितः ॥
अनेकग्रन्थनिर्माणश्रमसंदोहधर्षितम् ।
शरीरं शीर्णतां प्राप्तमेतद् व्यसनदुष्फलम् ॥
वन्दे श्रीमद्धयग्रीवं मन्देभ्यः करुणानिधिम् ।
विद्यागुरुं तथा वन्दे श्रीगङ्गाधरशास्त्रिणम् ॥
यः साङ्ख्ये कपिलः पतञ्जलिरथ शाब्दे कवित्वे परं
श्रीहर्षोऽद्वयदर्शने शिवतनुस्तर्केषु यो गौतमः ।
मीमांसामतजैमिनिर्ध्रुवमुपाध्यायो महद्भ्यो महान्
स्याऽऽदीदृग् गुरुर्विजयते शास्त्री स गङ्गाधरः ॥

॥ इति पञ्चनदीय ( पंजाबी ) पण्डितसुदर्शनाचार्यशास्त्रिप्रणीता
शक्तिवादस्याऽऽदर्शाख्या व्याख्या
समाप्ता ॥

॥ श्री ॥

## पंजाबीपण्डितसुदर्शनाचार्य शास्त्रिप्रणीतमुद्रितपुस्तकानां सूचनिका

पुस्तकनाम-

शास्त्रदीपिकाप्रकाश

व्युत्पत्तिवादादर्श

शक्तिवादादर्श

विशिष्टाद्वैताधिकरणमाला

अद्वैतचन्द्रिका

संस्कृतभाषा

श्रीरङ्गदेशिकशतकम्

नीतिरत्नमाला

भगवद्गीताभाषाभाष्य

भगवद्गीतासतसई

श्रीसूतियतीन्द्रवन्दना

आल्वारचरितामृत

अष्टादशरहस्यभाषा

स्त्रीचर्या

श्रीवैष्णवव्रतनिर्णय

शङ्खचक्रतिलकवन्धपत्र

अनर्घनलचरित्रनाटक

नागरीदर्पण ( हिंदीव्याकरण )

## प्राचीनपुस्तकानां सूचनिका

| नाम | को० रु० आ० |
|---|---|
| अपरोक्षानुभूति-श्रीशङ्कराचार्यकृत और स्वामिश्रीविद्यारण्यमुनिकृत दीपिका सहित तथा श्रीयुत प० रामस्वरूपजीकृत भाषाटीकासमेत । जिसमें-संक्षेपसे वेदान्तप्रक्रियाका सरलरीतिसे भली प्रकार वर्णन है . . . . . | ०-१० |
| अद्वैतसुधा . . . . | ०-१२ |
| पञ्चदशी-सटीक-प० रामकृष्णाख्य विद्वान्‌की तत्त्वविवेकव्याख्या टीका सहित . . . . . | २-० |
| ब्रह्मसूत्र-( शारीरक ) शांकरभाष्यसहित, इसमें शाङ्करभाष्यकी गोविन्दानन्दकृत रत्नप्रभा, सर्वतन्त्रस्वतन्त्र वाचस्पतिमिश्रकृत भामती, आनन्दगिरिकृत न्यायनिर्णय यह तीनों टीकाएँ संयुक्त हैं, . . . . . | १०-० |

पुस्तकप्राप्तिस्थानम्-

खेमराज श्रीकृष्णदास

श्रीवेंकटेश्वरस्टीमयन्त्रालय ( प्रेस )

बंबई.